श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# तत्त्वसङ्ख्यानम्

[ प्रथमपद्यरूप-प्रथमभागात्मकम् ]

श्रीमज्जयतीर्थ(टीकाकृत्पाद)कृत 'विवरण' ख्यया

**टीकया**

**अपूर्वाभिः षट्टिप्पणीभिश्च**

उद्बोधितम्

श्रीमन्मध्वसिद्धान्ताभिवृद्धिकारिणीसभाऽध्यक्षाणां

**श्री१००८श्रीमत्सत्यप्रमोदतीर्थश्रीचरणानाम्**

आज्ञानुसारेण

दिवाण उत्तरादिमठ इत्येतेषां कृते

**'पूर्णप्रज्ञप्रकाशनम्'**

इतिनामकसंस्थायाः सञ्चालकेन

**भीमसेन बाळाचार्य वरखेडकर**

इत्यनेन

**प्रद्युम्नाचार्य-नरसिंहाचार्य-स्मारकसमितेः**

नैकविदुषां साहाय्येन सम्पाद्य संशोध्य च

**तिरुमल-तिरुपति-देवस्थानस्य आर्थिकसहाय्येन**

पण्ढरपुरे, हैद्राबादे, बेङ्गळूरे च

प्रकाशितम्

# तत्त्वसङ्ख्यानम्

श्रीमज्जयतीर्थ(टीकाकृत्पाद)कृत'विवरण'ाख्यया

**टीकया**

| | |
|---|---|
| १) सत्यप्रज्ञतीर्थकृत– | विवरणम्, |
| २) केशवभट्टारक(गुरुराज)कृत– | भावचन्द्रिका, |
| ३) विठ्ठलभट्टकृत– | टीकार्थदीपिका, |
| ४) मुद्गलनृसिंहकृत– | भाववर्णनम्, |
| ५) काशीतिम्मणाचार्यकृत– | तात्पर्यपञ्चिका, |
| ६) भगवत्कृत– | मन्दारमाला, |

**इत्येताभिः षड्टिप्पणीभिश्च**

उद्घोषितम्

श्रीमन्मध्वसिद्धान्ताभिवृद्धिकारिणीसभाऽध्यक्षाणां

**श्री १००८ श्रीमत्सत्यप्रमोदतीर्थश्रीचरणानाम्**

आज्ञानुसारेण

दिवाण उत्तरादिमठ इत्येतेषां कृते

**'पूर्णप्रज्ञप्रकाशनम्'**

इतिनामकसंस्थायाः सञ्चालकेन

**भीमसेन बाळाचार्य वरखेडकर**

इत्यनेन

नैकविदुषां साहाय्येन सम्पाद्य संशोध्य च

पण्ढरपुरे, हैद्राबादे, बेङ्गलूरे च

प्रकाशितम्

# पूर्णप्रज्ञप्रकाशनम्

अस्या संस्थायाः कार्यालयाः—

**प्रधानकार्यालयः**

उत्तरादिमठ पो. पण्ढरपूर (४१३३०४) महाराष्ट्र

उपकार्यालयाः

१) सुधामुद्रणमन्दिरम्, उत्तरादिमठीयावारः बसवनगुडी,
पो. बेङ्गलूर (५६०००४) कर्नाटक

२) ४–२–४७ चौधरीबाग, सुलतानबझार
पो. हैद्राबाद (५०००0१) आन्ध्र

३) १०२/२ गोखलेनगरवसतिः रामन्थापुरम्,
पो. हैद्राबाद (५०००९९१) आन्ध्र

---

अयं ग्रन्थः

**धनञ्जय बाळाचार्य वरखेडकर**

इत्यस्य

**सुधामुद्रणमन्दिरम्**

उत्तरादिमठीयावारः, बसवनगुडी, बेङ्गलूर– ४.

इत्यस्मिन्मुद्रणालये मुद्रितः

॥ श्रीमद्दिग्विजयरामो विजयते ॥

श्रीमदाचार्यैः प्रणीतेषु सर्वमूलग्रन्थेषु कथालक्षणादीनि प्रकरणानि आकृतितस्तनूनि सन्त्यपि मारुतेरितस्फुलिङ्गवद्विपक्षकक्षक्षपणातिदक्षाणि, चिन्तितार्थवितरणे समतिक्रान्तचिन्तारत्नानि चेत्येवं तेषामद्भुतो महिमातिशयः

वादादयः प्रकरणस्फुलिङ्गास्तनवोऽप्यलम् ।
विपक्षकक्षं क्षिण्वन्ति मारुतेन त्वयेरिताः ॥ इत्यादिः

श्रीत्रिविक्रमपण्डिताचार्यैः समहादरं समुद्घोषितः सुमध्वविजये दरीदृश्यते । परापरतत्वस्वरूपनिरूपणपरस्य श्रीतत्वसङ्ख्यानप्रकरणस्य च सर्वज्ञकल्पैः श्रीमट्टीकाकृत्पादैर्विरचिता टीका सिद्धान्ताध्ययनाध्वगानां प्रतिपदं रत्नप्रदीपायिता विद्योतते । तस्याश्च निगूढगभीरभावमाविष्कुर्वन्त्यस्तत्वार्थमधिजिगमिषूणां सुभृशमुपकुर्वन्त्यो नैकाः टिप्पण्यः प्रातःस्मरणीयशुभनामधेयैः पण्डिततल्लजैर्निर्मिता इतःपूर्वं प्रकाशिता नितान्तं विलसन्ति ।

इदानीं पुनः प्रायोऽप्रकाशितपूर्वाः षट्टिप्पण्योऽस्माभिर्यत्नेन सङ्गृह्य सङ्कलय्य प्राकट्यं नीयन्ते ।

आशास्महे बुभूषव एतदध्ययनसमासादितशुद्धज्ञानेनात्मानं समुद्धरेयुरिति ।

श्रीमदुत्तरादिमठाधीशाः

**श्रीमत्सत्यप्रमोदतीर्थश्रीचरणाः**

# पूर्णप्रज्ञप्रकाशनम्

अस्या संस्थायाः कार्यालयाः—

**प्रधानकार्यालयः**

उत्तरादिमठ पो. पण्ढरपूर (४१३३०४) महाराष्ट्र

उपकार्यालयाः

१) सुधामुद्रणमन्दिरम्, उत्तरादिमठीयावारः बसवनगुडी,
पो. बेङ्गलूर (५६०००४) कर्नाटक

२) ४–२–४७ चौधरीबाग, सुलतानबझार
पो. हैद्राबाद (५००००१) आन्ध्र

३) १०२/२ गोखलेनगरवसतिः रामन्थापुरम्,
पो. हैद्राबाद (५००९९१) आन्ध्र

---

अयं ग्रन्थः

**धनञ्जय बाळाचार्य वरखेडकर**

इत्यस्य

**सुधामुद्रणमन्दिरम्**

उत्तरादिमठीयावारः, बसवनगुडी, बेङ्गलूर– ४.

इत्यस्मिन्मुद्रणालये मुद्रितः

॥ श्रीमद्दिग्विजयरामो विजयते ॥

श्रीमदाचार्यैः प्रणीतेषु सर्वमूलग्रन्थेषु कथालक्षणादीनि प्रकरणानि आकृतितस्तनूनि सन्त्यपि मारुतेरितस्फुलिङ्गवद्विपक्षकक्षक्षपणातिदक्षाणि, चिन्तितार्थवितरणे समतिक्रान्तचिन्तारत्नानि चेत्येवं तेषामद्भुतो महिमातिशयः

वादादयः प्रकरणस्फुलिङ्गास्तनवोऽप्यलम् ।
विपक्षकक्षं क्षिण्वन्ति मारुतेन त्वयेरिताः ॥ इत्यादिः

श्रीत्रिविक्रमपण्डिताचार्यैः समहादरं समुद्घोषितः सुमध्वविजये दरीदृश्यते । परापरतत्वस्वरूपनिरूपणपरस्य श्रीतत्वसङ्ख्यानप्रकरणस्य च सर्वज्ञकल्पैः श्रीमट्टीकाकृत्पादैर्विरचिता टीका सिद्धान्ताध्ययनाध्वगानां प्रतिपदं रत्नप्रदीपायिता विद्योतते । तस्याश्च निगूढगभीरभावमाविष्कुर्वन्त्यस्तत्वार्थमधिजिगमिषूणां सुभृशमुपकुर्वन्त्यो नैकाः टिप्पण्यः प्रातःस्मरणीयशुभनामधेयैः पण्डिततल्लजैर्निर्मिता इतःपूर्वं प्रकाशिता नितान्तं विलसन्ति ।

इदानीं पुनः प्रायोऽप्रकाशितपूर्वाः षट्टिप्पण्योऽस्माभिर्यत्नेन सङ्गृह्य सङ्कलय्य प्राकट्यं नीयन्ते ।

आशास्महे बुभूषव एतदध्ययनसमासादितशुद्धज्ञानेनात्मानं समुद्धरेयुरिति ।

श्रीमदुत्तरादिमठाधीशाः
**श्रीमत्सत्यप्रमोदतीर्थश्रीचरणाः**

॥ श्रीगुरुराजो विजयते ॥

## प्र स्ता व ना

'चित सञ्चेतने'इतिधातोः 'चेतयति= जानाति'इति व्युत्पत्त्या 'चेतन-शब्दवाच्याः सर्वेऽपि ज्ञानशक्तिमन्तः इति तु सुस्पष्टमेव ।

'विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥'

इत्यादिसुभाषिताद्युक्त्यनुसारेण तस्य ज्ञानिनः श्रैष्ठ्यञ्चापि जगत्प्रसिद्धमेव । तेष्वप्येतेषु स्वकीयपरकीयोभयचैतन्यरूपज्ञानशक्तिं स्वकीयपरकीयोभय-कल्याणार्थम् उपयोजयिता मानवो मूर्धन्यायितः ।

अनेनैव मानवेन अल्पज्ञान्प्रति सकलसुजनसुलभ-सुदीर्घतमदुःखा-सम्भिन्नसुखरूप-परमपुरुषार्थापरपर्यायमोक्ष-प्राप्त्युपायम् उपदेष्टुं शास्त्रं विनि-र्मितम् ।

'पिण्डे पिण्डे मतिर्भिन्ना कुण्डे कुण्डे नवं पयः ।
जातौ जातौ नवाचारः नवा वाणी मुखे मुखे ॥'

इतिन्यायेन अस्मिन्विषयेऽपि दैविकादैविक-लौकिकालौकिक-नैकविध-शक्ति-सम्पन्नैः स्वस्वानुयायिसमूहेषु प्रकटितानेकचमत्कृतिभिः आश्चर्यचकितस्वस्वानुया-यिनमस्कृतैः नैकैः महात्मभिः स्वस्वचैतन्यस्वरूपानुगुणमेव सैद्धान्तिकमतभेदमनु-सृत्य नैकानि शास्त्राणि रचितानि दृश्यन्ते । परमेतेष्वपि सर्वशास्त्रेषु अविप्रतिपन्नोऽस्ति एको विषयः; यत् **'तत्त्वज्ञानमेव पुरुषार्थसाधनम्'**-इति ।

तत्र केचित् 'तत्त्व'पदस्य अर्थे विप्रतिपद्यन्ते, तर्हि केचित् परमपुरुषार्थसाधनीभूते तत्त्वस्य विज्ञाने, एके तु तत्पुरुषार्थस्वरूपे, अपरे पुनः 'तत्पुरुषार्थस्य परमत्वे, अन्ये च 'तत्त्वज्ञानस्य परमपुरुषार्थसाधनत्वं साक्षाद्वा परम्परया वा'इतिविषये । एवं तत्तद्विषयं सुदीर्घतमदुराग्रहविग्रहेण साधयितुं रचितानि पर्वतप्रायाणि नैकानि शास्त्राणि, दूरतः तत्सङ्ख्यास्थौल्य-

दुर्बोधत्वादिविशेषप्रातिस्विकगुणगणश्रवणमात्रेणैव परमपुरुषार्थसाधनाभिलाषाऽपि च तात्कालिकाधिकक्लेशकल्पनामात्रेणैव कपोणिगुडायते ।

**तमिमं विषयं** प्रत्यक्षमध्यक्षीकुर्वाणा भक्तामरतरवः सकलदुर्मतध्वान्तदिवाकराः **श्रीमन्मध्वाचार्याः** 'तत्त्व'पदार्थम्, तस्य विज्ञानम्, तस्य च अभीष्टसाधनत्वम्, इत्येवमादिविषयमेव स्वप्रणीतेषु **गीताभाष्य**-आदि-**बिल्वमङ्गलः साधुः**-इत्यन्तेषु सर्वेष्वपि ग्रन्थेषु सर्वपक्षविमर्शनपूर्वकं यत् स्थापयाञ्चक्रुः तत् अच्छेद्यम्, अभेद्यम्, सार्वतोमुख्येन सकलसज्जनानाम् अनुभवसिद्धञ्चापीति वरीवर्ति ।

तद्ग्रन्थान्तर्गत एव **'तत्त्वसङ्ख्यानम्'**इतिनामकः प्रकरणग्रन्थोऽयम् तत्त्वस्वरूपादिविवेचने नितराम् उपकारकः ॥

यथा खलु "यः कोऽपि रोगार्तः 'स्वीयरोगस्य किं नामधेयम् ?, के च तस्य प्रकाराः ? के च उपप्रकाराः ? किञ्च एतस्य मूलम् ? कश्च अस्यास्ति परिहारकः ?, किञ्च कर्तव्यं तन्निवृत्त्यै मया ?, कश्च तन्निवर्तककार्यकलापेषु अनुष्ठानक्रमः ?'इत्यादिकं विमर्शपूर्वकं सम्यग्ज्ञात्वैव विमुच्यते तस्मात् रोगात्; नान्यथा;"इत्येतत् प्रमाणप्रमितमेव; एवमेव हि अनाद्यविद्याकाम्यकर्मनिबद्धः पुत्रादिनक्रनिगृहीतशरीरकः संसारी एतस्मात् संसारा मुमुक्षुश्चेत्तत् तेनापि,

'संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य ।
व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥'

इत्यादिकं शङ्कराचार्यादिभिरपि यद्वर्णितम् तदनुसारेण " 'कीदृश-नैकविध-स्वाभाविक-अगणित-गुणागुण-गण-अपरिमितभारभरितं प्रत्यक्षादिबुद्धिसन्निहितं तत्त्वापरनामकं परतन्त्रवस्तुजातम् इदं कीदृश-अनन्तानन्त-स्वाभाविक-अगणित-अपरिमितगुणगणमण्डितस्य भक्तपारवश्यादिभिरप्यशेषविशेषैः ओतप्रोतस्य तत्त्वापरनाम्नः परमात्मन एव वशं वर्तते ?'इत्येतदवश्यं विज्ञेयम्; तद्विज्ञानेनैव च तस्मात् मोक्षः तस्य निश्चितः, नान्येन केनापि;"इत्येतदपि निखिलैः प्रमाणैः निर्धारितं दरीदृश्यते ।

तदेतेषां तत्त्वानाम् तत्स्थधर्माणाञ्च यः मोक्षसाधनीभूतो गणनाप्रकारः तम् तद्विज्ञानदार्ढ्यार्थं तद्विरुद्धप्रकारनिराकरणपूर्वकं **तत्त्वसङ्ख्यान**-आख्ये अस्मिन् प्रकरणग्रन्थे निरूपयाञ्चक्रुः सत्सिद्धान्तप्रतिष्ठापनैकदीक्षाः वेदान्त-साम्राज्यचक्रवर्तिनः श्रीमन्मध्वाचार्य-इत्यादि-अन्वित-अनेक-अपरनामानः **श्रीमदानन्दतीर्थभगवत्पादाचार्यवर्याः ।**

गच्छता कालेन क्षीणमतिमतां 'तत्त्वसङ्ख्यान'विज्ञानासमर्थानां सद्भ-क्तानाम् उपकारार्थं शेषाविष्टाः इन्द्रावतारसम्भूताः टीकाकृत्पादाचार्य-इति-सार्थनामानः **श्रीमज्जयतीर्थश्रीमच्चरणाः** 'तत्त्वसङ्ख्यान'स्य टीकां **विवरण**-नाम्नीं रचयामासुः ।

समयसमीरसंसृताः तच्छिष्यप्रशिष्याः तट्टीकासमलङ्कृतमपि तत्त्व-सङ्ख्यानं न शेकुः सम्यग्विज्ञातुम् यदा यदा तदा तदा नैकाः टिप्पणी-काराः तट्टीकाशयं विविधप्रणालीभिः स्पष्टयामासुः । तासु टिप्पणीषु विज-यीन्द्रतीर्थ-राघवेन्द्रतीर्थ-सत्यधर्मतीर्थ-रोट्टीवेङ्कटभट्ट-यदुपत्याचार्य-श्रीनिवास-तीर्थ-आदिभिः विरचिताः टिप्पण्यः नैकत्र प्रकटिताः सत्यः स्वस्ववैशिष्ट्यम्, टीकायाः भावगाम्भीर्यम्, तत्त्वसङ्ख्यानस्य च अनन्यसाधारणमहत्त्वमपि प्रस्थापयन्त्यः चकासिताः । परम् अधुना तास्वपि **नैकाः टिप्पण्यः दुर्लभाः सञ्जाताः ।**

एवमेव तत्र तत्र प्राचीनग्रन्थसङ्ग्रहेषु इतोऽप्यधिकाः अपि नैक-अपूर्वविषयविमर्शिकाः टिप्पण्यः उपलभ्यन्ते ।

'बालसङ्घमपि बोधयद्भृशं दुर्निरूपवचनञ्च पण्डितैः ।'

इत्यादि-नारायणपण्डिताचार्यकृत-श्रीमदाचार्यग्रन्थवर्णनानुसारं अधिकारानुरूपं तद्भावं प्रकटयितुं **तासामपि प्रकाशनम् आवश्यकमेव ॥**

श्रीहरिगुरूणां प्रेरणया इमं विषयमधिकृत्यैव मया उत्तरादिमठाधीशाः **श्री १००८ श्रीमत्सत्यप्रमोदतीर्थाः** वर्षत्रयात्पूर्वं श्रीमट्टीकाकृत्पादवृन्दावन-समीप एव चातुर्मास्ये प्रार्थिताः । कार्यगौरवम्, विषयगौरवम्, शिष्यस्य औत्सुक्यञ्चापि अवलोक्य सपद्येव सन्तुष्टचेतसा ते **अस्मिन्कार्ये विशेषं**

सहयोगं सङ्कल्पयाश्चक्रुः । तदनु च वर्षद्वयात्पूर्वं मद्रास-सभायाम् इमा टिप्पण्यः पञ्चसहस्ररूपकधनसाहाय्येन सार्धमेव अनुग्राहयामासुः ।

ततो वर्षद्वयात्मक-सुदीर्घ-सकण्टककालं श्रीहरिगुर्वनुग्रहेणैव संशोधन-लेखन-मुद्रणादिना समतीत्य प्रकाशनावस्थां सम्प्राप्तः नैकेषां नैकोपकार-भारभरितः कृतज्ञः किमपि वक्तुं न प्रभवे ।

तथापि विशेषतः— श्री १००८ श्रीमत्सत्यप्रमोदतीर्थानां पञ्चसहस्र-रूपकैः सार्धं ग्रन्थदानम्, श्री गुरुराजाचार्य मानवी इत्येतैः कृतः एतद्ग्रन्थशोधनलेखनकालीनः सुदीर्घः एकान्तश्च आश्रयः, श्री. पं. पितृव्य-पादानां आनन्दतीर्थाचार्य वरखेडकर इत्येतेषाञ्चापि तथैव संशोधनकालीनः संशोधनमार्गदर्शनेन स्वयं संशोधनसहयोगेन च सहितः आश्रयः, श्री.पं.ती. पितृपादानां बाळाचार्य वरखेडकर इत्येतेषां स्वयं संशोधनसहितं ५० पत्रपर्यंतं स्वकीये 'संस्कृतिमुद्रणालय'नामके मुद्रणालये मुद्रणम्, अनुजस्य सुधामुद्रण-मन्दिराधिपतेः चि. धनञ्जयस्य पर्याप्तमुद्रणव्यय(२०,००० रू.)अभावेऽपि स्वयं शेषपूरणेन मुद्रणभारवहनम्, द्वितीयानुजस्य चि. द्वैपायनस्य नैपुण्येन सीसकाक्षरसंयोजनम्, एतावद्भारवहनदार्ढ्यं सुपरीक्ष्य इव श्रीपद्मावती-पतिना श्रीनिवासेन प्रेरितस्य एव तन्मन्दिरमुख्याधिकारिणः श्री.P.V.R.K. प्रसादराव इत्यस्य एतद्ग्रन्थस्य भागद्वयार्थं साधारणतया १०,००० रूपकाणाम् अनुदानम्, श्री. हेब्बणी रंगनाथाचार्य इत्येतेषां मुद्रणकालीनः सुदीर्घः आश्रयः, तथा नैकेषां नैकान् सहयोगांश्च संस्मृत्य तन्निष्कृतिमार्गमनुपलभमानः तेषां क्षेमस्थैर्यायुरारोग्यैश्वर्याद्यभिवृद्ध्यर्थं परमात्मानमेव प्रार्थये ।

एतादृशसच्छास्त्रसेवाभाग्यञ्च एतद्ग्रन्थाधिकृतः रमाब्रह्मादिसकलास्वतन्त्र-तत्त्वाधिपतिः भगवान् श्रीविष्णुः वारं वारं वितरतु इति च सम्प्रार्थ्य विरमे ।

दुर्मतिः १९०३ वरखेडकरोपाह्वः बाळाचार्यतनूजः भीमसेनः

माघ शु. ९ सञ्चालकः

मध्वनवमी

**पूर्णप्रज्ञप्रकाशनम्**

पंढरपूर, बेङ्गलूर, हैद्राबाद.

# संकेतविज्ञानम्

त./त.सं./तत्त्वसं.= तत्त्वसङ्ख्यानम् । श्लो.= श्लोकः ।

टी.= जयतीर्थविरचिता टीका । टि.= टिप्पणी/टिप्पणम् ।

स./स.टि.= सत्यप्रज्ञतीर्थीयटिप्पणी । टि.= टीकायाः व्याख्यानम् ।

के./के.टि.= केशवभट्टीयटिप्पणी ।

वि./वि.टि.= विठ्ठलभट्टीयटिप्पणी ।

मु./मु.टि.= मुद्गलनृसिंहीयटिप्पणी ।

का./का.टि.= काशी(उपाध्याय)टिप्पणी ।

भ./भ.टि.= भगवन्तरावीयटिप्पणी ।

सा.= सामान्यः । प.= परिच्छेदः ।

पृ.= पृष्ठम् । पं.= पङ्क्तिः ।

सां.= साङ्कम् । नि.= निरङ्कम् ।

अ.= अध्यायः/अधिकरणम् । अधि.= अधिकरणम् ।

ब्र.सू.= ब्रह्मसूत्रम् । पा.सू.= पाणिनीसूत्रम् ।

क्र.= क्रमाङ्कः । सि.कौ.= सिद्धान्तकौमुदी

धा.= धातुः/धातुपाठः । ऋ.सं.= ऋग्वेदसंहिता ।

उ./उप.= उपनिषत् । आ.= आरण्यकम् ।

भा.= भाष्यम् । ब्रा.= ब्राह्मणम् ।

तै.= तैत्तिरीयम् । बृ.= बृहदारण्यक ।

श्वे.= श्वेताश्वतर । का.= काठक ।

श.= शतपथम् ।

त.वि.= तत्त्वविवेकः । त.द्यो.= तत्त्वोद्योतः

त.नि./वि.त.नि.= विष्णुतत्त्वनिर्णयः ।

मा.ख.= मायावादखण्डनम् ।

मि.ख.= प्रपञ्चमिथ्यात्वानुमानखण्डनम् ।

भाग.= भागवतम् । भार.= भारतम् ।

ता.नि.= तात्पर्यनिर्णयः । सुधा= न्यायसुधा

खं.खं.खा.= खण्डनखण्डखाद्यम् ।

## उपयोजितग्रन्थपरिचयः

१) **तत्त्वसङ्ख्यानम्**– श्रीमध्वाचार्य(आनन्दतीर्थ)विरचितप्रकरणग्रन्थः। अस्य प्रकाशनचतुष्टयमुपयोजितम्– १) नं. कृष्णमूर्तिभिः सम्पादितम्, २) R. राममूर्त्याचार्यैः सम्पादितम्, ३) मागडी रंगनाथाचार्यैः सम्पादितम्, ४) श्री. विद्यामान्यतीर्थैः प्रकाशितञ्चेति।

२) **त.टी.'विवरणम्'**– श्रीटीकाचार्य(जयतीर्थ)विरचितम्। अस्यापि उपर्युक्तप्रकारेण ग्रन्थचतुष्टयम् उपयोजितम्।

३) **त.टी.टि.'विवरणम्'**– श्रीसत्यव्रततीर्थशिष्य-सत्यप्रज्ञतीर्थविरचितम्। अस्य उत्तरादिमठस्थं लिखितग्रन्थद्वयमुपयोजितम्।

४) **त.टी.टि. 'भावचन्द्रिका'**– श्रीकेशवभट्टविरचिता (गुरुराजीया)। अस्याः उत्तरादिमठस्थं लिखितं ग्रन्थपञ्चकमुपयोजितम्।

५) **त.टी.टि. 'टीकार्थदीपिका'**– श्रीविट्ठलभट्टविरचिता। अस्याः उत्तरादिमठस्थं लिखितं ग्रन्थद्वयमुपयोजितम्।

६) **त.टी.टि. 'भाववर्णनम्'**– श्रीछलारीनृसिंहाचार्यशिष्य–मुद्गलनृसिंह-विरचितम्। अस्य उत्तरादिमठस्था लिखिता एकैव प्रतिः उपलब्धा।

७) **त.टी.टि. 'तात्पर्यपञ्चिका'**– श्रीउपाध्याय (काशीतिम्मण्णाचार्य)-विरचिता। अस्य उत्तरादिमठस्थं लिखितं ग्रन्थपञ्चकम्, तथा श्रीविद्या-मान्यतीर्थप्रकाशितग्रन्थश्च उपयोजितः।

८) **त.टी.टि. 'मन्दारमाला'**– श्रीभास्करवेंकटवराहशिष्यभगवद्विरचिता। अस्याः उत्तरादिमठस्थं लिखितं ग्रन्थद्वयमुपयोजितम्।

९) **सर्वमूलम्** (अत्रस्थं–**ब्र.सू.भा., अनुव्याख्यानम्,**) श्रीमध्वाचार्यविर-चितम्। अस्य नं. कृष्णमूर्तिसम्पादिता मुद्रिता प्रतिः।

१०) **दशप्रकरणानि** (अत्रस्थाः **टी.टि. समेतम्- त.सं., त.वि., त.द्यो., त.नि.** च)– श्रीमध्वाचार्यविरचितम्।
अस्य श्रीविद्यामान्यतीर्थप्रकाशिता टीकाटिप्पण्यादिसमेता मुद्रिता प्रतिः।

११) **भागवतम्**– वेदव्यासविरचितम् ।
अस्य प्राचीना मुद्रिता प्रतिः ।

१२) **भागवतटिप्पणी**– श्रीविजयध्वजतीर्थविरचिता ।
अस्याः प्राचीना मुद्रिता प्रतिः ।

१३) **सिद्धान्तकौमुदी**– श्रीभट्टोजी दीक्षितविरचिता ।
अस्याः प्राचीना मुद्रिता प्रतिः ।

१४) **तत्त्वप्रकाशिका**– श्रीटीकाचार्यविरचिता ( ब्र.सू.भा.टी.)

१५) **सुधा**– श्रीटीकाचार्यविरचिता ( ब्र.सू. अनुव्याख्यानस्य टीका )
अस्याः कुम्भकोणे प्रकाशिता प्रतिः ।

१६) **विष्णुसहस्रनामस्तोत्रम्**– श्रीवेदव्यासविरचितम् ।
अस्य गोरखपुरे प्रकाशिता प्रतिः ।

१७) **गीता**– श्रीवेदव्यासविरचिता । अस्याः गोरखपुरे प्रकाशिता प्रतिः ।

१८) साङ्ख्यकारिका– श्री गौडपादविरचिता मुद्रिता प्रतिः ।

१९) **ब्रह्मसूत्राणि**– श्रीवेदव्यासरचितानि । सर्वमूलस्थानि ।

२०) **अमरकोषः**– अमरसिंहः । अस्य चौखम्बा वाराणसी प्रकाशिता हिन्दीभाषाप्रतिः ।

२१) **भारतम्**– श्रीवेदव्यासविरचितम् । अस्य प्राचीना मुद्रिता प्रतिः ।

२२) **मध्वसिद्धान्तसारः**– कुम्भकोणे प्रकाशिता प्रतिः ।

२३) **भागवततात्पर्यनिर्णयः**– श्रीमध्वाचार्यविरचितः । सर्वमूलस्थः ।

२४) **तन्त्रसारः**– ” ”

२५) **द्वादशस्तोत्रम्**– ” । शिंगरे इत्येतैः प्रकाशिता प्रतिः

२६) **अणुभाष्यम्**– ” । रा. बा. अवधानी इत्येतैः ”

२७) **खण्डनखण्डखाद्यम्**– श्रीहर्षविरचितम् । हिन्दीभाषासमेतमुद्रितम् ।

## तत्त्वसङ्ख्यानस्थविषयानुक्रमणिका


| विषयः | सा.प.क्र. | पृ.क्र. |
|---|---|---|
| १) तत्त्वद्वैविध्यम् | ४ तः ८ | प्र.भा.४१ तः १०९ |
| २) स्वतन्त्रतत्त्वप्रदर्शनम् | ९ | ११० तः १२५ |
| ३) अस्वतन्त्रतत्त्वनिरूपणम् | १० तः ४२ | १-१२६ तः १-२३३ |
| १] अस्वतन्त्रतत्त्वद्वैविध्यम् | १० तः १६ | १२६ तः २१२ |
| २] अभावनिरूपणम्-अभावत्रैविध्यम् | १७ तः २१ | द्वि.भा. ३ तः ५९ |
| ३] भावनिरूपणम् | २२ तः ४२ | ६० तः २२२ |
| १) भावद्वैविध्यम् | २२ | ६० तः ७२ |
| २) चेतननिरूपणम् | २३ तः ३१ | ७३ तः १४९ |
| १. चेतनद्वैविध्यम् | २३ | ७३ तः ८९ |
| २. दुःखास्पृष्टप्रदर्शनम् | २४ | ९० तः ९८ |
| ३. दुःखस्पृष्टप्रदर्शनम् | २४ | ९० तः ९[illegible] |
| ४. दुःखस्पृष्टद्वैविध्यम् | २५ | ९८ तः १०६ |
| ५. दुःखसंस्थद्वैविध्यम् | २६ | १०६ तः ११५ |
| ६. मुक्तपाञ्चविध्यम् | २७ | ११६ तः १२६ |
| ७. मुक्तियोग्यपाञ्चविध्यम् | २८ | १२६ तः १२९ |
| ८. मुक्त्ययोग्यद्वैविध्यम् | २९ | १३० तः १३७ |
| ९. तमोयोग्यचातुर्विध्यम् | ३० | १६७ तः १४३ |
| १०. तमोयोग्यानां प्रकारान्तरेण द्वैविध्यम् | ३१ | १४३ तः १४९ |
| ३) अचेतननिरूपणम् | ३२ तः ४२ | १५० तः २३३ |
| १. अचेतनत्रैविध्यम | ३२ | १५० तः १६० |
| २. नित्यप्रदर्शनम् | ३३ | १६० तः १८३ |
| ३. नित्यानित्यत्रैविध्यप्रदर्शनम् | ३४ तः ३७ | १८३ तः २१५ |
| ४. अनित्यद्वैविध्यम् | ३८, ४१ | २१५ २२०<br>२२२ तः २२९ |
| ५. असंसृष्टप्रदर्शनम् | ३९, ४२ | २२० २२१<br>२२९ तः ३ |
| ६. संसृष्टप्रदर्शनम् | ४० | २२१ तः २२२ |
| ४) विष्णोरेव सर्वसृष्ट्यादिमुख्यकारणता | ४३ | २३३ तः २४५ |

## तत्त्वसङ्ख्यानटीकास्थविशेषविषयानुक्रमणिका


| विषयः | सा.प.क्र. | पृ.क्र. |
|---|---|---|
| १) मङ्गलाचरणम्, प्रतिज्ञा च | १ | प्र.भा.१ |
| २) विषयाद्यनुबन्धैः अस्य आरम्भणीयता | २ | ११ |
| ३) आचार्यकृतमङ्गलाचरणस्य समर्थनम् | ३ | २२ |
| ४) तत्त्वसामान्यलक्षणम् | ५ | ४५ |
| ५) तत्त्वसामान्यलक्षणपरीक्षा | ६ | ५७,५८ |
| ६) स्वतन्त्रास्वतन्त्रतत्त्वयोः लक्षणे, तत्परीक्षा च | ७ | ७६ |
| ७) तत्त्वद्वैविध्यसमर्थनम् | ८ | ८६,८७ |
| ८) विष्णोरेव स्वतन्त्रता | ९ | ११० |
| ९) भावाभावयोः लक्षणे | ११ | १३४ |
| १०) स्वतन्त्रस्यापि भावत्वादिकथनम् | १३,१४ | १४७,१६५ |
| ११) पुरुषार्थोपयुक्तायाः तत्त्वविभागपद्धतेः निरूपणम् | १४ | १६५ |
| १२) अभावनिषेधपक्षखण्डनम् | १६ | १८९ |
| १३) प्रागभावलक्षणम् | १८ | द्वि.भा. ८ |
| १४) प्रध्वंसाभावलक्षणम् | १९ | २३ |
| १५) सदाऽभावलक्षणम् | २० | ३७ |
| १६) अभावत्रैविध्यसमर्थनम् | २१ | ४९ |
| १७) चेतनाचेतनयोर्लक्षणे | २२ | ६० |
| १८) दुःखस्पृष्टतदस्पृष्टयोर्लक्षणे | २३ | ७३ |
| १९) मुक्तपाञ्चविध्यस्य तारतम्ये तात्पर्यम् | २७ | ११६ |
| २०) योग्यतायाः अनादिनित्यत्वम् | ३१ | १४४ |
| २१) नित्यस्य लक्षणम्, पञ्चाशद्वर्णादीनां नित्यत्वञ्च | ३३ | १६१ |
| २२) नित्यानित्यलक्षणम्, तल्लक्षणस्य त्रैविध्यञ्च | ३५ | १८७ |
| २३) अंशांश्यादीनाम् अत्यन्तभेदनिरासः | ३७ | २०८ |
| २४) संसृष्टासंसृष्टयोर्लक्षणे | ३८ | २१५ |
| २५) महदादीनाम् असंसृष्टत्वसमर्थनम् | ४१,४२ | २२२,२२९ |
| २६) निखिलास्वतन्त्रतत्त्वस्य सृष्ट्यादौ विष्ण्वधीनता | ४३ | २३३,२३४ |
| २७) मङ्गलाचरणम् | ४४ | २४५ |

# त. टी. टिप्पणीस्थविशेषविषयानुक्रमणिका

सा.प.क्र. विषयाः

१) ग्रन्थारम्भे परमात्मनः, तदुपसर्जनतया रमायाः, यथायोग्यं सकलगुरूणाञ्चापि नमनरूपं मङ्गलम् अनुष्ठाय निवेश्य च चिकीर्षितं प्रतिज्ञातव्यम् । मङ्गलव्याख्यानयोः अङ्गाङ्गिभावः । अनिर्दिष्टस्यापि कर्तुः क्रियापदस्थपुरुषप्रयोगाल्लाभः । 'तत्त्वसङ्ख्यानव्याख्यानम्'इत्यस्य विग्रहार्थादिकम् । 'नातिविस्तरम्'इत्यस्य 'न'समासत्वम्, शब्दप्रपञ्चमात्रनिषेधकत्वञ्च ।

२) 'प्रकरण'पदार्थः । एतद्ग्रन्थस्य— अधिकारी-साधनचतुष्टय-सम्पन्नः, मुख्यप्रयोजनम् मोक्षः, अवान्तरप्रयोजनम् शिष्याणाम् अनायासेन जगदुदयादिनिमित्ततया परमात्मज्ञानम्, विषयश्च-परमात्मा । एकव्यक्त्यपेक्षया सृष्टेः स्थित्यादिसप्तकप्राथम्यम् । परमात्मनः जगदुपादानत्वनिरासः । कर्मणोऽपि तत्त्वज्ञानद्वारैव मोक्षहेतुत्वम् । 'आचार्य'पदार्थः । प्रधानत्वतदङ्गत्वयोः निर्वचने । एतद्ग्रन्थस्य तत्त्वविवेकव्याख्यानरूपता च ॥

३) मङ्गलानुष्ठानस्य आवश्यकता । मङ्गलस्य अनुष्ठानानुष्ठान-निवेशानिवेशन विघ्नविघातादिसम्पादकत्वासम्पादकत्वविचारश्च । मङ्गलस्य कायिकादित्रिविधता । मध्वाचार्याणाम् अप्रतिहतधर्मज्ञानवैराग्यैश्वर्यादिमत्ता च ॥ ॥

४) मूलाद्यपद्यपादद्वयेनैव तत्त्वसामान्य उद्देशलक्षणविभागपरीक्षाणां तत्त्वविशेषउद्देशलक्षणयोश्च साक्षात्परम्पराभेदेन उक्तता । सामान्योद्देशविभागादेः विशेषोद्देशविभागाद्यपेक्षया प्राथम्यञ्च ।

५) 'तत्त्व'पदस्य आवृत्तिः, यौगिकार्थकत्वं विहाय रूढार्थकत्वञ्च ॥ कूर्मरोमादिविशिष्टस्य आरोपविषयत्वम् । तत्त्वविवेके अङ्गीकारवादेनैव अनारोपितत्वस्य कूर्मरोमणि अतिव्याप्तिप्रदर्शनम् । ज्ञानविषयत्वस्य ज्ञानजनकसन्निकर्षाश्रयत्व-ज्ञानोल्लेख्यत्व-रूपाभ्यां द्वैविध्यम् । कूर्मरोम-शुक्तिरजतयोः शास्त्रीयम् अन्तरम् ॥ विविधानि तत्त्वसामान्यलक्षणानि च ।

६) 'तत्त्व'पदस्य योगरूढ्युभयपक्षेऽपि श्रीहर्षोक्तदूषणानामनुवादपूर्वकं निरसनम् । सुधावाक्यैः 'अत्र प्रतीतस्य अन्यत्र सत्ता'याः असिद्ध्युपपादनम् ।

'धर्मिगतत्त्वभावाङ्गीकारात्'इतिपाठस्य अस्वारस्यनिराकरणम् । असतः ज्ञानजनकसन्निकर्षाश्रयत्वरूपविषयत्वाभावेऽपि ज्ञानोल्लिख्यत्वरूपविषयतावत्त्वम् ॥ 'धर्मिगततयाऽभानाङ्गीकारात्'इतिपाठस्यापि व्याख्यानम् ॥

७) भगवतो विशेषबलात् स्वाधीनत्वसम्भवः । 'स्वतन्त्र'पदस्य 'स्वाधीनत्वम्'एव मुख्यार्थः, न तु 'परानधीनत्वम्' । विशेषे विवदमानं प्रति तु 'परानधीनत्वम्'एव स्वतन्त्रत्वम्, 'स्वरूप'इत्यादिकं तु उपपादनम् । 'अपेक्षा'पदेन अधीनतायाः विवक्षणम् ॥ स्वरूप-प्रमिति-प्रवृत्तीनां सत्तात्वोपपादनम् ॥ विविधानि 'स्वतन्त्रतत्त्वलक्षणानि ॥

८) केशोण्डूकादिभ्रमस्य तेजोधिष्ठानकत्वम् । तत्त्वसङ्ख्यानोक्तार्थे तत्त्वविवेकस्य साक्षित्वञ्च ॥

९) प्रकारद्वित्वोक्तेः प्रकारद्वित्वव्याप्यत्वम् । अभावप्रतीतेः भावप्रतीत्यधीनत्वोपपादनञ्च ॥ ॥

१०) अभावत्वेन अभावसाक्षात्कारस्य अभावप्रतियोगि-भाव-ज्ञानाधीनता । अभावप्रतीतिकाले प्रतियोगिनः असत्त्वेऽपि भावत्वव्यवहारोपपादनञ्च ।

११) ज्ञानानाम् 'अस्ति'इत्याकारकत्वस्य अस्तित्वविषयकत्वातिरिक्त-अखण्ड-ज्ञानधर्मत्वम् । प्रथमं 'न'इत्याकारप्रतीतिविषयत्वस्यैव अभावत्वम् (मु.) । विधित्वनिषेधत्वयोः अखण्डोपाधित्वम् ॥ विविधानि भावाभावयोर्लक्षणानि च ।

१२) स्वरूपभेदस्य प्रतीतिभेदनियामकत्वम् । 'अन्य'आदिपदानाम् उत्सर्गतो भेदप्रवृत्तिनिमित्तकत्वेऽपि क्वचित् भेदप्रतिनिधिविशेषप्रवृत्तिनिमित्तकत्वम् ॥ अप्रामाणिकस्यैव अत्यन्ताभावप्रतियोगित्वम् ॥ अक्षसन्निकर्षमात्राधीनायां प्रतीतौ स्वरूपोपाधिना एव वस्तुभानम्, न तु रूपान्तरोपाधिना । स्वरूपप्रतीतिसहकृतसन्निकर्षादिकमेव च रूपान्तरभासकसामग्री ॥ प्रतीतिघटितलक्षणस्य स्वरूपेण-विधित्वनिषेधत्वरूप-भावाभावलक्षणयोः प्रसिद्ध्यर्थकत्वम् । अन्योन्याभावसङ्ग्रहार्थं 'नास्ति'इतिप्रतीयतेइत्यस्यप्रतिक्षेपपूर्वकप्रतीतिविषयतामात्र

तात्पर्यम् (भ.)। प्रतीतिघटिताघटितलक्षणयोः घट-प्रागभावादेः क्रमेण भावाभावत्वनियमे प्रमाणप्रमेयाकांक्षानिवारकत्वञ्च।

१३) अस्वतन्त्रत्वभावत्वादेः व्याप्यव्यापकतानिरासः। 'तत्त्वेषु भावाभावान्यत्वस्य अभावभावत्वनियमः' इत्यङ्गीकारश्च।

१४) केनापि प्रकारेण सर्वतत्त्वानाम् सर्वधर्मोक्त्ययोगः।

१५) चेतनादिविभागापेक्षया भावादिविभागे वादिविप्रतिपत्तेः आधिक्यम्। भावादिविभागे स्वाभिप्रायप्रकटकग्रन्थकर्तॄणां प्रभाकरादि-वादिनां विप्रतिपत्तेः सद्भावः; चेतनादिविभागे तु 'सर्वचैतन्य'मतं श्रुत्य-र्थनिर्णयाय उत्प्रेक्षारूपेण स्वयमेव सूत्रकारेण पूर्वपक्षीकृतम्। अज्ञानार्थ-ज्ञापनापेक्षया सन्देहच्छेदनस्य गरीयस्त्वम्; सन्देहस्य च विप्रतिपत्ति-व्याप्यत्वञ्च।

१६) यद्विशेषणाभावावच्छिन्नस्य यस्य यद्विशेषणाऽऽधारत्वं न सम्भवति तद्विशेषणावच्छिन्ने सत्त्वे, विशेषणस्य तद्विशेषणेऽपि नियमेन सत्त्वम्। 'सम्बध्यते' इत्यस्य 'सम्बन्धवत्' इत्यर्थपर्यवसानम्। समानप्रकारक-निश्चयस्यैव संशयविरोधित्वम् स्वमात्रवृत्तित्वस्यैव आत्माश्रयत्वम्, न तु स्ववृत्तित्वमात्रस्य। चक्षुर्ग्राह्यत्वरूपदूषणान्तरसूचनाय गन्धाभावानुधावनम्। 'ननु' इत्यादिप्रश्नस्य षोढा (का.), पञ्चधा (भ.) च व्याख्यानञ्च।

१७) अभावत्रयोद्देशक्रमनिमित्तकथनम्। द्वन्द्वात्परप्रत्ययस्य प्रत्येकम् अभिसम्बन्धश्च।

१८) 'अनादिः सान्तः प्रागभावः' इतिमतस्य दूषणम्। प्रागभावस्य भावप्रतियोगिकत्वादिना विभागः। 'एक' पदस्य स्वरूपकथनार्थता। लक्षणे 'प्राक्' पदस्य आवश्यकत्वानावश्यकत्वविचारः, यादुपत्यविरोधपरिहारश्च॥ विविधानि प्रागभावस्य लक्षणानि च।

१९) प्राक्कालादेः कालधर्मस्य घटत्वादिवत् स्वाभाविकत्वम्। 'सादिरनन्तः प्रध्वंसः' इतिलक्षणस्य दुष्टत्वम्। प्रध्वंसाभावस्यापि भावप्रतियोगि-कत्वादिना द्वैविध्यादिकम्॥ विविधानि प्रध्वंसाभावस्य लक्षणानि च।

२०) 'सदाऽभाव:' इतिसंज्ञाया: वैशिष्ट्यम् । अभावलक्षणेषु आत्माश्रयादिपरिहार: । विविधानि सदाऽभावस्य लक्षणानि च ।

२१) अश्वे गोत्वसंसर्गस्यैव निषेध: । धर्मिस्वरूपस्य अभावत्वनिषेध: । घटसंसर्गप्रागभावादेरपि घटप्रतियोगिकत्वम् । समवायसम्बन्धनिराकरणञ्च ॥ ॥

२२) सर्वचैतन्यमतनिराकरणम् । उद्देशक्रमानुसरणे निरूप्यनिरूपकसम्बन्धापेक्षया प्राधान्याप्राधान्यतासम्बन्धस्यैव मुख्यता ॥ विविधानि चेतनाचेतनयो: लक्षणानि च ॥

२३) 'दु:खसंसर्गात्यन्ताभावानधिकरणत्वं दु:खस्पृष्टत्वम्' इत्यर्थे उत्तरटीकाऽसङ्गति । तत्त्वसङ्ख्यानस्य व्याख्यारूपत्वम् । सदसतो: सम्बन्धान्तराभावेऽपि विषयत्वप्रतियोगित्वादिसम्बन्धस्वीकार: । दु:खस्पृष्टतदस्पृष्टविषये विविधमतानुवाद: । उद्देशकरणे प्राधान्यक्रमापेक्षया निरूपकत्वज्ञापनस्य प्राथम्यम् ॥ विविधानि दु:खस्पृष्टतदस्पृष्टयो: लक्षणानि ।

२४) गरुडादीनां दु:खवत्त्वे प्रमाणोदाहरणानि ।

२५) विविधानि विमुक्तदु:खसंस्थयो: लक्षणानि ।

२६) मुक्तियोग्या:= मुक्ते: अर्हा: ।

२७) मुक्ततारतम्यसमर्थनम् । 'क्षितिपा' इत्यादिग्रन्थाविरोध: । पाञ्चविध्यस्य तारतम्यपरता । पाञ्चविध्यसमर्थनञ्च ।

२८) 'एवं विमुक्तियोग्याश्च' इत्यत्रस्थ 'च' शब्दसार्थकता ।

२९) विविधानि तमोयोग्यसृतिसंस्थितानां लक्षणानि ।

३०) उक्ततमोयोग्यप्रभेदे आगमोदाहरणम् । उक्तमुक्त्ययोग्यप्रभेदे आगमोदाहरणं तदर्थश्च ।

३१) समासान्तविधे: अनित्यता । योग्यताया: अनादिनित्यता च ।

३२) नित्यादिविभागेन अचेतनत्रैविध्यस्य समर्थनम् । प्रागभावप्रध्वंसयो: नित्यानित्यत्वम् । 'नित्यत्वानित्यत्वयो: अविभाजकत्व' शङ्कानिरासश्च ।

३३) 'उपलक्षणा'पदस्य अजहत्स्वार्थलक्षणापरता । 'उपलक्षणा'-पदस्य जहत्स्वार्थलक्षणापरता [कि.] ॥ वेदानां कूटस्थनित्यताविषये तत्त्व-सङ्ख्यानटीकाऽनुसारेण तत्त्वनिर्णयटीकायाः व्याख्येयत्वम् ॥ विविधमत-विमर्शपूर्वकम् 'अनित्यक्रमविशिष्टवेदानाम् अनित्यत्व'शङ्कानिरसनम् ॥ वर्णपञ्चाशत्त्वसाधनम् ॥ विविधानि नित्यस्य लक्षणानि च ॥

३४) वेदस्य पूर्वतात्पर्यमनुसृत्यैव प्रयोगात् न पौरुषेयत्वम् ॥

३५) अवधिद्वैविध्यानुसारेण नित्यादीनां लक्षणानि । ईश्वरादि-बुद्धिगतपुराणादेः 'उत्पत्तिमत्त्वे सति विनाशाभाव'अङ्गीकारः । नित्यस्यापि आकाशादेः तत्तद्विशिष्टरूपेण अनित्यत्वादिकमपि । उत्पत्तिविनाशपदयोः अवधिमात्रोपलक्षकत्वम् ।

३६) शास्त्रीयानाम् अवान्तरविधानाम् उक्तेष्वेव अन्तर्भावप्रदर्शनम् ॥

३७) एकस्मिन्नपि वस्तुनि भेदाभेदयोः उपपादनम् ॥

३८) संसृष्टासंसृष्टयोः विविधलक्षणप्रदर्शनम् ॥

३९) दशेन्द्रियादिप्रदर्शनम् ॥

४०) 'समस्त'पदसङ्कोचः ॥

४१) संसृष्टासंसृष्टयोः विविधानि लक्षणानि ॥

४२) महदादिस्वरूपोपपादक-आगमप्रदर्शनम् ॥ ॥

४३) लक्ष्म्याः ज्ञानाभावस्य अयोग्यगुणविषयकज्ञानात्यन्ताभावत्वम् ॥ सङ्क्षेपेण सकलतत्त्वविभागसङ्ग्रहश्च ॥ ॥

४४) प्रतिपाद्यस्तवनेनैव प्रीत्याशासनम् ॥ ॥

# लक्षणसंग्रहः

## तत्त्वसामान्यलक्षणानि

[ टी. ] १) अनारोपितत्वम् । २) प्रमितिविषयत्वम् ।

[ स. ] यदाकदाचित् अस्तीतिप्रमाविषयत्वम् ।

[ के. ] अत्यन्ताभावाप्रतियोगित्वरूपत्वे सति, नास्तीतिनिषेध्यत्वाभावे सति, 'अन्येन एवं ज्ञातम्' इत्यनूद्यत्वाभावे सति, अस्तित्वप्रकारक(सत्ताऽऽविष्टतया बोध्यत्वे सति)प्रमाविषयत्वयोग्यत्वम् ।

[ वि. ] क) प्रतीतत्वे सति आरोपाविषयत्वम् । ख) १. प्रतीत्यन्तराऽव्यवधानेन साक्षात् अस्तित्वप्रकारकज्ञानस्य यदंशेऽस्ति प्रमात्वम् तद्विषयत्वम् ( तदंशकविषयत्वम् ) ।, २. प्रतीत्यन्तराऽव्यवधानेन कालत्रयासत्त्वरूप-त्रैकालिकनिषेधप्रतियोगित्वरूप-स्वासत्त्वागोचरज्ञानस्य यदंशे अस्ति प्रमात्वम् तद्विषयत्वम् ( तदंशकविषयत्वम् ) ।

[ का. ] क) १. सत्त्वारोपत्वविशिष्टानुलेख्यत्वे सति सत्त्वेनोल्लेख्यत्वम् ।, २. सत्त्वारोपानुल्लेख्यत्वे सति सत्त्वेनोल्लेख्यत्वम् । ख) सत्त्वप्रकारकत्वविशिष्टप्रमितिविषयत्वम् ।

[ भ. ] असत्त्वप्रकारकप्रमित्यविषयत्वे सति सत्त्वप्रकारकप्रमितिसाक्षाद्विषयत्वम् ॥ ॥

## स्वतन्त्रतत्त्वलक्षणानि

[ टी. ] स्वरूप-प्रमिति-प्रवृत्ति-लक्षणसत्तात्रैविध्ये परानपेक्षत्वम् ।; स्वसत्तायां परानपेक्षत्वम् ।, स्वप्रमितौ परानपेक्षत्वम् ।, स्वप्रवृत्तौ परानपेक्षत्वम् ।

[ के., का., भ. ] परानधीनसत्ताकत्वम् ।

[ मु. ] अन्यानधीनत्वे सति स्वाधीनत्वम् ॥

## अस्वतन्त्रतत्त्वलक्षणानि

[ टी. ] स्वरूप-प्रमिति-प्रवृत्ति-लक्षणसत्तात्रैविध्ये परापेक्षत्वम् ।; स्वसत्तायां परापेक्षत्वम् ।, स्वप्रमितौ परापेक्षत्वम् ।, स्वप्रवृत्तौ परापेक्षत्वम् ।,

[ के., का., भ. ] पराधीनसत्ताकत्वम् ॥ ॥

## भावतत्त्वलक्षणानि

[ टी. ] प्रथमप्रतीतौ 'अस्ति' इतिउपलभ्यमानत्वम् ।

[ वि. ] प्रथमप्रतीतौ 'अस्ति' इतिप्रकारकज्ञानजनकसन्निकर्षप्रतियोगित्वरूप-ज्ञानविषयत्वम् ।

[ मु. ] प्रथमाक्षिसन्निपातानन्तरप्रतीतौ 'अस्ति' इतिविधिरूपेण विषयीक्रियमाणत्वम् ।

[ का. ] स्वविषयविषयकप्रतीत्यनुत्तरप्रतीतौ विधित्वेन विषयत्वम् ।

[ के. ] विध्याकारेण प्रतीत्यनुत्तरप्रतीयमानत्वम् । धर्मद्वारमन्तरेण धर्मिण एव विधित्वम् ।

[ भ. ] प्रथमप्रतीतिः यं पदार्थं विधितया परप्रतिक्षेपरूपतां विना विषयीकरोति तत्त्वम् ॥

## अभावतत्त्वलक्षणानि

[ टी. ] प्रथमोपलब्धौ 'नास्ति' इतिप्रतीयमानत्वम् ।

[ वि. ] प्रथमप्रतीतौ (नास्तीति) 'न' इत्याकारप्रतीतिजनकसन्निकर्षप्रतियोगित्वरूप-ज्ञानविषयत्वम्

[ का. ] स्वविषयविषयकप्रतीत्यनुत्तरप्रतीतौ निषेधत्वेन ( नास्तीति; न तु नेति) विषयत्वम् ।

[ के. ] विशेषप्रतिषेधाकारेण प्रतीत्यनुत्तरप्रतीयमानत्वम् । धर्मद्वारमन्तरेण धर्मिण एव निषेधत्वम् ।

[ भ. ] प्रथमप्रतीतिः यं पदार्थं निषेधतया परप्रतिक्षेपरूपत्वेन विषयीकरोति तत्त्वम् ।

## प्रागभावतत्त्वलक्षणानि

[ टी. ] उत्तरैकावधित्वे सति अभावत्वम् ।

[ स., मु., के. ] प्रतियोग्युत्पादकसामग्र्युत्तरक्षणमारभ्यैव अविद्यमानाभावत्त्वम् । पूर्वावधिरहितत्वे सति अवधिमदभावत्वम् ।

[ के. ] प्रतियोग्युत्पादकसकलकारणसमवधानानन्तरमेव असत्त्वे सति अभावत्वम् । वस्तूत्पत्तेः प्रागेव विद्यमानत्वे सति अभावत्वम् । प्रतियोगिकालापेक्षया प्रागेव विद्यमानत्वे सति अभावत्वम् । विनाश्यभावत्वम् ।

[ का. ] उत्तरत्वनिरूपकाभावत्वम् । पूर्वत्वानिरूपकत्वे सति अवधित्वनिरूपकाभावत्वम् । ध्वंसप्रतियोग्यभावत्वम् । प्रागभावाप्रतियोगित्वे सति अभावप्रतियोग्यभावत्वम् । स्वप्रतियोग्युत्तरकालनिष्ठाभावप्रतियोगित्वे सति स्वप्रतियोगिप्राक्कालवृत्तित्वे सति अभावत्वम् ।

[ भ. ] स्वप्रतियोग्युत्पत्तिकालानन्तरतावच्छिन्नकालमात्रावृत्तित्वे सति अभावत्वम् ।

## प्रध्वंसाभावतत्त्वलक्षणानि

[ टी. ] पूर्वैकावधित्वे सति अभावत्वम् ।

[ स. ] प्रध्वंससामग्रीपर्यन्तमेव अविद्यमानत्वे सति अभावत्वम् ।

[ के. ] उत्तरावधित्वे सति अवधिमदभावत्वम् । प्रतियोगिकालापेक्षया उत्तरकाले एव विद्यमानत्वे सति अभावत्वम् ।

[के., का.] प्रागभावप्रतियोग्यभावत्वम् ।

[ का. ] अपूर्वाभावत्वम् । उत्तरावधित्वे सति सावधिकाभावत्वम् । उत्तरावधिकाभावत्वम् । उत्तरावधिशून्यत्वे सति सावधिकाभावत्वम् । ध्वंसाप्रतियोगित्वे सति अभावप्रतियोग्यभावत्वम् । स्वप्रतियोगिप्राक्कालनिष्ठाभावप्रतियोगित्वे सति स्वप्रतियोग्युत्तरकालवृत्तित्वे सति अभावत्वम् ।

[ भ. ] स्वप्रतियोगिप्रध्वंसकालनिरूपितप्राक्त्वावच्छिन्नयावत्कालावृत्त्यभावत्वम् ।

## सदाऽभावतत्त्वलक्षणानि

[टी.] निरवधिकाभावत्वम् ।

[के.] अप्रामाणिकप्रतियोगिकाभावत्वम् । प्रतियोगिकालावधिकपूर्वत्वापरत्वरहिताभावत्वम् ।

[वि.] पूर्वोत्तरावधिरहिताभावत्वम् ।

[मु.] स्वस्थितौ पूर्वोत्तरकाललक्षणमर्यादाशून्यत्वे सति अभावत्वम् ।

[ का. ] अवधित्वानिरूपकत्वे सति अभावत्वम् । अभावाप्रतियोग्य-भावत्वम् । प्रतियोग्यवधिकपूर्वोत्तरत्वरहिताभावत्वम् ॥ ५॥

## चेतनतत्त्वलक्षणानि

[टी.] चेतयितृत्वम् । [वि.] ज्ञातृत्वम । [मु.] ज्ञानकर्तृत्वम । [का.] ज्ञातृत्वम्= ज्ञानस्वामित्वम् । [भ.] ज्ञानाधिकरणत्वम् ।

## अचेतनतत्त्वलक्षणानि

[टी.] अचेतयितृत्वम् । [वि.,का.] अज्ञातृत्वम् । [भ.] ज्ञानानधिकरणत्वम ॥

## दुःखस्पृष्टतत्त्वलक्षणानि

[टि.] कदाचिद्दुःखसम्बद्धत्वम् । [के.] दुःखसंसर्गात्यन्ताभावानधिकरणत्वम् । [भ.] दुःखसम्बन्धात्यन्ताभावानधिकरणत्वम । [वि.२५] स्पृष्टं दुःखं यैः ते दुःखस्पृष्टाः ।

## दुःखास्पृष्टतत्त्वलक्षणानि

[ टी. ] कदाऽपिदुःखासम्बद्धत्वम् । [ के. ] दुःखसंसर्गात्यन्ताभावाधिकरणत्वम् । [ भ. ] चेतनत्वे सति दुःखसम्बन्धात्यन्ताभावाधिकरणत्वम् ।

## विमुक्ततत्त्वलक्षणानि

[टी. ] दुःखाद्विमुक्तत्वम् । [ मु. ] कालविशेषमारभ्य सर्वथा दुःखानाश्रयत्वम् । [ का. ] दुःखप्रागभावानवच्छिन्नदुःखाभावविशिष्टत्वम् ।

## दुःखसंस्थतत्त्वलक्षणानि

[ टी. ] वर्तमानदुःखत्वम् । [ स. ] दुःखस्य संस्थितिः येषु ते दुःखसंस्थाः । [ के. ] संस्थं = वर्तमानं दुःखं येषां ते दुःखसंस्थाः। [ का. ] एतत्कल्पप्रागभावानधिकरणकालवृत्तिदुःखोपलक्षितत्वम् ।

## मुक्तियोग्यतत्त्वलक्षणम्

[ वि. ] मुक्तेरर्हत्वम् ।

## मुक्त्ययोग्यतत्त्वलक्षणम्

[ टी. ] मुक्तेः अयोग्यत्वम् ।

## तमोगतत्त्वलक्षणे

[ टी. ] तमोयोग्यत्वम् । [ का. ] तमःप्रापकदृढद्वेषादिरूपत्वम् ।

## सृतिसंस्थिततत्त्वलक्षणानि

टी. नित्यसंसारित्वम् । [ वि ] सर्वदा संसारे वर्तमानत्वम् । [ का. ] नित्यलिङ्गाऽऽलिङ्गितत्वम् । सुखदुःखाभिव्यञ्जकभक्तिद्वेषादिरूपत्वम् । [ भ. ] सृतौ सदातनत्वेन स्थितत्वम् ।

## प्राप्तान्धतमस्तत्त्वलक्षणम्

[ वि. ] प्राप्तम् अन्धन्तमः यैः ते प्राप्तान्धतमसः । [का.] एतत्कल्पानुभूयमानदुःखमात्राः ।

## सृतिसंस्थतत्त्वलक्षणम्

[ टी. ] संसारे वर्तमानत्वम् । नाधुनाऽपि तमःप्राप्तत्वम् । [ स. के.] प्राप्स्यमानतमस्त्वम् । [ वि. ] सृतौ संस्था=स्थितिः येषां तेसृतिसंस्थाः । [ का. ] प्राप्ततमस्कान्यत्वविशिष्टत्वम् । एतत्कल्पीयाविद्योपलक्षितत्वम् ॥

## नित्यतत्त्वलक्षणम्

[ टी. ] कूटस्थतया आद्यन्तशून्यत्वम् । [ के. ] निर्विकारतया आद्यन्तशून्यत्वम् । आद्यन्तशून्यत्वम् । [ वि. ] एकप्रकारेण विद्यमानतया उत्पत्तिविनाशरहितत्वम् । [ भ. ] अन्यथाभावरहितत्वे सति सदा विद्यमानत्वम् ॥ [ ३५ स. ] स्वरूपेण स्वाभिन्नांशैश्च पूर्वेण उत्तरेण च अवधिविधुरत्वम् । [ ३५ के.] स्वरूपतः स्वांशतश्च पूर्वोत्तराभ्याम् अवधिविशेषाभ्यां रहितत्वम् । [ ३५ मु. ] स्वरूपेण स्वाभिन्नांशादेश्च पूर्वेण उत्तरेण वा अवधिविधुरत्वम् ।

## नित्यानित्यतत्त्वलक्षणम्

[ टी ] यन्न सर्वथा कूटस्थं नाप्यनित्यमेव तत्त्वम् । अस्य त्रैविध्यम्— १. उत्पत्तिमत्वे सति विनाशाभावत्वम्; २. एकदेशैः उत्पत्तिविनाशवत्त्वे सति एकदेशिनस्तदभावत्वम्; ३. स्वरूपेण उत्पत्त्याद्यभावेऽपि

अवस्थाऽऽगमापायवत्त्वम् । [ वि. ] कूटस्थनित्यत्वमात्राधिकरणभिन्नवस्तुत्वम् । १. उत्पत्तिमत्त्वे सति विनाशरहितत्वम्; २. निमेशाद्यंशरूपेण उत्पत्तिविनाशवत्त्वे सति कालप्रवाहरूपांशिनः उत्पत्तिविनाशाभावः; ३. उपादानस्वरूपेण उत्पत्तिविनाशाभावे सति उपादेयस्य उत्पत्तिविनाशित्वम् । [४१ मु.] यच्छब्दवाच्यं साक्षान्मूलरूपं नित्यम् इतरत् आगमापायि च तत् नित्यानित्यम् । [ का. ] १. यद्रूपेण उत्पत्तिमत्त्वे सति विनाशाभावः तद्रूपत्वम्; यत्किञ्चिदवधिमत्त्वे सति यत्किञ्चिदवधिशून्यत्वम्; २. प्रवाहरूपेण उत्पत्त्यादिमत्त्वे सति स्वरूपेण तदभावत्वम्; प्रवाहादिरूपेण अवधिमत्त्वे सति स्वरूपेण अवधिशून्यत्वम्; ३. स्वरूपेण अवधिशून्यत्वे सति परिणामित्वम् ।

## अनित्यतत्त्वलक्षणे

[ ३५ स. के. ] स्वरूपेणैव अवधिद्वयोपेतत्वम् ।

[ मु. ] स्वरूपेण स्वांशाद्यैश्च अवधिद्वयोपेतत्वम् ।

## संसृष्टतत्त्वलक्षणे

[ टी. ] सम्यक्सृष्टत्वम् । [ स. के. ] साक्षान्मूलरूपस्य नित्यस्य अभावे सति उत्पन्नत्वम् । [ ४१ भ. ] येषां प्रकृतिविकृतान्येव साक्षादुपादानानि तत्त्वम् ।

## असंसृष्टतत्त्वलक्षणानि

[ टी. ] असम्यक्सृष्टत्वम् । [ स. के. ] साक्षान्मूलरूपस्य नित्यस्य सत्त्वेऽपि उत्पन्नत्वम् । [ ४१ टी. ] साक्षान्मूलरूपेण नित्यानां प्राकृताद्यंशैः उपचयवत्त्वम्; । [ ४१ का. ] साक्षान्नित्योपादानकत्वम् = सोपादानानुपादानभूतनित्योपादानकत्वम् । [ ४१ भ. ] येषां प्रकृतिसूक्ष्माण्येव साक्षादुपादानानि तत्त्वम् ॥८॥

# उद्देशविभागादौ प्राथम्यादिनिमित्तसङ्ग्रहः

निमित्तानि — प्रसङ्गः — सा.प. — पृ. क.

१) **सार्थक्यवैयर्थ्ये** — तत्त्वद्वैविध्यम् — ८ प्र.भा. ८७
यथा तत्त्वस्य आदौ भावाभावादितया विभागापेक्षया
स्वतन्त्रास्वतन्त्रादितया विभागकरणस्यैव सार्थक्यम् ।

२) **पुरुषार्थोपयोगानुपयोगौ**— अस्वतन्त्रद्वैविध्यम् — १४ — प्र.भा.१६५
यथा स्वतन्त्राद्यङ्गतया भावादिविभागस्य पुरुषार्थोपयोगित्वम् ;
न तु भावाद्यङ्गतया स्वतन्त्रादिविभागस्य ।

३) **अभ्यर्हितत्वानभ्यर्हितत्वे** — भावद्वैविध्यम् — २२ — द्वि.भा.६०
यथा चेतनादेविभागस्य नित्यादिविभागापेक्षया अभ्यर्हितत्वात् प्राथम्यम् ।

४) **अतिशयानतिशयौ** — मुक्त्ययोग्यद्वैविध्यम् — २९— द्वि भा.१३१
यथा तमोगानां सृतिसंस्थितापेक्षया अयोग्यतातिशयात् प्रथमोद्देशः ।

५) **प्राधान्याप्राधान्ये**— १) तत्त्वद्वैविध्यम् - ९— प्र.भा.११०
यथा स्वतन्त्रतत्त्वस्य अस्वतन्त्रतत्त्वापेक्षया प्राधान्यात् आदावुद्देशः ।
२) स्पृष्टदुःखद्वैविध्यम् —२५ — द्वि.भा.९८
यथा विमुक्तानां दुःखसंस्थापेक्षया प्राधान्यात् आदावुद्देशः ।
३) दुःखसंस्थद्वैविध्यम्—२६ —द्वि.भा.१०७
यथा च मुक्तियोग्यानां मुक्त्ययोग्यापेक्षया प्राधान्यात् आदावुद्देशः ।

## अथ प्राधान्याप्राधान्यप्रयोजकम्

अ) **वादिविप्रतिपत्त्यधिक्यसद्भावासद्भावौ** - अस्वतन्त्रद्वैविध्यम्
१५ प्र.भा.१७८
यथा चेतनादिविभागापेक्षया भावादिविभागे वादिविप्रतिपत्त्याधिक्यात्
प्राधान्यम् ।

आ) **अन्यस्य एतदर्थकता अस्य अन्यार्थकता च**— भावद्वैविध्यम्
२२ द्वि.भा.६
यथा अचेतनस्य चेतनार्थकत्वात् अचेतनापेक्षया चेतनस्य प्राधान्यम् ।

## अथ प्राधान्यक्रमस्य प्राबल्यविचारः

अ) **प्राधान्यक्रमस्य उद्देशक्रमात्प्राबल्यम्**— दुःखसंस्थद्वैविध्यम्
२७ द्वि.भा.१४४
यथा 'ननु च उद्देशक्रमाद्विमुक्तभेदः प्रथमं वक्तव्यः'इत्यशङ्क्य
'ननु च प्राधान्याद्विमुक्तभेदः प्रथमं वक्तव्यः'इतिशङ्कितम्

## अथ प्राधान्यप्राथम्यनियमे अपवादाः

**क) अल्पत्वाधिकत्वे** ( सूचीकटाहन्यायेन )– अभावनिरूपणम्

१७ द्वि.भा.३

यथा अभावनिरूपणस्य भावनिरूपणापेक्षया अल्पत्वात् प्राथम्यम् ।

**ख) कथनसौकर्यासौकर्ये**– दुःखसंस्थविभागः– २६ द्वि.भा.१०७

यथा मुक्तियोग्यभेदोक्तेः दुःखसंस्थविभागानन्तरं सौकर्यात् क्रमोल्लङ्घनम् ।

**ग) लाघवगौरवार्थकत्वे**– अचेतनत्रविध्यम्– ३२ द्वि.भा.१५०

यथा 'नित्यं नित्यानित्यमनित्यम्'इत्युक्त्यपेक्षया 'नित्यानित्यविभागेन'-इत्युक्तेः लाघवार्थकत्वात् अस्यैव अनुसरणम् ।

**घ) निरूपकत्वनिरूप्यत्वे**– चेतनद्वैविध्यम्– २३ द्वि.भा.७३

अज्ञातयोर्निर्देशे एव अयमपवादः; यथा अभावस्य भावनिरूप्यत्वात् दुःखास्पृष्टापेक्षया दुःखस्पृष्टस्य प्रथमोद्देशः । ज्ञातयोर्निर्देशे तु प्राधान्यक्रम एव अनुसर्तव्यः; यथा 'नित्याऽदुःखा··· समस्तशः'इति ॥

## प्रमाणपरिचयः

टीकाटिप्पणीषु उदाहृतानां प्रमाणानां ग्रन्थस्थलादिपरिचयः यावच्छक्यं तत्र तत्र दत्त एव । तथाऽपि मध्ये आलस्यादिना परित्यक्तः जिज्ञासूनां सौकर्यार्थम् अत्र सङ्कलय्य दीयते ।—

| प्रमाणानि | पृष्ठे | परिचयः |
|---|---|---|
| 'सधर्मिप्रतियोगित्वमभावस्य··' | प्र.भा. १३४ | अनु. २–२–७–२४ |
| 'ब्रह्मा शिवः....तत्परो हरिः' | द्वि.भा. ९४ | वि.त.नि.पृ. ९८० इत्यत्रोदाहृता श्रुतिः । |
| गरुडस्य दुःखम् | ९४ | भारते उद्यो.प. ११३–८ न:१० ( पङ्कगमनम् ) । |
| 'तुम्बुरुप्रमुखा....प्रोक्ताः' | ११७ | मध्वसिद्धान्तसारः १३८ नि.१० |
| 'ब्रह्मान्ता....प्रोक्ताः' | ११७ | तत्त्वविवेके श्लो. ५ |
| पूतनायाः मुक्तत्वम् | १२१ | भाग. १०–७––३६,३९ |
| कंसशिशुपालादीनां मुक्तत्वम् | १२१ | भाग. ७–१––३२ |
| 'तिरश्चीनास्थावराश्च....' | १२५ | भाग. ता. ३ |
| 'अहं ब्रवीमि वेनस्त....' | १४३ | भाग.ता. ४–१४–३५ |

# TATVA SAMKHYANA

(Enumeration of categories according to Dvaita Vedanta)

Tatvasamkhyāna is a small treatise enumerating the categories according to Dvaita Vedanta. There is another small supplementary treatise, viz., Tatvaviveka which adds a few more details. Both these are Prakaranagranthas or small compendiums dealing with the specific topics of Sastras. These are two of the ten prakaranas of Sri Anandatirtha alias Sri Madhavacharya.

Every system of Philosophy analysis the universe into certain categories for the understanding of the structure of the universe. This analysis is usually based on ontological considerations. In a few systems it is also done on epistemological considerations. Theological and ethical considerations are also kept in mind in some systems. The analysis of the universe into certain categories and understanding the nature of the same is not a mere intellectual exercise for Indian philosophers. It is intended to fix the relative values of things in the scheme of life, develop proper perspective, and aim at the spiritual progress. The analysis of the categories in Dvaita Vedanta as given in Tatvasamkhyana, and Tatvaviveka has kept this objective in mind. There fore, the grouping followed here is not strictly ontological or epistemological, though, broadly, the ontological pattern is followed. The main purpose of vedantic enquiry is to realise Brahman or Vishnu as supreme being and understand the subordinate nature of other categories only to re-inforce the knowledge of the supremacy of Braman or Vishnu. This spiritual consideration is kept in mind while describing the categories here.

II

The categories mentioned in Tatvasamkhyana and Tatvaviveka may be briefly listed as follows:

1. Tatva or reality comprises of two categories, Viz., Independent and dependent. The 'Independent' is Lord Vishnu. He is positive, sentient, eternal, not touched by misery etc. draw backs. Independent means one who does not depend upon anyone else in respect of his very essential nature, under standing, and activity. He has complete mastery over these.

2. The depedents are classified into

i. the positive and the negative (bhāva and abhāva)

ii. the positive is classified into the sentient and non-senient (chetana and achetana).

iii. The sentient is classified into those that are touched by misery and those that are not at all touched by misery.

iv. Those touched by misery are classified into those that are liberated and those that are in misery.

v Those who are in misery are classified into those who are capable of getting liberated and those who are not

Vi those who are not capable are classified into those who are permanently in transmigration and those, who are destined for tamas.

Vii. those who are destined for tames are classified into those who have already attained tamas and those who are still in trans migration.

3. i. The non-sentient or achetana is classifide into nitya nityanitya and anitya.

ii. Vedas, varnas and avyakritakasha come under nitya. puranas, kala and prakriti come under nityanitya.

iii. anitya is classified into two, viz,. asamsrista and samsrista (not fully created and fully created). Mahat, ahamkara, buddhi, manas, ten indriyas, tanmatras and bhutas (five elements) come under asamrista, Brahmanda and all non sentients contained in it come undor samsrista.

iv. all sentients are nitya.

The abhava or negatives is classified into three, Viz., preveious negation (pragabhava), later negation (pradhvansabhava), total negation (sadābhava).

The above classification of categories, as already stated is intended to help us to understan: the supremancy of the independent category, i.e., Brahman or Vishnu and the dependence of all other categories on him.

III

In the course of enumerating these categories, certain important philoscphical concepts are introduced in Tatvasamkhyana. The e are fully discussed in the Teeka of Sri Jayatirthe and are further elaborated in the Tippanis. It will be helpful to understand the importance of Tatvasamkhyāna as a philosophical treaise to note some of these concepts.

The first and the fore-most is the concept of Tatva or reality. The definition of reality has been a vexed problem for philosoph rs. The complexity of defining as to what is 'real has led s me to subscribe to idealism. But they have not fared any better. To ju tify the view point of idealism is much more compli at d than to find a definition as to what is real. The definition of reality can be attempted ontologically or epistemologically or in both ways. Certain amount of inter-locuting of ontological and epistemological approaches is inevitable. The definition of Tattva given in Tatvasamkhyāna is epistemological with an ontological base[1] T.S. defines 'Tatva, as 'Tatvam, anaropitam' that which is not super imposed is Tatva, For instance when one understandes 'a flower' as 'a flower' this understanding dose not inolve any super - imposition. But if one understands a garland of flower as a snake, then there is the super-imposition of snake over the garland in this understanding. Therefore, the snake experienced in this experience is not real or true. In this connection two points need our attention, viz.,i.) The super-imposed is not true. (It is asat.) It is not the snake previously experienced elsewhere that is super imposed here, but it is an unreal snake that is super-imposed snake. Sxperienced elsewhere. earlier only provides a model, but itself is not super-imposed here as contended by Nyaya-vaiseshikas. The earlier experience of such a modele is of course, a must. It is called pradhana or sadrisavastu in Sanskrit.

---

1. तत्त्वमनारोपितम् । प्रमिति विषय इति यावत् ।

ii) The super - imposition is always on something else which is present For instance, the garland in the present instance. The graland is present before the observer. On this, there is a super-impositon of snake due to certain defects such as darkness, soft-ness of the garland, etc. This base of susper-imposition is called adhisthana. These two, i.e. adhi the na and pradhana have to be real. Such a super-imposition is not found in a vaild experience and there-fore an object of valid experience is real or Tatva. This is an epistemological definition of ' real ' with an antologicalibasis.

The next important concept discused in T.S. and its Teeka is the concept of Svatantra. [2]The expression Svatantra means one who does not depend upon anyone else in respect of his very nature, understanding and activity. Brahaman or Vishnu alone has such complete independance. All others are dependent upon Lord Vishnu in respect of their very nature. understanding, and activity. Satta or the very existence of an entity is descrided in terms of these three. Therefore, the very existence of all other entities is entirly dependent upon. Lord vishnu. This dependence is further elaborated as the dependence in respect of creation, sustenance, destruction, regu lation, knoweldge, ignorance, bondage, liberation, joy sorrow and all other conceivable aspects.

It is essential to acccept Lord Vishnu as absolutely independent and all others as dependent. If all were independent, then, there would have been no misery in this world. If all were dependent, then, there would be chaos. No one would be able to regulate the other, Therefore, one has to be independent and all others dependent. This one independent is not prakrti as contended by sāmkhya since prakiti is jada and is not capable of any initiative on its own. It is also not Si va or Sakti since they have some imperfections as per the scripture. Therefore Lord vishnu is this independent principal.

The next interesting item discussed in T.S, is the concept of abhāva. Dvaita accepts only three types of abhavas, viz.,

---

२. स्वरूपप्रमिति प्रवृत्तिलक्षण सत्ता त्रैविध्य परानपेक्षं स्वतन्त्रम्। परापेक्षम-स्वतन्त्रम् ॥

pragabhava pradhvansabhava and sadabhava.[३] Dvaita concept of pragabhava and pradhavansadhava differs from that of the Nyaya-Vaiseshikas. Not only the negation before creation and after distruction come under these two, but such instances such as the absence of a jar before it is brought on a spot and afterit is removed also come under there two, abhavas.

[४]Bheda is not a cateaory of abhava at all according to Dvaita, it is nothing but the very nature of the entity concerned When we say A is different from B, all that we mean is A is A and B is B. The identity cf one with the other is denied: Thus the difference is the affirmation of the uniqueness of the very nature of each entity. Therefore bheda is dharmisvarupa. As regards Sadabhava it is not same as the atyantabhava accepted in the Nyaya-Vaiseshika system. Sadabhava means tne absence of the pratiyagin at all the three tlmes viz., Past. present and futnre. The exprdssion sadabhava is purponely used to indi ate this. An important point to be noted in this respect of Sabadhava is that its pratiyogin is not true. In fact, when something is denied with reference to a place, it is only envisaged and denied. If it were true there, it would not have been denied at all. Similar entiy being present elsewhere does not make what is denied here true. There fore, pratiyagin of sabadhava is always only envisaged but not true. Its. pratiyogin is apramanika. This isa vital dlfference betweeu the Nyayavaiseshika and the Dvaita the concepts of atyantabava and sabadhava respectivily.

The next important point to be noted is the concept of eternity of Vedas, Vadas are considered as apaurusheya and nitya by Mimansakas and Vedantins. [५]By nitya normally absence of beginning and end ls meant. But in the case of Vedas it is somgethning more. Vedas are kutasthanitya. Kutastha means not subject to any kind of change or modifi-

३. उत्तैरकावधिरभावः प्रागभावः । पूर्वैकावधिरभावः प्रध्वंसाभावः । निरवधिकः अभावः सदाभावः ।

४. अन्योन्याभावः भेद एव । स च स्वरूपमेवेत्यन्यत्रोपपादितम् ।

५. अत्रनित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वम् ।

cation at any time. Thus Vedas not only have no beginning. and end but also do not undergo any change or modification.

The syllables, accents, the words, the sentences, and even the order of words and sentences has exactly been the samn all along. At the commencement of each kalpa the Lord imparts them to Hiranyagardha exactly in the same way. There has been no production of Vedas, nor they will cease to be at any time. This is what is called Kutasthanityatva. of Vedas. This special nature of Vedas is catagorically stated in Tativasamkhyana-teeka. However, certain remarks in Tattvanirnayateeka give an impression that krama or the order of the words in sentences in Vedas is not eternal. These remarkes have to be explained as refering to the human understanding of Vedas and manifestation to humau beings. Since men grasp them following their manifestation, and since the manifastation has certain order, the krama is stated produced. So for as the intrinsic nature cf Vedas is concerned even the krama is eternal.

These are the few important topies that are discussed in Tattvasamkhyana and its Teeka in the course of the enumeration of the categories · Since the purpose of this enumeration is to bring out the supremacy of Lord Vishnu, the treatise is concluded with the statement that all dependent categories are controlled by Lotd Vishu in respect of their creation, sustenance, destrucation, etc., all conceivable aspeets.

## IV

It is but natural that such an interesting text, though small, has attracted many commentators. Accordiug to Dvaita literary tradition, the works of Sri Anandatirha alias Sri Madhavacharya are designated as Mulagranthas. The commentaries on these before Sri Jayatirtha are called Prachina, Teekas. Commentaries of Sri Jayatirtha are called Teekas while the commentries on the commentaries of Sri Jayatirtha are called Tippanis. Tattvasamkhyana as already noted is one of the prakarana texts among the ten Prakaranas of Sri Madhva charya. Sri Jayatirtha's commentary on this is known as vivarana. There are about eighteen Tippanis or sub-

commentories on Sri. Jayatirtha's Vivarana. These are the Tippanis of 1. Sri. Vijayindra 2 Sri. Yadavarya 3. Sri Raghavendra 4. Sri. Satya-prajna 5. Sri. Pandurangi Kesavabhattaraka 6. Sri Srinivasatirtha 7. Srimushna Anatacharya 8. Lingeri Acharya 9. Narasimha yati 10. Sri Chalari Acharya 11. Sri. Rotti Venkatabhatta 12. Sri Mudgala Narasimha 13. Vittla charya 14. Sri Satyadharma 15. Sri Kashi Tiimmannacharya 16. Sri Bhagavantaraya 17. and 18 Gudhakartrika (Author's name not known).

Among these Nos. 1,2,3,6, 14 are already published. now the present edition includes No. 4,5,12,13,15, and 16, Thus Six sub-commentaries hitherto not published are being made available to the students and scholars through this edition.,

Among these six, sri Satyprajna was a disciple of Sri Satyavrata who was the head ot Uttaradi Mutt duriug 1638 to 1660 A.D. Therefore we may conclude that he lived during the first half of 17th century. He has three works to his credit Viz. 1. Isavasyatippni 2. Geetatatparya nyayadipika tippani 3. Tattvasamkhyana tippani.

Sri Pandurangi Keshavabhatta is a prolific writer on Dvaita Vedanta. He was purvasrama younger brother of Sri Vidyahisatirtha who was the head of Uttaradimutt during 1619 A.D. to 1631 A.D. His father pandurangi Ananda Bhattaraka was the famous author of Nyayamrita Kantakoddhara. He was a contemporary of Sri Vadirajatirtha. Sri KeshavaBhattareka is reported to have written sub-commentories on all the ten Prakaranas. But only the commentaries on Tattva-samkhyana, Khandanatraya Kathalakshana, Pramaanalakshana, Tattvodyota and Tattvaniranaya are available. His voluminous commentary on Sri Nyayasudhais published. He has one more commentary on Nyayasndha, viz.' Sudha Vakyartha Vinoda which is available in manuscript. His Rigbhashyatippani, Prameyadeepika tippani and his commentary on Tatparyachandrika of Sri Vyasaraja (both Laghvi and Gurvi) are available. (Laghvi is printed). His commentaies on Tatparyachandrika and Bhagavata (Krodapatra type) are yet to be attested by manuscripts. His Vadindrahikkara is small treatise recording the minutes of debate between himself

(२ के. विषयः— १. अव्याख्येयत्वशङ्कापुरःसरं तन्निरासकसामग्र्यनुवादकतया मुमुक्षुणेत्यादिप्रथमवाक्यस्यावतरणम्। २. खलुशब्दार्थः। ३. अनुबन्धचतुष्टयम्। ४. 'जगदुदयादिनिमित्तत्वेन' इत्यस्य आशयकथनपुरःसरमवतरणम्। ५. 'जगत्, आदि, निमित्त' पदानामर्थः। ६. सृष्टिसंहारादिषु सृष्टेः प्राथम्ये निमित्तम्। ७. 'निमित्तत्वेन' इति कारणसामान्यनिर्देशप्रयोजनम्। ८. 'अवश्यम्' इतिपदस्यप्रयोजनम् अर्थश्च। ९. 'सच्छास्त्राणाम्' इति पदार्थः। १० 'अवान्तर'पदप्रयोजनम्। ११. 'भेदभिन्नस्य' इत्यत्र पदार्थः, भेदशब्दसार्थक्यञ्च। १२. 'अपेक्षते'-इतिपदभावः। १३. 'तथा' इतिपदस्य अर्थः भावश्च। १४. 'प्रधानाङ्गभूतम्' इतिपदस्य शास्त्रप्रकरणयोरेकार्थकत्वानुपपत्तिशङ्कातत्समाधानाभ्यामवतरणम् अर्थश्च। १५. 'प्रधानाङ्गभूतम्' इतिपदस्य अनन्ततत्त्वानां सङ्ग्रहानुपपत्तितन्निरासाभ्यामवतरणम्। १६. 'प्रकरणम्' इतिपदस्य भावः। १७. संगृह्यप्रतिपादनेऽप्रयोजनत्वशङ्कया 'शिष्य' इतिपदस्य अवतरणम् तत्प्रयोजनञ्च।)

के०—**ननु** इदं प्रकरणं न व्याख्येयं; प्रेक्षावदनुपादेयत्वात्, प्रेक्षावदुपादेयस्यैव च व्याख्येयत्वात्। तदनुपादेयत्वञ्च तद्व्यापकविषयादिमत्त्वाभावसिद्धम्। न चास्य प्रकरणतया शास्त्रैकदेशसम्बद्धत्वात्, शास्त्रीयविषयादिकमेवात्र विषयादिकमिति वाच्यम्; शास्त्रस्यापि तच्छून्यत्वात्॥ —**इत्यतो**ऽस्य प्रकरणतासिद्धये शास्त्रैकदेशसम्बन्धित्वं दर्शयितुं शास्त्रार्थं तावदनुवदति **मुमुक्षुणेत्यादिना अविप्रतिपन्नोऽर्थः इत्यन्तेन**।

**खलु** शब्दो वाक्यालङ्कारे प्रसिद्धौ वा॥

**अनेन** उपलक्षणत्वेन 'मुमुक्षुणा'रूपमधिकारिविशेषणमभिदधता—साधनचतुष्टयसम्पन्नः शास्त्रे अधिकारी, परमात्मा विषयः, तज्ज्ञानम् अवान्तरप्रयोजनम्, मोक्षश्च मुख्यप्रयोजनम्, यथायोग्यं सम्बन्धः —इति शास्त्रीयम् अनुबन्धचतुष्टयं प्रदर्शितं भवति।

ननु परमात्मपदेन ईश्वरस्य ज्ञातत्वात् न तस्य शास्त्रविषयत्वम्; इत्यतः स्वरूपमात्रावगमेऽपि तन्मात्रस्य मोक्षासाधनत्वात्, जगदुदयादिनिमित्तत्वेन तदव-

गमस्यैतत्साधनत्वात्, मोक्षसाधनीभूतजगदुदया[1]दिनिमित्तत्वप्रकारकतज्ज्ञानस्य शास्त्रमात्रसाध्यत्वात्, युक्तं तस्य शास्त्रविषयत्वमित्याशयेनोक्तं '**जगदुदयादिनिमित्तत्वेनेति** ।

अत्र '**जगच्छब्दो**' भगवद्व्यतिरिक्तसर्वपरः । उदयादीति '**आदि**'-पदेन च स्थित्यादेः सङ्ग्रहः । जगदुदयादिहेतुत्वं च '[2]समासव्यासयोगतः' इति वक्ष्यमाणप्रकरणे द्रष्टव्यम् ।

यद्यप्यत्र सृष्टिसंहारप्रवाहस्यानादित्वेन दर्शपूर्णमासीतिथ्योरिव प्राथम्यानिर्णयेन प्राधान्यासिद्धेः, नोदयस्यैव प्रथमं निर्देशे निमित्तमस्ति; तथापि उत्पन्नस्य नाशवत् नष्टस्योत्पत्त्य[3]भावेन एकव्यक्त्यपेक्षयोदयादेः प्राथम्यादिसम्भवात्, तत्प्रयुक्तप्राधान्यादिविवक्षयोदयस्य प्राथम्येन निर्देश इति द्रष्टव्यम् ।

कारणत्वेनेति सामान्यमनभिधाय **निमित्तत्वेन** इति तद्विशेषनिर्देशस्तु "उपादानत्वे ब्रह्मणो निर्विकारत्वानुपपत्तिः; विवर्ताधिष्ठानत्वे तु श्रुतौ[4] '[5]यतो वा इमानि भूतानि जायन्ते' इतिनिर्देशः, सूत्रे[6]जगज्जन्मादिनिर्देशश्चासङ्गतः; न हि 'शुक्तितो रजतं जायते, इति निर्देशोऽस्ति" इति परपक्षनिरासमूचनाय इति द्रष्टव्यम् ।

'**अवश्यमिति**' । तेन विना मोक्षाभावात् । कर्मणो मोक्षहेतुत्वेऽपि तत्त्वज्ञानद्वारैव तत्, नतु तत्त्वज्ञानसमकक्षतया; इति भावेनावश्यपदप्रयोगः ।

**सच्छास्त्राणां**= श्रुतितन्मीमांसादिसच्छास्त्राणामित्यर्थः

ननु यदि मोक्षार्थं जगदुदयादिनिमित्तत्वेन परमात्मज्ञानमावश्यकम्, तर्हि परतत्त्वमेव विषयीभूतं विविच्यताम्; किं शास्त्रे अपरतत्त्वनिरूपणेन ? इत्यत आह **इदं चेति** । जगदुदयादिनिमित्तत्वेन परमात्मज्ञानमित्यर्थः ।

---

१) जगदुदयादिना निमित्तत्वप्रकारक २) तत्त्वसं. ११ तमे श्लोके । ३) नष्टस्योत्पत्त्याभावैक ४) 'अधिष्ठानत्वेति श्रुतौ' इत्येकः पाठः 'अधिष्ठानत्वेन तु' इति च ग्रन्थद्वयपाठः । ५) तै. उ. । ६) ब्र. सू. १-१-२

(२ के. विषयः— १. अव्याख्येयत्वशङ्कापुरःसरं तन्निरासकसामग्र्य-नुवादकतया मुमुक्षुणेत्यादिप्रथमवाक्यस्यावतरणम् । २. खलुशब्दार्थः । ३. अनुबन्धचतुष्टयम् । ४. 'जगदुदयादिनिमित्तत्वेन' इत्यस्य आशयकथन-पुरःसरमवतरणम् । ५. 'जगत्, आदि, निमित्त' पदानामर्थः । ६. सृष्टि-संहारादिषु सृष्टेः प्राथम्ये निमित्तम् । ७. 'निमित्तत्वेन' इति कारणसामान्य-निर्देशप्रयोजनम् । ८. 'अवश्यम्' इतिपदस्यप्रयोजनम् अर्थश्च । ९. 'सच्छास्त्राणाम्' इति पदार्थः । १० 'अवान्तर'पदप्रयोजनम् । ११. 'भेदभिन्नस्य' इत्यत्र पदार्थः, भेदशब्दसार्थक्यञ्च । १२. 'अपेक्षते'-इतिपदभावः । १३. 'तथा' इतिपदस्य अर्थः भावश्च । १४. 'प्रधानाङ्ग-भूतम्' इतिपदस्य शास्त्रप्रकरणयोरेकार्थकत्वानुपपत्तिशङ्कातत्समाधानाभ्यामव-तरणम् अर्थश्च । १५. 'प्रधानाङ्गभूतम्' इतिपदस्य अनन्ततत्त्वानां सङ्ग्रहानु पपत्तितन्निरासाभ्यामवतरणम् । १६. 'प्रकरणम्' इतिपदस्य भावः । १७. संगृह्यप्रतिपादनेऽप्रयोजनत्वशङ्कया 'शिष्य' इतिपदस्य अवतरणम् तत्प्रयोजनञ्च ।)

के०—**ननु** इदं प्रकरणं न व्याख्येयं; प्रेक्षावदनुपादेयत्वात्, प्रेक्षावदुपादे-यस्यैव च व्याख्येयत्वात् । तदनुपादेयत्वञ्च तद्व्यापकविषयादिमत्त्वाभावसिद्धम् । न चास्य प्रकरणतया शास्त्रैकदेशसम्बद्धत्वात्, शास्त्रीयविषयादिकमेवात्र विषयादिकमिति वाच्यम्; शास्त्रस्यापि तच्छून्यत्वात् ॥ —**इत्यतोऽ**स्य प्रकरण-तासिद्धये शास्त्रैकदेशसम्बन्धित्वं दर्शयितुं शास्त्रार्थं तावदनुवदति **मुमुक्षुणे-त्यादिना अविप्रतिपन्नोऽर्थः इत्यन्तेन** ।

**खलु** शब्दो वाक्यालङ्कारे प्रसिद्धौ वा ॥

**अनेन** उपलक्षणत्वेन 'मुमुक्षुणा'रूपमधिकारिविशेषणमभिदधता—साधनचतुष्टयसम्पन्नः शास्त्रे अधिकारी, परमात्मा विषयः, तज्ज्ञानम् अवा-न्तरप्रयोजनम्, मोक्षश्च मुख्यप्रयोजनम्, यथायोग्यं सम्बन्धः —इति शास्त्रीयम् अनुबन्धचतुष्टयं प्रदर्शितं भवति ।

ननु परमात्मपदेन ईश्वरस्य ज्ञातत्वात् न तस्य शास्त्रविषयत्वम्; इत्यतः स्वरूपमात्रावगमेऽपि तन्मात्रस्य मोक्षासाधनत्वात्, जगदुदयादिनिमित्तत्वेन तदव-

गमस्यैतत्साधनत्वात्, मोक्षसाधनीभूतजगदुदया[1]दिनिमित्तत्वप्रकारकतज्ज्ञानस्य शास्त्रमात्रसाध्यत्वात्, युक्तं तस्य शास्त्रविषयत्वमित्याशयेनोक्तं '**जगदुदयादिनिमित्तत्वेनेति** ।

अत्र '**जगच्छब्दो**' भगवद्व्यतिरिक्तसर्वपरः । उदयादीति '**आदि**'-पदेन च स्थित्यादेः सङ्ग्रहः । जगदुदयादिहेतुत्वं च '[2]समासव्यासयोगतः' इति वक्ष्यमाणप्रकरणे द्रष्टव्यम् ।

यद्यप्यत्र सृष्टिसंहारप्रवाहस्यानादित्वेन दर्शपूर्णमासीतिथ्योरिव प्राथम्यानिर्णयेन प्राधान्यासिद्धेः, नोदयस्यैव प्रथमं निर्देशे निमित्तमस्ति; तथापि उत्पन्नस्य नाशवत् नष्टस्योत्पत्त्य[3]भावेन एकव्यक्त्यपेक्षयोदयादेः प्राथम्यादिसम्भवात्, तत्प्रयुक्तप्राधान्यादिविवक्षयोदयस्य प्राथम्येन निर्देश इति द्रष्टव्यम् ।

कारणत्वेनेति सामान्यमनभिधाय **निमित्तत्वेन** इति तद्विशेषनिर्देशस्तु "उपादानत्वे ब्रह्मणो निर्विकारत्वानुपपत्तिः; विवर्ताधिष्ठानत्वे तु श्रुतौ[4] 'यतो वा इमानि भूतानि जायन्ते' इतिनिर्देशः, [6]सूत्रेजगज्जन्मादिनिर्देशश्चासङ्गतः; न हि 'शुक्तितो रजतं जायते, इति निर्देशोऽस्ति" इति परपक्षनिराससूचनाय इति द्रष्टव्यम् ।

'**अवश्यमिति**' । तेन विना मोक्षाभावात् । कर्मणो मोक्षहेतुत्वेऽपि तत्त्वज्ञानद्वारैव तत्, नतु तत्त्वज्ञानसमकक्षतया; इति भावेनावश्यपदप्रयोगः ।

**सच्छास्त्राणां**= श्रुतितन्मीमांसादिसच्छास्त्राणामित्यर्थः

ननु यदि मोक्षार्थं जगदुदयादिनिमित्तत्वेन परमात्मज्ञानमावश्यकम्, तर्हि परतत्त्वमेव विषयीभूतं विविच्यताम्; किं शास्त्रे अपरतत्त्वनिरूपणेन ? इत्यत आह **इदं चेति** । जगदुदयादिनिमित्तत्वेन परमात्मज्ञानमित्यर्थः ।

---

१) जगदुदयादिना निमित्तत्वप्रकारक २) तत्त्वसं. १ १ तमे श्लोके । ३) नष्टस्योत्पत्त्याभाविक ४) 'अधिष्ठानत्वेति श्रुतौ' इत्येकः पाठः 'अधिष्ठानत्वेन तु' इति च ग्रन्थद्वयपाठः । ५) तै. उ. ।
६) ब्र. सू. १. १-२

(२ के. विषयः— १. अव्याख्येयत्वशङ्कापुरःसरं तन्निरासकसामग्र्य-नुवादकतया मुमुक्षुणेत्यादिप्रथमवाक्यस्यावतरणम् । २. खलुशब्दार्थः । ३. अनुबन्धचतुष्टयम् । ४. 'जगदुदयादिनिमित्तत्वेन' इत्यस्य आशयकथन-पुरःसरमवतरणम् । ५. 'जगत्, आदि, निमित्त' पदानामर्थः । ६. सृष्टि-संहारादिषु सृष्टेः प्राथम्ये निमित्तम् । ७. 'निमित्तत्वेन' इति कारणसामान्य-निर्देशप्रयोजनम् । ८. 'अवश्यम्' इतिपदस्यप्रयोजनम् अर्थश्च । ९. 'सच्छास्त्राणाम्' इति पदार्थः । १० 'अवान्तर'पदप्रयोजनम् । ११. 'भेदभिन्नस्य' इत्यत्र पदार्थः, भेदशब्दसार्थक्यञ्च । १२. 'अपेक्षते'-इतिपदभावः । १३. 'तथा' इतिपदस्य अर्थः भावश्च । १४. 'प्रधानाङ्ग-भूतम्' इतिपदस्य शास्त्रप्रकरणयोरेकार्थकत्वानुपपत्तिशङ्कातत्समाधानाभ्यामव-तरणम् अर्थश्च । १५. 'प्रधानाङ्गभूतम्' इतिपदस्य अनन्ततत्त्वानां सङ्ग्रहानु पपत्तितन्निरासाभ्यामवतरणम् । १६. 'प्रकरणम्' इतिपदस्य भावः । १७. संगृह्यप्रतिपादनेऽप्रयोजनत्वशङ्कया 'शिष्य' इतिपदस्य अवतरणम् तत्प्रयोजनञ्च ।)

के०—**ननु** इदं प्रकरणं न व्याख्येयं; प्रेक्षावदनुपादेयत्वात्, प्रेक्षावदुपादे-यस्यैव च व्याख्येयत्वात् । तदनुपादेयत्वञ्च तद्व्यापकविषयादिमत्त्वाभावसिद्धम् । न चास्य प्रकरणतया शास्त्रैकदेशसम्बद्धत्वात्, शास्त्रीयविषयादिकमेवात्र विषयादिकमिति वाच्यम्; शास्त्रस्यापि तच्छून्यत्वात् ॥ —**इत्यतो**ऽस्य प्रकरण-तासिद्धये शास्त्रैकदेशसम्बन्धित्वं दर्शयितुं शास्त्रार्थं तावदनुवदति **मुमुक्षुणे-त्यादिना अविप्रतिपन्नोऽर्थः इत्यन्तेन** ।

**खलु** शब्दो वाक्यालङ्कारे प्रसिद्धौ वा ॥

**अनेन** उपलक्षणत्वेन 'मुमुक्षुणा'रूपमधिकारिविशेषणमभिदधता—साधनचतुष्टयसम्पन्नः शास्त्रे अधिकारी, परमात्मा विषयः, तज्ज्ञानम् अवा-न्तरप्रयोजनम्, मोक्षश्च मुख्यप्रयोजनम्, यथायोग्यं सम्बन्धः —इति शास्त्रीयम् अनुबन्धचतुष्टयं प्रदर्शितं भवति ।

ननु परमात्मपदेन ईश्वरस्य ज्ञातत्वात् न तस्य शास्त्रविषयत्वम्; इत्यतः स्वरूपमात्रावगमेऽपि तन्मात्रस्य मोक्षासाधनत्वात्, जगदुदयादिनिमित्तत्वेन तदव-

गमस्यैतत्साधनत्वात्, मोक्षसाधनीभूतजगदुदया[1]दिनिमित्तत्वप्रकारकतज्ज्ञानस्य शास्त्रमात्रसाध्यत्वात्, युक्तं तस्य शास्त्रविषयत्वमित्याशयेनोक्तं '**जगदुदयादिनिमित्तत्वेनेति** ।

अत्र '**जगच्छब्दो**' भगवद्व्यतिरिक्तसर्वपरः । उदयादीति '**आदि**'-पदेन च स्थित्यादेः सङ्ग्रहः । जगदुदयादिहेतुत्वं च '[2]अभ्यासस्योगतः' इति वक्ष्यमाणप्रकरणे द्रष्टव्यम् ।

यद्यप्यत्र सृष्टिसंहारप्रवाहस्यानादित्वेन दर्शपूर्णमासीतिथ्योरिव प्राथम्यानिर्णयेन प्राधान्यासिद्धेः, नोदयस्यैव प्रथमं निर्देशे निमित्तमस्ति; तथापि उत्पन्नस्य नाशवत् नष्टस्योत्पत्त्य[3]भावेन एकव्यक्त्यपेक्षयोदयादेः प्राथम्यादिसम्भवात्, तत्प्रयुक्तप्राधान्यादिविवक्षयोदयस्य प्राथम्येन निर्देश इति द्रष्टव्यम् ।

कारणत्वेनेति सामान्यमनभिधाय **निमित्तत्वेन** इति तद्विशेषनिर्देशस्तु "उपादानत्वे ब्रह्मणो निर्विकारत्वानुपपत्तिः; विवर्ताधिष्ठानत्वे तु[4] श्रुतौ[5] 'यतो वा इमानि भूतानि जायन्ते' इतिनिर्देशः, सूत्रे[6]जगज्जन्मादिनिर्देशश्चासङ्गतः; न हि 'शुक्तितो रजतं जायते, इति निर्देशोऽस्ति" इति परपक्षनिरासस्सूचनाय इति द्रष्टव्यम् ।

'**अवश्यमिति**' । तेन विना मोक्षाभावात् । कर्मणो मोक्षहेतुत्वेऽपि तत्त्वज्ञानद्वारैव तत्, नतु तत्त्वज्ञानसमकक्षतया; इति भावेनावश्यपदप्रयोगः ।

**सच्छास्त्राणां**= श्रुतितन्मीमांसादिसच्छास्त्राणामित्यर्थः

ननु यदि मोक्षार्थं जगदुदयादिनिमित्तत्वेन परमात्मज्ञानमावश्यकम्, तर्हि परतत्त्वमेव विषयीभूतं विविच्यताम्; किं शास्त्रे अपरतत्त्वनिरूपणेन ? इत्यत आह **इदं चेति** । जगदुदयादिनिमित्तत्वेन परमात्मज्ञानमित्यर्थः ।

---

१) जगदुदयादिना निमित्तत्वप्रकारक २) तत्त्वसं. ११ तमे श्लोके । ३) नष्टस्योत्पत्त्याभावेक ४) 'अधिष्ठानत्वेति श्रुतौ' इत्येकः पाठः 'अधिष्ठानत्वेन तु' इति च ग्रन्थद्वयपाठः । ५) तै. उ. । ६) ब्र. सू. १-१-२

**अवान्तरेति** । उदयादीनां वक्ष्यमाणरीत्या प्रतिनियतत्वादिति भावः ।

**भेदमिन्नस्येति** । भिद्यन्ते एभिरिति भेदाः=असाधारणधर्माः, तैर्भिन्नस्य=भेदवत्तया प्रमितस्येत्येवार्थः; अतो न भेदशब्दस्य वैयर्थ्यमिति ध्येयम् ।

**अपेक्षत इति** । अननुसंहितोपाधेरुपहितप्रत्ययायोगादिति भावः ।

**तथेति** । अवान्तरानेकभेदभिन्नत्वेनेत्यर्थः । अतः शास्त्रे जगन्निरूपणमप्यावश्यकमिति भावः ॥

नन्वेवं शास्त्रादेव परापरतत्त्वप्रतिपत्तिसम्भवेन किमपूर्वप्रकरणनिर्माणेन ? इत्यत उक्तं **तदिदमिति** । शास्त्रे तत्त्वद्वयस्य प्रतिपादितत्वेऽपि विक्षिप्य प्रतिपादितत्वात्सङ्गृह्य प्रतिपादनार्थमपूर्वनिर्माणमावश्यकमेवेति भावः ।

नन्वेवं परापरतत्त्वप्रतिपादकस्य शास्त्रस्यार्थैकत्वाभावात् कथं तन्निबन्धने[1] स्वस्मिन्नेकवाक्यत्वम् ? इत्यतः उभयप्रतिपादकत्वेऽपि साम्येन तदभावात्, साम्येनोभयप्रतिपादकत्वस्यैव वाक्यभेदापादकत्वात्, युक्तमेकवाक्यत्वं शास्त्रस्य इत्याशयेनोक्तं **प्रधानेत्यादि** । एकं प्रधानत्वेन, अपरं च तदङ्गत्वेनेत्यर्थः ।

अनन्तानां तत्त्वानां संग्रह एवाशक्य[2] इत्यतोऽनन्तानामपि प्रधानत्वतदङ्गत्वरूपधर्मद्वयावच्छिन्नत्वानेन रूपेण संग्रहो युक्त इति भावेन **प्रधानेत्याद्युक्तमित्यप्याहुः** ।

**प्रकरणमिति** । सर्वत्र प्रकरणस्य शास्त्रीयाधिकार्यादिनाऽधिकार्यादिमत्त्वमन्यथा प्रकरणमात्रस्यैवानारम्भणीयत्वप्रसङ्गादिति भावः ।

प्रतिपादनफ[3]लीभूतायाः प्रतिपत्तेः विक्षिप्य प्रतिपादनेप्यविशिष्टत्वात् किं तत्संगृह्य प्रतिपादनेन ? इत्यत उक्तं **शिष्येति** । अनेनैव बालबोधनमवान्तरप्रयोजनं प्रकरणत्वसिद्ध्यङ्गं च दर्शितं भवति ॥

---

१. कथं तन्निबन्धनम् । स्वस्मिन्नेकवाक्यत्वम् ।

२. एवाशक्यमित्यतो ।  ३. प्रतिपादनकालीभूतायाः ।

[ **२वि.** विषयः– १. अनुपादेयत्वशङ्कावारकप्रयोजनोक्तित्वेन 'मुमुक्षुणा इत्यादिवाक्यत्रयस्य अवतरणम् ॥ २. प्रथमवाक्यस्य प्रकारद्वयेन अन्वयार्थौ । ३. द्वितीयवाक्यव्याख्याने –क. प्रथमवाक्यसङ्गतिप्रतिपादकतया अवतरणम्, ख. पदार्थः, ग. जगदुदयादिनिमित्तत्वेन परमात्मज्ञानस्य विभिन्नपरतन्त्रजगज्ज्ञानसापेक्षत्वम् । ४. तृतीयवाक्यव्याख्याने– क. 'अस्य ग्रन्थस्य शास्त्रेण गतार्थता'इतिशङ्कानिरासकत्वेन अवतरणम्, ख. पदार्थः, ग. 'भगवान्'-पदस्य कृत्यम्, घ. एतद्वाक्यस्य भावार्थश्च । ]

'ननु व्याख्येयतत्त्वसङ्ख्यानस्य फलाभावात् प्रेक्षावदनुपादेयत्वम्' इतिशङ्कावारणाय प्रयोजनमाह **मुमुक्षुणा खल्वित्यादीना आचार्य इत्यन्तेन ॥**

परमात्मा= सर्वोत्कृष्टचेतनो विष्णुः, जगतः= परतन्त्रप्रपञ्चस्य, उदयः= उत्पत्तिः, 'आदि'पदेन स्थिति-संहारनियमन-ज्ञान-अज्ञान-बन्ध-मोक्ष-सुख-दुःख-आदयो गृह्यन्ते, तेषाम् निमित्तत्वेन= निमित्तकारणत्वेन, अवश्यम्= नियमेन, अवगन्तव्यः= ज्ञातव्यः; इति= एतत्प्रमेयम्, सकलसच्छास्त्राणाम्= ऋगादि-सदागमानाम्, अविप्रतिपन्नोऽर्थः= विवादागोचरोऽर्थः; इत्यर्थः ।

यद्वा 'अर्थ'शब्दः 'अवगन्तव्यः' इत्यनेन सम्बध्यते । तथा; सकलानि सच्छास्त्राणि, विचारिततत्त्वसम्बन्धेन[1] येषाम्, ते तथोक्ताः; विचारितसकल-सच्छास्त्राः इति यावत्, तेषाम्; अविप्रतिपन्नः=सम्प्रतिपन्नः, भवति; इत्यर्थः ।

'खलु' शब्दः उक्तार्थे प्रमाणप्रसिद्धिसूचनार्थः ॥

ननु अस्तु नाम अयमर्थः सकलशास्त्राणामविप्रतिपन्नः, तथापि किं प्रकृते ? इत्यत आह **इदञ्चेति ।**

जगदुदयादिनिमित्तत्वेन परमपुरुषज्ञानम्, तु; अवान्तराः= परतन्त्रैक-देशवर्तिनः, अनेके= बहवः, भेदाः= 'भिद्यते एभिः' इतिव्युत्पत्त्या

१. विचारिततत्त्वसम्बन्धो येषाम् ।

भेदकधर्माः, तैः = भावत्वाभावत्व– चेतनत्वाचेतनत्व– नित्यत्वानित्यत्व–आदिभिः[1], भिन्नस्य= विभक्तस्य; जगतो विज्ञानम् अपेक्षते; इति हेतोः, जगदपि, तथा= परमात्मवत्, अवान्तरानेकभेदभिन्नतया, विज्ञातव्यम्; इत्यर्थः ।

यद्यपि जगदुदयादिनिमित्तत्वेन परमात्मज्ञानम्, उदयादिनिमित्तत्वेन विभक्तपरतन्त्रज्ञानसापेक्षम्, निरूपकज्ञानमन्तरेण निरूप्यज्ञानायोगात्; तथापि उदयादिधर्माणां भावत्वाभावत्वाद्यनेकविभाजकधर्मविभिन्ने[2] परतन्त्रे जाते ज्ञातव्यत्वात्, अनेन प्रकारेण विभिन्नपरतन्त्रजगज्ज्ञानसापेक्षम्; इति ज्ञातव्यम् ॥

ननु अस्तु उक्तरीत्या तत्त्वद्वयं मुमुक्षुणा अवश्यं ज्ञातव्यम्, तथापि तत्त्वद्वयस्य शास्त्रे सम्यगुक्तत्वात् तेनैव तत्त्वज्ञानसम्भवात्, किमनेन ? इत्यत आह **तदिदमिति** ।

तत्= जगदुदयादिनिमित्तत्वेन मुमुक्षुज्ञेयम्, इदम्= तज्ज्ञानोपयोगितया मुमुक्षुज्ञेयम्, इति, प्रधानाङ्गभूतम्= मुख्यामुख्यरूपम्–तत्त्वद्वयम्, शास्त्रे, विक्षिप्य= व्यवधानं कृत्वा– नोद्देशलक्षणविभागपरीक्षाः कृत्वा इति यावत्, प्रतिपादितम्= वर्णितम्, शिष्यहिततया= शिष्याणाम् अनायासेन तत्त्वद्वयज्ञानसाधनरूपेष्टतया, सङ्गृह्य= मेलनं कृत्वा, प्रतिपादयितुम्, भगवान्, आचार्यः=

"आचिनोति हि[3] शास्त्रार्थानाचारान्ग्राहयत्युत ।
चर्ययाऽऽचरते[4] यस्तु तमाचार्यं प्रचक्षते ॥"

इति स्मृत्युक्ताचार्यलक्षणोपेतः आनन्दतीर्थमुनिः, प्रकरणम्, इदम्, आरभते= करोति; इत्यर्थः ।

---

१. आदिभिन्नस्य विरक्तस्य २. भावत्वाभावत्वादनेक
३. 'हि'शब्दो नास्ति । ४. चरया चरते ।

एवंविधप्रकरणे अस्य सामर्थ्यज्ञापनाय 'भगवान्' इत्युक्तम् ।

शिष्याणाम् अनायासेन तत्त्वद्वयज्ञानसाधनत्वात् इदं प्रकरणं सफलम् इति भावः ।

[ २ मु. विषयः– १. व्याकर्तव्यतासमर्थकत्वेन 'मुमुक्षुणा'– इत्यादिवाक्यत्रयस्य अवतरणम् । ]

**ननु** एतस्य प्रकरणस्य अधिकार्यादिशून्यत्वेन अनारम्भणीयत्वात् न व्याकर्तव्यता ।, न च यच्छास्त्रीयमेतत्[1] तत्प्रयोजनादिमत्त्वमेव अस्य प्रकरणत्वात् इति; शास्त्रस्यापि विषयादिशून्यत्वात् । विषयादिमत्त्वे (च) तेनैव चरितार्थत्वात् इदम् अनारम्भणीयमेव ।, अतो न व्याकर्तव्यता ॥ **इत्यत** आह मुमुक्षुणेत्यादिना आचार्य इत्यनेन ॥

[ २ **का.** विषयः– १. अस्य प्रकरणस्य आरम्भणीयताप्रयोजकविषयादिमत्त्वसमर्थकतया 'मुमुक्षुणा'इत्यादिवाक्यत्रयस्य अवतरणम् । २. प्रथमवाक्यगतपदानाम् अर्थप्रयोजनादिकम् । ३. द्वितीयवाक्यटिप्पण्याम् – क. वाक्यस्यार्थः, ख. जगतः अवान्तरानेकभेदवत्त्वेन ज्ञानस्य आवश्यकता च । ४. तृतीयवाक्यटिप्पण्याम्– क. पदार्थः, ख. विषयादिमत्तया व्याख्येयत्वोपसंहारकतया वाक्यस्य आशयश्च । ५. तत्त्वसङ्ख्यानस्य तत्त्वविवेकव्याख्यानरूपत्वम् । ]

**ननु** इदं प्रकरणम् अनारम्भणीयम्, विषयाद्यभावात् ॥, न च तत्त्वान्येव विषयः; तेषां शास्त्रे निर्णीतत्त्वात्; अनिर्णीतस्य च विषयत्वात् ।, अत एव अस्य न प्रयोजनादिकमपि ॥ तथाच नेदं व्याख्येयम् ॥ **इत्याशङ्कां** परिजिहीर्षुः एतत्प्रकरणस्य विषयादिमत्त्वं तावत् समर्थयते **मुमुक्षुणेत्यादिना आचार्य इत्यन्तेन** ॥

---

१. मेतत्प्रयोजनादिमत्त्वमेव ।

**मुमुक्षुणा** इत्युपलक्षणम् । शमादिमता इत्यपि ग्राह्यम् ॥ मोक्षस्य मुख्यप्रयोजनत्वलाभाय 'मुमुक्षु'ग्रहणम् ।

'खलु'शब्दः प्रसिद्ध्यर्थः ।

**जगदुदयादिनिमित्तत्वेने**ति । जगतः= भावाभावाद्यनेकविधपरतन्त्र-प्रपञ्चस्य; यथासम्भवम् उत्पत्ति-स्थिति-लय-नियमन-आदिनिमित्तत्वेन, न तु तदुपादानत्वेन ।

**अवश्यमवगन्तव्यः**– तद्विज्ञानमेव मोक्षहेतुः, न तु कर्मादिः; इति यावत् ।

अस्यार्थस्य दुःशास्त्रविप्रतिपन्नत्वात् **सदिति** ॥

इदञ्च = उक्तप्रकारेण परमात्मावगमनम्, अवान्तरानेक-भावाभावादि-प्रभेदैः गृहीतभेदस्य, जगतः, अवधारणम्, अपेक्षते; इत्यर्थः ।

यद्यपि सामान्यतो जगदुदयादिनिमित्तत्वज्ञाने न अवान्तरज्ञानापेक्षा; तथापि सर्वेषाम् एकविधोत्पत्त्याद्यभावात्, वक्ष्यमाणरीत्या यथासम्भवम्, उद्भवादिनिमित्तत्वेन विशिष्यैव हरेरवगन्तव्यत्वात्, जगदपि अवान्तर-अनेक-भेदवत्त्वेन अवश्यम् अवगन्तव्यम् ॥

तदिदम्= उक्तप्रकारेण अवगन्तव्यम् निरूप्यत्वेन बुद्धिसन्निहितञ्च तत्त्वद्वयम्; वेदतन्मीमांसादौ, विक्षिप्य, निरूपितम्; शिष्येष्टत्वेन, एकीकृत्य, शिष्याणाम्, निरूपयितुम् अपेक्षितम् । उक्तविधतत्त्वगोचर-एकाकार-ज्ञानम् उत्पादयितुम्; इति यावत् ।

नन्वेवम् अर्थैक्याभावात् एकप्रकरणत्वानुपपत्तिः; इत्यतः **प्रधानाङ्ग-भूतम्** इत्युक्तम् । प्रधानभूतार्थस्य एकत्वात् एकप्रकरणत्वम्; इति भावः ॥ **प्राधान्यञ्च** अन्यजिज्ञासाऽनधीनजिज्ञासाविषयत्वम्, साक्षान्मुख्यप्रयोजन साधनत्वं वा । तदङ्गत्वम्= तज्जिज्ञासाऽधीनजिज्ञासाविषयत्वम्, यद्वा

असाक्षान्मुख्यप्रयोजनहेतुत्वम् ।।– अपरतत्त्वं हि साक्षान्मोक्षहेतुपरतत्त्वजिज्ञासायां[1] जिज्ञास्यते; न परतत्त्वम् अन्यजिज्ञासायाम्[2]; इति तयोरङ्गप्रधानभावः ।

**भगवानिति** आचार्यस्यैव एतादृशप्रकरणनिर्माणशक्तिः इति सूचयति ।।

अयमाशयः ।।– न तावत् निर्विषयमिदं प्रकरणम्, शास्त्रे विक्षिप्य-प्रतिपादितयावदर्थावधारणासमर्थानां तत्र तत्र अज्ञानसंशयादिसम्भवेन तान्प्रति तत्त्वानां विषयत्वोपपत्तेः । नापि निष्प्रयोजनम्, मोक्षसाधनशास्त्राधीनपरत्त्वावधारणस्य अनायसेन सम्पादनरूपप्रयोजनवत्त्वात् ।। अत एव अधिकार्यादि-सम्भवात् आरम्भणीयम् ।। ततश्च गहनार्थत्वात् व्याख्येयम् ।।

यद्यपि तत्त्वविवेके विक्षिप्तसंग्रहोऽपिकृतः; तथापि अस्य तद्व्याख्यान-रूपत्वात् न वैयर्थ्यम् । यथा 'परतन्त्रम्'इत्यादेः 'अस्वतन्त्रम्'इत्यादि व्याख्यानम्; इति ।।

[ २. भ विषयः– १. द्वितीयवाक्यटिप्पण्याम्– क. 'अयम्'पद-परित्यागेन 'इदम्'पदप्रयोगे प्रयोजनम्, ख. 'अपेक्षते'इत्यत्र अपेक्षायाः प्रयोजनम्, ग. 'तथा'पदस्य प्रकारद्वयेन अर्थश्च । २. तृतीयवाक्यटिप्पण्याम् 'प्रधानाङ्गभूतम्', 'विक्षिप्य' इत्यादयोः अर्थौ । ]

**इदञ्चेति** । जगदुदयादिनिमित्तत्वेन परमात्मनः अवगमनञ्च इत्यर्थः । यद्यपि 'अयम्' इत्युक्तावपि 'अवगमः' इति व्याख्यातुं शक्यम्, तथापि 'अविप्रतिपन्नोर्थः' इति 'अर्थ'शब्दसान्निध्यात् तत्परामर्शोऽयम् इति प्रतीतिः स्यात्; तच्चानुपपन्नम्, अर्थस्य ज्ञानापेक्षाऽभावात्; तस्मात् तथा प्रतीतिः न स्यात् इति, एवमुक्तम् ।

---

१. जिज्ञासया इत्येकः पाठः ।

२. जिज्ञासयेति ।

अपेक्षत इति । अवान्तरानेकभेदभिन्नतया जगदज्ञाने 'समासव्यासयोगतः' इति प्रकरणान्ते वक्ष्यमाणरीत्या परमात्मनो जगदुदयादिनिमित्तत्वज्ञानमेव दुष्करं स्यात्; अतः तज्ज्ञानं तदपेक्षते; इत्यर्थः ।

तथेति । अवान्तरानेकभेदभिन्नतया इत्यर्थः । [2] अथवा यथा परमात्मा अवश्यम् अवगन्तव्यः, तथा; इत्यर्थः ॥

प्रधानाङ्गभूतमिति । प्रधानभूतं तत्त्वम्—परमात्माख्यम्, तदङ्गभूतं तत्त्वम् जगत्; इत्यर्थः ।

[3] विक्षिप्येति । अन्यार्थविचारव्यवधानेन इत्यर्थः ॥

[ ३ टी. विषयः १- आचार्यकृत मङ्गलाचरणम् । तत्र—क. मङ्गलानुष्ठानावश्यकत्वसमर्थनसहिता अचार्यकृतमङ्गलानुष्ठानाभावशङ्का, ख. प्रकारद्वयेन आचार्यकृतमङ्गलानुष्ठानसमर्थनम् । ]

ननु प्रकरणादौ [4] मङ्गलं किमपि कस्मात् नानुष्ठितम् ?— १. न तावत् तदफलमेव, प्रेक्षावद्भिरनुष्ठितत्वात्; २. नापि प्रारिप्सितपरिसमाप्त्यादिव्यतिरिक्तफलम्, नियमेन प्रारम्भे तदनुष्ठानात् ।

उच्यते— अनुष्ठितमेव भगवता मङ्गलम्, मानसादेरपि तस्य सम्भवात् । तच्च परमास्तिकत्वात् अनुमीयते ॥ यच्चायं स्वातन्त्र्यादिविशिष्टस्य विष्णोः आदित एव सङ्कीर्तनं करोति, किं ततोन्यत् मङ्गलं नाम? अन्यपरमपि तत् भक्त्या अनुष्ठितं स्वभावात् सम्पादयत्येव अखिलमङ्गलानि ॥ इति ॥

---

१.२.३. अयं विषयो ग्रन्थान्तरे नास्ति ।

४. मङ्गलाचरणम् इति विठ्ठलभट्टी-काशी-टिप्पण्योः प्रतीकम् ।

[३ स. विषयः-- क) मङ्गलस्य अनुष्ठेयत्वसमर्थनार्थम् १. मङ्गलानुष्ठानाभावे कारणद्वयकल्पनम्। २. प्रथमकारणनिरासकतया 'न तावत्'इतिवाक्यस्य अवतरणम्। ३. तदुपपादकतया अ. 'प्रेक्षावद्भिः'इत्यादिहेतोः अवतरणम्, आ. तद्भावार्थश्च। ४. द्वितीयकारणनिरासकतया 'नापि'-इत्यादिवाक्यस्य अ. अवतरणम्, आ. भावार्थश्च ॥ ख) प्रकारद्वयेन मङ्गलानुष्ठानसमर्थनम्। १. मानसादिमङ्गलस्य अनुष्ठितत्वम्— अ. निवेशनाभावस्य मङ्गलाभावाननुमापकत्वेन 'उच्यते'इत्यस्य अवतरणम्। आ. आचार्यानुष्ठितमङ्गलप्रकारकथकतया 'मानसादेः'इत्यादिहेतोः अवतरणम्, 'आदि'पदस्यार्थः, मानसस्य स्वपदेन ग्रहणे प्रयोजनञ्च। इ. आचार्यानुष्ठितमानसिकमङ्गलानुमापकत्वेन 'तच्च'इत्यादिवाक्यस्यावतरणम्। २. वाचिकमङ्गलस्यापि अनुष्ठितत्वम् अ- प्रकारान्तरेण मङ्गलानुष्ठितत्वोपपादकत्वेन 'यच्चायम्'इत्यादिवाक्यस्य अवतरणम्। आ- 'स्वतन्त्रम्'इत्यादिग्रन्थस्य च तत्त्वविभागकथनपरत्वेऽपि मङ्गलजनकत्वम्।]

**नानुष्ठितमिति**। तत्किम् १) अफलत्वात्? उत २) समाप्त्यतिरिक्तफलत्वात्?

नाद्य इत्याह **न तावदिति**॥ कुतः? इत्यत आह **प्रेक्षावदिति**। प्रयोजनमनुद्दिश्य मन्दस्यापि अप्रवृत्तेः प्रेक्षावतां सुतरां प्रवृत्त्यनुपपत्तेः, इति भावः॥

द्वितीयं निरस्यति **नापीति**। तथात्वे प्रारम्भे नियमेन अनुष्ठानं न स्यात्; इति भावः॥

**न ग्रन्थे निवेशनमेव मङ्गलम्, नापि तेन व्याप्तम्; मानसादेरपि सम्भवात्।- अतो न ग्रन्थे निवेशनाभावेन मङ्गलाभावानुमानम्; इत्याह**
**उच्यतइति**।

तर्हि आचार्येण किं रूपं मङ्गलम् अनुष्ठितम्? इति जिज्ञासायाम् आह **मानसादेरिति**। 'आदि'पदेन कायिकवाचिकयोः ग्रहः॥ अत्र

मानसस्य कायिकाद्यपेक्षया प्राधान्यात् स्वपदेन उपादानम्, इतरयोस्तु 'आदि' पदेन; इति ज्ञातव्यम् ।

ननु एवं कुतः कल्प्यते ? अतीतत्वेन प्रत्यक्षाविषयस्य मङ्गलस्य आगमाभावात् अनुष्ठानाभावः किं न स्यात् ? इत्यतः 'परमास्तिकत्मात्'-इत्यनुमानसिद्धत्वात्; इत्याह **तच्चेति** । तदयं प्रयोगः— आचार्यः मङ्गलानुष्ठानवान् परमास्तिकत्वात् सम्मतवत् इति— ॥

यस्तु परमास्तिकत्वे विप्रतिपन्नः, तं प्रति आह **यच्चायमिति** ।

ननु 'स्वतन्त्रम्' इत्यादिग्रन्थस्य कथं मङ्गलार्थत्वम् ? इत्यत आह **अन्यपरमपीति** ॥

[ ३**के**. विषयः— क) अव्याख्येयत्वशङ्काग्रन्थस्पष्टीकरणे— १. व्याकर्तव्यताप्रयोजक—उपादेयताप्रयोजक—स्वरूपलाभप्रयोजक— निरन्तरायपरिसमाप्तिप्रयोजक—मङ्गलाचरण—रहितत्वात् अस्य अव्याकर्तव्यत्वम्, मङ्गलसमाप्त्योः साध्यसाधनभावस्य च परिशेषानुमानसिद्धत्वम्; इत्यभिप्रायकत्वेन 'ननु'—इत्यादि'उच्यते'इत्यन्तस्य अवतरणम् । २. 'नानुष्ठितत्वम्'इत्यत्र निवेशनाभावादननुष्ठितत्वम् इति भावः । ३. अननुष्ठाने कारणद्वयकल्पनम्' । ४. तत्प्रथमकारणनिरसने— अ. तन्निरासकयुक्तिप्रदर्शनपूर्वकतद्युक्तिकथकतया 'न तावत्' इत्यादिसहेतुकस्य वाक्यस्य अवतरणम्, आ. 'प्रेक्षावद्भिरनुष्ठितत्वात्'इत्यत्र पदयोरर्थौ, इ. प्रेक्षावत्त्वार्थभूतस्य 'अभ्रान्तत्वम्'इत्यस्य परिष्कारः, ई. मङ्गलस्य अफलत्वनिरासेन समाप्तिफलकत्वसाधके वक्ष्यमाणे परिशेषानुमाने विशेष्यासिद्धिपरिहारः । ५. द्वितीयकारणनिरसने— अ. तस्मिन्नेव परिशेषानुमाने विशेषणासिध्द्युद्धारकतया मङ्गलानुष्ठाने कल्पितद्वितीयकारणनिरासकयुक्तिकथकतया च 'नापि'इत्यादिवाक्यस्य अवतरणम्, आ. मङ्गलस्य समाप्त्यतिरिक्ताफलकत्वे हेतुत्वेन 'नियमेन'इत्यादिपञ्चम्यन्तस्य अवतरणम्, इ. 'प्रारम्भे'पदस्य अर्थः, ई. 'नापि'इत्यादिलब्धानुमानप्रयोगः, उ. 'नियमेन'इतिपदप्रयोजनम्, ऊ. वक्ष्यमाणपरिशेषानुमाने आरम्भणीयायां व्यभिचारादिना

परिशेषवैयर्थ्यशङ्का, तन्निरसनञ्च । ६. परिशेषानुमानप्रदर्शनपूर्वकः मङ्गलाभावादिना अस्य ग्रन्थस्य अव्याख्येयत्वरूपशङ्कासङ्ग्रहार्थः । ७. समङ्गलत्वादिना अस्य ग्रन्थस्य व्याख्येयत्वमेव -इत्यभिप्रायेण समङ्गलत्वव्यवस्थापकतया 'उच्यते'इत्यादेः शङ्कानिरासकग्रन्थस्य अवतरणम् , भावार्थश्च ।

ख) 'उच्यते'इत्यादेः शङ्कानिरासकग्रन्थस्य स्पष्टीकरणे —१. मङ्गलानुपलम्भस्य तदननुष्ठानान्यथाऽपि उपपत्तिः; इत्यभिप्रायेण 'मानसादेरपि'इत्यादिवाक्यस्य अवतरणम् , अर्थः, 'आदि'पदपरिग्राह्यप्रदर्शनञ्च । २. मानस'-इत्यादि'अनुमीयते'इत्यन्तस्य मतान्तरेण व्याख्यानम् । तत्र निवेशनाभावात् अननुष्ठानसाधकशङ्कां त्रेधा विकल्प्य अ. आद्यविकल्पदूषकतया 'मानस'-इत्यादिपञ्चम्यन्तस्य अवतरणम्, तद्भावश्च, आ. द्वितीयविकल्पदूषकतयाऽपि अभिप्रायपूर्वकम् 'मानस'इत्यादिपञ्चम्यन्तस्यैव अवतरणम्, शेषपूरणञ्च, इ. सोदाहरणतृतीयविकल्पाभिप्रायपूर्वकं तद्दूषकतया 'तच्च'इत्यादिवाक्यस्य अवतरणम्, अर्थः, 'अनुमीयते'इत्युक्त-अनुमानप्रयोगश्च । ३. अननुष्ठानसाधकत्वेन कल्पितस्य निवेशनाभावस्य असिद्धिपरतया अ. 'यच्च'इत्यादिवाक्यस्य अवतरणम् , आ. तदुपपादनम् , इ. 'स्वातन्त्र्यादि'इत्यत्र 'आदि'पदस्य अर्थः ई) स्वातन्त्र्यस्य आदित्वेन ग्रहणे निमित्तञ्च । ४. मङ्गलनिवेशनाभावासिध्युपपादकस्य स्वातन्त्र्यादिसङ्कीर्तनस्य विभाजकधर्मपरत्वेन मङ्गलत्वाभावशङ्का, एकस्याऽपि तस्य उभयरूपत्वेन तन्निरसनञ्च; इत्युभयाशयकत्वेन 'अन्यपरमपि' इत्यादिवाक्यस्य अवतरणम् , 'अन्य'इतिपदस्यार्थश्च ।]

'ननु तथापि इदं न व्याकर्तव्यम् , अनुपादेयत्वात् ; नहि विषयादिमत्तामात्रेण उपादेयत्वम् . किन्नाम स्वरूपालाभेनापि; न चास्य स्वरूपालाभोऽस्ति, मङ्गलाचरणरहितत्वेन तत्साध्यनिरन्तरायपरिसमाप्त्यसम्भवेन असमाप्तत्वात् ।' इति मनसि निधाय; मङ्गलसमाप्त्योः, मानाभावेन साध्यसाधनभावासिद्धेः, कथं मङ्गलाभावेन असमाप्तत्ववर्णनम् ? इत्याशङ्कापरिहाराय, 'परिशेषानुमानेन मङ्गलस्य समाप्तिसाधनत्वंसिद्ध्यति' इत्यभिप्रेत्य गूढाभिसन्धिः पृच्छति **नन्विति** ।।

**नानुष्ठितमिति** ।। 'ननु च कथमवगतमेतत्, यत् आचार्येण मङ्गलं नानुष्ठितम् इति ? अनुपलब्धत्वात् इति चेत्; न, तत्कालीनस्य इदानीम् उपलब्धुमशक्यत्वात् ।' इति चेन्न, ग्रन्थे निवेशनाभावस्य प्रत्यक्षत्वेन तत एव तत्सिद्धेः; इति भावः ॥

अननुष्ठाने किं– १) निष्फलत्वप्रयुक्तम् ? उत २) समाप्त्यन्यफलकत्वप्रयुक्तम्[1] ?

१) 'मङ्गलम् अभीष्टफलकम् शिष्टाचारविषयत्वात् दर्शादिवत्' इत्यनुमानेन सफलत्वसिद्धेः नाद्यः; इत्याह **न तावदिति** ।,

**प्रेक्षावद्भिरिति** । प्रेक्षावत्कृतिविषयत्वात् इत्यर्थः । प्रेक्षावत्त्वं च अभ्रान्तत्वमेव, न वेदप्रामाण्याभ्युपगन्तृत्वम्; वैदिककर्तृके निष्फले कर्मणि व्यभिचारात् ।,

**ननु च** अभ्रान्तत्वम् न सर्वथा सम्भवति, भ्रान्तेः पुरुषधर्मत्वेन असिद्धिप्रसङ्गात्; नापि यत्र क्वचित् अभ्रान्तत्वम्, बौद्धस्यापि तत्कर्तृके मण्डलीकरणादौ व्यभिचारात्; प्रकृतकर्मण्यभ्रान्तत्वोक्तौ च 'मङ्गलम् समाप्तिस्वर्गयोः साधनम्' इति स्वर्गसाधनत्वांशे भ्राम्यतः अशिष्टत्वापातात्; प्रकृतेष्टसाधनत्वांशे भ्रमराहित्यविवक्षायामपि 'मङ्गलघटौ समाप्तिसाधने' इति घटांशे भ्राम्यतः शिष्टत्वे[2]भावप्रसङ्गात्; **इति चेन्न**, प्रकृतकर्मणि प्रकृतेष्टसाधनत्वांशे भ्रमराहित्यस्यैव शिष्टपदार्थत्वात् ॥ न च फलस्यापि शिष्टकृतिविषयत्वात् तत्र व्यभिचारः इति वाच्यम्, साध्यत्वेन कृतिविषयत्वस्यैव हेतुत्वेन विवक्षितत्वात् । फलस्य च कृतिविषयत्वेऽपि न साध्यत्वेन कृतिविषयत्वम्, किन्तु उद्देश्यतया; इति न व्यभिचारः ।

तदनेन विवक्षितपरिशेषानुमाने विशेष्यासिद्धिश्च[3] परिहृता भवति ।

---

१. फलकप्रयुक्तम् । २. शिष्टत्वाभाव ।

३. विशेषसिद्धिश्च इत्येकः पाठः । विशेषणासिद्धिश्च इति च पाठद्वयम् ।

२) विशेषणासिद्धिमुद्धरन्नेव द्वितीयं दूषयति **नापीति** ॥ तत्र हेतुमाह **नियमेनेति** । प्रारम्भे= प्रारम्भात्पूर्वसमये ।

अनेन- मङ्गलम् न समाप्त्यन्यफलकम् प्रारम्भात्पूर्वसमये नियमेनानुष्ठीयमानत्वात् दर्शादिवत् -इत्यनुमानम् उक्तं भवति ।

अत्र च भ्रान्तकर्मणि व्यभिचारपरिहाराय **नियमेनेति** ।

**न च**= आरम्भणीयायां व्यभिचारः, तस्याः प्रारिप्सितपरिसमाप्तिव्यतिरिक्तस्वर्गप्रयोजनकत्वात् ; दर्शारम्भे नियमेनानुष्ठीयमानस्य 'अग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारिप्समानः'इतिश्रुतिसिद्धत्वेन विवक्षितहेतोस्तत्र सिद्धेः।, प्रारिप्सितसमाप्त्युद्देशेन वा४ अनुष्ठानविवक्षया तत्परिहारे च तत एव समाप्तिफलकत्वसिद्धेः, परिशेषवैयर्थ्यम् -**इति वाच्यम्** ; 'प्रारिप्सित समाप्त्यादिव्यतिरिक्तोद्देशेन अनुष्ठानात्' इत्यत्र तात्पर्यात् ; आरम्भणीयाया ५तथात्वात् ॥

**ततश्च** ''मङ्गलम्, समाप्तिफलकम्, समाप्तीतराफलकत्वे सति सफलत्वात्, यत् यदितराफलकत्वे सति सफलम् तत् तत्फलकम्, यथा सम्प्रतिपन्नम्''इतिसामान्यव्याप्तिमूलकपरिशे**षानुमानेन** मङ्गलसमाप्त्योः साध्यसाधनभावबोधात् ; असति साधने साध्यनिष्पत्तेः, असमाप्तत्वेन स्वरूपालाभात्, न विषयादिमतोऽप्यस्य उपादेयत्वम् ; इति अव्याख्येयत्वमेव; इतिसङ्ग्रहार्थः ॥

समङ्गलत्वेन निरन्तरायपरिसमाप्तिसम्भवेन, समाप्तस्य (च) प्रकरणस्य स्वरूपलाभसम्भवेन, न तदभावप्रयुक्तमपि अनुपादेयत्वम् ; इति प्रेक्षावदुपादेयत्वात् व्याख्येयत्वमेव । -इत्यभिप्रेत्य समङ्गलत्वं व्यवस्थापयति **उच्यते इति** ॥ अननुष्ठानासिद्धेः न उक्ताक्षेपावकाशः, इति भावः ।

---

४. 'वा'शब्दः क्वचिन्नास्ति ।
५. तथाभावात् इत्येकत्र । तथात्वात् इति चोभयत्र ।

अनुपलब्धत्वादेव तत्सिद्धिः ।, इत्यतो नानुपलम्भमात्रम् अभाव-साधकम्[६] किन्तु योग्यानुपलम्भ एव; ग्रन्थारम्भकालीनमाचार्यीयमङ्गलानुष्ठानञ्च इदानीमयोग्यम्; इति तत एव अनुपलम्भोपपत्तेः न तेन अननुष्ठानसिद्धिः; इत्याह **मानसादेरपीति** ।। ग्रन्थे निवेशनातिरिक्तस्यापि मानसादिमङ्गलस्य सम्भवात् इत्यर्थः । 'आदि'पदेन कायिकस्य परिग्रहः ।

"ननु ग्रन्थे निवेशनाभावस्य प्रत्यक्षत्वात् तत एव अननुष्ठानसिद्धिरस्तु; इत्यतः; किम् १. निवेशनव्यतिरेकेण अनुष्ठानस्याभावात्, निवेशनाभावस्य च प्रत्यक्षेणैव सिद्धत्वात्, अनुष्ठानाभावसिद्धिः अभिप्रेता ? २. किंवा निवेशनस्य तद्व्यापकत्वात्, व्यापकाभावे व्याप्याभावनियमात्, प्रत्यक्षसिद्धेन निवेशनाभावेन अनुष्ठानाभावानुमानम् अभिप्रेतम् ? ३. किंवा निवेशनस्य अनुष्ठानव्याप्तत्वात्, तदेकसमधिगम्यस्य अनुष्ठानस्य तदभावनिश्चयेन व्यतिरेकसिद्धिः ? इतिविकल्पान्मनसि निधाय;

१. आद्यं दूषयति **मानसादेरिति** । 'तथाच ग्रन्थे निवेशनमेव तदनुष्ठानम्' इत्यसिद्धेः न अनुष्ठानाभावस्य प्रत्यक्षेण सिद्धिः; इति भावः ।

२. ग्रन्थे निवेशनस्य अनुष्ठानव्यापकत्वासिद्धेः, न तन्निवृत्त्या अनुष्ठाना-भावानुमानमपि; इत्यभिप्रेत्य द्वितीयमपि दूषयति **मानसादेरिति** । 'निवेशितस्यापि'इति शेषः।

३. **ननु** अनिवेशितस्यापि मानसादेः मङ्गलत्वेन, निवेशनस्य तद्व्यापकत्वाभावेऽपि निवेशितस्यापि नमस्कारादेः मङ्गलत्वात्, निवेशनम् अनुष्ठानव्याप्यं स्यादेव । ततश्च ग्रन्थे निवेशनस्य अनुष्ठानव्याप्यत्वात् तत्कालीने आचार्यीय-मङ्गलानुष्ठानेऽपि तदेव प्रमाणं वाच्यम्, व्याप्यान्तरादर्शनेन अनुष्ठानस्य

६. अभावसाधकमिति प्रसङ्गात् किन्तु ।

निवेशनैकप्रमाणकत्वात् ॥ तथाच रूपाद्युपलब्ध्येकप्रमाणकस्य चक्षुरादेः रूपाद्युपलब्ध्यभावे व्यतिरेकनिश्चयसन्देहौ यथा; एवम् ग्रन्थे निवेशनैकप्रमाणकस्य मङ्गलानुष्ठानस्य तदभावेन व्यतिरेकनिर्णयसन्देहावेव स्याताम् ; इति कथम् अनुष्ठाननिर्णयः ? **इति तृतीयं पक्षं** दूषयति **तच्चेति** । स्यादेव रूपाद्यनुपलब्ध्या चक्षुरादेरभावनिर्णयः, मानान्तराभावेन तस्य चक्षुराद्युपलब्ध्येकप्रमाणकत्वात् ; न चैवम् अनुष्ठानस्य निवेशनैकप्रमाणकत्वमस्ति ग्रन्थकर्तुराचार्यस्य परमास्तिकत्वादिरूपलिङ्गान्तरेण अनुष्ठानसिद्धेः । **ततश्च** अनुष्ठानस्य निवेशनैकप्रमाणकत्वासिद्धेः, न निवेशनव्यतिरेकेण तदभावनिश्चयः; इत्यर्थः ॥ **अनुमीयत इति** । 'अयं ग्रन्थारम्भः, अनुष्ठितमङ्गलकः, परमास्तिककर्तृकत्वात् भगवत्कर्तृकत्वाद्वा, सम्मतवत् ; इत्यनुमीयते; इत्यर्थः ॥" इत्यप्याहुः ।

असिद्धञ्च ग्रन्थे निवेशनम् , अतोऽपि न तेन तदनुष्ठानाभावसिद्धिः: इत्याह **यच्चेति** ॥ तथाहि— न तावत् मङ्गलवाचकशब्दानिवेशोऽननुष्ठानम् , मायावादखण्डनादौ 'स्तौमि'इत्येतदनुक्त्वाऽपि नृसिंहस्तुत्यात्मकमङ्गलानुष्ठानस्य ज्ञानात् ; नापि मङ्गलात्मकशब्दानिवेशः, तस्यैवासिद्धेः, सूत्रादौ 'अथ'शब्दादेरिव अत्रापि पद्ये स्वातन्त्र्यादिशब्दस्यैव तथात्वोपपत्तेः ॥ 'स्वातन्त्र्यादि'इति'आदि'पदेन तत्त्वतापरिग्रहः । तत्त्वतायाः तत्त्वान्तरसाधारण्यात् स्वातन्त्र्यस्य आदित्वेन ग्रहणम् ; इति बोध्यम् ।

**ननु** 'स्वातन्त्र्यादिसङ्कीर्तनं मङ्गलम्' इति नाश्रयितुं युक्तम् , तथासति एतस्य विघ्नविघातादिहेतुत्वेन समग्रप्रकरणाङ्गतया प्रथमपद्यावयवत्वाभावप्रसङ्गात् ; तथात्वे च प्रथमपद्यं न्यूनमापद्येत, विधाप्रतिपादकस्य अन्यस्य अभावात् ; तत्प्रतिपादनस्य च आवश्यकत्वात् , अन्यथा 'के ते द्वे विधे:?' इत्याशङ्का न निराकृता स्यात् ; तत्कथं स्वातन्त्र्यादिसङ्कीर्तनं मङ्गलम् ? **इत्यतः**

न मङ्गलत्वोक्त्या प्रथमपद्यावयवत्वाभावः 'स्वतन्त्र'पदस्य अभिप्रेयते; कि प्रतिज्ञातविधाप्रतिपादकत्वेन उपात्तस्य 'स्वतन्त्र'पदस्य न तन्मात्रप्रयोजकत्वम् किन्नाम अन्यार्थ-आनीयमानपूर्णकलशदर्शनवत् प्रयोजनान्तरसाधकत्वम इत्येतावदेव; इति न प्रथमपद्यस्य न्यूनत्वम्, नापि मङ्गलत्वाभावः; इत्याश नाह **अन्यपरमपीति** । विभाजकोपाधिप्रदर्शनपरम्; इत्यर्थः ॥

[ ३. **वि.** विषयः— अ. ग्रन्थारम्भे मङ्गलाभावशङ्का ।— १. मङ्ग भावशङ्कया 'ननु'इत्यादिप्रथमवाक्यस्य अवतरणम्, पदार्थश्च । २. मङ्ग करणे निमित्तद्वयं विकल्प्य— क) प्रथमनिमित्तनिरासकतया च. 'न ता इत्यादिवाक्यस्य अवतरणम्, पदार्थश्च; छ. मङ्गलस्य अफलकत्वाभावे हेतु 'प्रेक्षावद्भिः'— इत्यादिपञ्चम्यन्तस्य अवतरणम्, पदार्थश्च; ज. प्रेक्षावत्'पद घटकस्य 'इष्टानिष्टसाधनत्वांशे'इतिविशेषणस्य कृत्यम् । ख) द्वितीयनिमि निरासकतया— च. 'नापि'इत्यादिवाक्यस्य अवतरणम्, अनुवृत्तिः, पदार्थ छ. मङ्गलस्य समाप्त्याद्यतिरिक्ताफलकत्वे 'नियमेन'इत्यादिपञ्चम्यन्तस्य अवत पदार्थश्च; ज. 'नियमेन'इत्यादिहेतौ 'नियमेन, आरम्भे, प्रेक्षावद्भिः' इ पदानां कृत्यानि, भावार्थश्च ॥

आ. 'उच्यते इत्यादेः शङ्कानिरासकग्रन्थस्य व्याख्यानम् ।— १. उ इत्यत्र शेषत्वेन कर्मप्रदर्शनम् । २. 'निवेशनाभावात् मङ्गलाभावः' इतिश परिहारकतया 'मानसादेः'इत्यादिपञ्चम्यन्तस्य अवतरणम्, पदार्थश्च ३. मङ्गलानुष्ठाननिर्णायकतया 'तच्च'इत्यादिवाक्यस्य अवतरणम्; पद अनुमानप्रयोगः, अनुमाने 'परम'इतिविशेषणकृत्यम्, साध्यान्तर्गत'प्रक पदार्थः सप्रयोजनश्च । ४. मङ्गलनिवेशनसाधकतया 'यच्च'इत्यादिवा अवतरणम्, पदार्थश्च । ५. अन्योद्देशकस्य विष्णुसङ्कीर्तनस्य मङ्गलत्वा शङ्कानिरासकतया 'अन्यपरमपि'इत्यादिवाक्यस्य अवतरणम्, पदार्थश्च ॥

ननु अस्तु नाम इदं प्रकरणं सफलत्वात् आरम्भणीयम्, त भगवता आचार्येण मङ्गलं प्रकरणादौ कस्मान्न कृतम्? इति शङ्कते **नि** प्रकरणस्य, आदौ=प्रारम्भसमये, किमपि=भगवन्नत्यादिरूपं 'यत्कि

मङ्गलाचरणम्=मङ्गलरूप[1]: सतामाचारः, कस्मात् हेतोः, नानुष्ठितम्= आचार्यैः न कृतम्; इत्यर्थः ॥

१) फलाभावो वा, २) प्रारिप्सितग्रन्थपरिसमाप्त्याद्यन्यफलकत्वं वा, प्रकरणादौ तदकरणे निमित्तम्? इत्याशङ्क्य—

१) आद्यं पक्षं तावदपाकरोति **न तावदिति**। तत्=मङ्गलाचरणम्, फलरहितम् एव, इति तावत् न; इत्यर्थः ॥ तत्र हेतुमाह **प्रेक्षावद्भिरिति**। इष्टानिष्टसाधनत्वांशे समीचीनज्ञानवन्तः=प्रेक्षावन्तः, तैः कृतत्वात्; इत्यर्थः। 'अयं घटः' इत्यादिसम्यग्ज्ञानादिमता बौद्धेन क्रियमाणे चैत्यवन्दनादौ दुराचारे व्यभिचारवारणायोक्तम् 'इष्टानिष्टसाधनत्वांशे' इति।

२) द्वितीयं पक्षमपाकरोति **नापीति**। 'तत्' इति अनुवर्तते। तत्=मङ्गलम्, प्रारिप्सितग्रन्थपरिसमाप्त्यादिव्यतिरिक्तफलवत्, अपि, न; इत्यर्थः। तत्र हेतुजिज्ञासायामाह **नियमेनेति**। प्रारम्भे=ग्रन्थारम्भकाले, नियमेन= अव्यभिचारेण, प्रेक्षावद्भिः, करणात्; इत्यर्थः।,

ग्रन्थारम्भकाले क्रियमाणकण्डूयनादौ व्यभिचारवारणायोक्तं 'नियमेन' इति ॥ प्रातःकालादौ नियमेन क्रियमाणसन्ध्यावन्दनाद्याचारवारणायोक्तम् 'आरम्भे' इति ॥ बौद्धैः स्वग्रन्थोपक्रमे नियमेन क्रियमाणे स्वगुरुवन्दनादि-दुराचारे व्यभिचारवाणायोक्तं 'प्रेक्षावद्भिः' इति। मङ्गलस्य समाप्त्याद्यन्य-फलकत्वे नियमेनानुष्ठानं न युक्तम्; इति भावः ॥

---

१. मङ्गलरूपं।

न मङ्गलत्वोक्त्या प्रथमपद्यावयवत्वाभावः 'स्वतन्त्र'पदस्य अभिप्रेयते; कि
प्रतिज्ञातविधाप्रतिपादकत्वेन उपात्तस्य 'स्वतन्त्र'पदस्य न तन्मात्रप्रयोजकत्व
किन्नाम अन्यार्थ-आनीयमानपूर्णकलशदर्शनवत् प्रयोजनान्तरसाधकत्व
इत्येतावदेव; इति न प्रथमपद्यस्य न्यूनत्वम्, नापि मङ्गलत्वाभावः; इत्या
नाह **अन्यपरमपीति** । विभाजकोपाधिप्रदर्शनपरम्; इत्यर्थः ॥

[ ३. **वि.** विषयः– अ. ग्रन्थारम्भे मङ्गलाभावशङ्का ।– १. म
भावशङ्कया 'ननु'इत्यादिप्रथमवाक्यस्य अवतरणम्, पदार्थश्च । २. म
करणे निमित्तद्वयं विकल्प्य– क) प्रथमनिमित्तनिरासकतया च. 'न त
इत्यादिवाक्यस्य अवतरणम्, पदार्थश्च; छ. मङ्गलस्य अफलकत्वाभावे हे
'प्रेक्षावद्भिः'– इत्यादिपञ्चम्यन्तस्य अवतरणम्, पदार्थश्च; ज. प्रेक्षावत्'प
घटकस्य 'इष्टानिष्टसाधनत्वांशे'इतिविशेषणस्य कृत्यम् । ख) द्वितीयनि
निरासकतया– च. 'नापि'इत्यादिवाक्यस्य अवतरणम्, अनुवृत्तिः, पद
छ. मङ्गलस्य समाप्त्याद्यतिरिक्ताफलकत्वे 'नियमेन'इत्यादिपञ्चम्यन्तस्य अव
पदार्थश्च; ज. 'नियमेन'इत्यादिहेतौ 'नियमेन, आरम्भे, प्रेक्षावद्भिः'
पदानां कृत्यानि, भावार्थश्च ॥

आ. 'उच्यते इत्यादेः शङ्कानिरासकग्रन्थस्य व्याख्यानम् ।– १. उ
इत्यत्र शेषत्वेन कर्मप्रदर्शनम् । २. 'निवेशनाभावात् मङ्गलाभावः' इति
परिहारकतया 'मानसादेः'इत्यादिपञ्चम्यन्तस्य अवतरणम्, पदार्थः
३. मङ्गलानुष्ठाननिर्णायकतया 'तच्च'इत्यादिवाक्यस्य अवतरणम्; प
अनुमानप्रयोगः, अनुमाने 'परम'इतिविशेषणकृत्यम्, साध्यान्तर्गत'प्र
पदार्थः सप्रयोजनश्च । ४. मङ्गलनिवेशनसाधकतया 'यच्च'इत्यादिव
अवतरणम्, पदार्थश्च । ५. अन्योद्देशकस्य विष्णुसङ्कीर्तनस्य मङ्गलत्व
शङ्कानिरासकतया 'अन्यपरमपि'इत्यादिवाक्यस्य अवतरणम्, पदार्थश्च ।

ननु अस्तु नाम इदं प्रकरणं सफलत्वात् आरम्भणीयम्,
भगवता आचार्येण मङ्गलं प्रकरणादौ कस्मान्न कृतम्? इति शङ्कते **ना**
प्रकरणस्य, आदौ=प्रारम्भसमये, किमपि=भगवन्नत्यादिरूपं 'यदि

मङ्गलाचरणम्=मङ्गलरूप:[1] सतामाचार:, कस्मात् हेतो:, नानुष्ठितम्= आचार्यैः न कृतम् ; इत्यर्थः ॥

१) फलाभावो वा, २) प्रारिप्सितग्रन्थपरिसमाप्त्याद्यन्यफलकत्वं वा, प्रकरणादौ तदकरणे निमित्तम् ? इत्याशङ्क्य —

१) आद्यं पक्षं तावदपाकरोति **न तावदिति** । तत्=मङ्गलाचरणम् , फलरहितम् एव, इति तावत् न; इत्यर्थः ॥ तत्र हेतुमाह **प्रेक्षावद्भिरिति** । इष्टानिष्टसाधनत्वांशे समीचीनज्ञानवन्तः=प्रेक्षावन्तः, तैः कृतत्वात् ; इत्यर्थः । 'अयं घटः'इत्यादिसम्यग्ज्ञानादिमता बौद्धेन क्रियमाणे चैत्यवन्दनादौ दुराचारे व्यभिचारवारणायोक्तम् 'इष्टानिष्टसाधनत्वांशे'इति ।

२) द्वितीयं पक्षमपाकरोति **नापीति** । 'तत्'इति अनुवर्तते । तत् =मङ्गलम् , प्रारिप्सितग्रन्थपरिसमाप्त्यादिव्यतिरिक्तफलवत् , अपि, न; इत्यर्थः । तत्र हेतुजिज्ञासायामाह **नियमेनेति** । प्रारम्भे=ग्रन्थारम्भकाले, नियमेन= अव्यभिचारेण, प्रेक्षावद्भिः, करणात् ; इत्यर्थः ।,

ग्रन्थारम्भकाले क्रियमाणकण्डूयनादौ व्यभिचारवारणायोक्तं 'नियमेन' इति ॥ प्रातःकालादौ नियमेन क्रियमाणसन्ध्यावन्दनाद्याचारवारणायोक्तम् 'आरम्भे'इति ॥ बौद्धैः स्वग्रन्थोपक्रमे नियमेन क्रियमाणे स्वगुरुवन्दनादि- दुराचारे व्यभिचारवाणायोक्तं 'प्रेक्षावद्भिः'इति । मङ्गलस्य समाप्त्याद्यन्य- फलकत्वे नियमेनानुष्ठानं न युक्तम् ; इति भावः ॥

---

१. मङ्गलरूपं ।

**उच्यत इति** । 'परिहार:'इति शेषः ॥

'प्रारम्भे भगवता आचार्येण मङ्गलम् अनुष्ठितमेव'इत्येतदयुक्तम्, प्रकरणादौ मङ्गलानुष्ठानसाधकस्य ग्रन्थे मङ्गलनिवेशनस्य अभावात्; इत्यत आह **मानसादेरपीति** ॥ मनोवाक्कायकृतस्य, ग्रन्थादावनिवेशितस्य अपि, तस्य = भगवत्स्मरणादेर्मङ्गलस्य, सम्भवात्=अनुष्ठानसम्भवात्; इत्यर्थः ।

ननु अस्तु उक्तरीत्या प्रकरणादौ मङ्गलानुष्ठानस्य सम्भवः, तथापि तन्निर्णयः कथम्; इत्याशङ्क्याह **तच्चेति** ॥ तत्= प्रकरणादौ मङ्गलानुष्ठानम् इत्यर्थः; परमास्तिकत्वात्= सत्सिद्धान्तनिरताः आस्तिकाः, तेषु ये प्रवराः ते परमास्तिकाः, इति यावत्, तेषां भावः– तत्त्वम्, तस्मात्, इत्यर्थः; न केवलं मङ्गलानुष्ठानं सम्भावितम्, किन्तु अनुमीयते च, इति 'च'ार्थः । अनेन 'आचार्यः प्रकृतप्रकरणादौ मङ्गलानुष्ठानवान् परमास्तिकत्वात् सम्प्रतिपन्नवत्'इत्यनुमानम् उक्तं भवति । आस्तिकानामपि केषाञ्चित् आलस्यादिना निमित्तेन सदाचारभूतमङ्गलानुष्ठानादर्शनात्, सर्वेषां ग्रन्थकर्तृत्वनियमाभावाच्च तत्र व्यभिचारः; तद्वारणाय 'परम'इति विशेषणम्; न च परमास्तिकानामपि सर्वेषां ग्रन्थकर्तृत्वनियमाभावात् तत्र व्यभिचारः इति वाच्यम्, प्रकरणापदेशेन स्वकृततत्त्वोपदेशरूपवाक्यसन्दर्भस्य विवक्षितत्वेन अव्यभिचारात् इति ।

किञ्च मङ्गलानुष्ठानसाधनं ग्रन्थे निवेशनमपि अस्ति; इत्याह **यच्चेति** । 'च'शब्दो युक्त्यन्तरसमुच्चयार्थः । अयम्= आचार्यः, आदितः एव= प्रकरणोपक्रमवाक्ये एव; स्वातन्त्र्यादिविशिष्टस्य=स्वातन्त्र्यादिगुणविशिष्टस्य, विष्णोः, यत्; स ङ्कीर्तनम्=उच्चारणम्, करोति; तत्प्रतिपादकशब्दं प्रयुङ्क्ते इति यावत्; ततः= स्वातन्त्र्यादिगुणविशिष्टविष्णुसङ्कीर्तनात्, अन्यन्मङ्गलम्= उत्कृष्टम् अन्यत् मङ्गलम्, नाम किम्? = न किमपि इत्यर्थः; स्वातन्त्र्योपपादकं भगवच्छब्दार्थभूतं समग्रैश्वर्यादिगुणजातम् 'आदि'शब्दार्थः ।

ननु प्रारिप्सितग्रन्थपरिसमाप्त्यादिफलकस्य स्वातन्त्र्यादिविशिष्टविष्णुसङ्कीर्तनस्य मङ्गलत्वेऽपि, तत्त्वविभागज्ञानोद्देशेन कृतं स्वातन्त्र्यादिविशिष्टविष्णुसङ्कीर्तनम् कथं मङ्गलं स्यात् ? इत्यत आह **अन्यपरमपीति ।** अन्यत्= समाप्त्यादिव्यतिरिक्तम्, परम्=उद्देश्यम्, यस्य तत्तथा– अन्योद्देशेन कृतम्; अपि, तत्= स्वातन्त्र्यादिगुणविशिष्टविष्णुसङ्कीर्तनम्, भक्त्या अनुष्ठितम्= माहात्म्यज्ञानपूर्वकत्वादिविशेषणविशिष्टस्नेहेन कृतम्, स्वभावादेव=भक्तानां सकलेष्टदातृत्वस्वभावादेव, अखिलानि= सर्वाण्यपि, श्रेयांसि, सम्पादयति; इत्यर्थः ।

'इति'शब्दः शङ्कापरिहारसमाप्तिपरः ॥

[ ३मु. विषयः– क) शङ्काग्रन्थटिप्पणी ।— १. अनारम्भणीयत्व–अव्याकर्तव्यत्वाभिप्रायाभ्यां तदुभयप्रयोजकमङ्गलाचरणाकरणे कारणाक्षेपकतया 'ननु'इत्यादिप्रथमवाक्यस्य अवतरणम्, पदार्थः, अन्वयः अभिप्रायश्च । २. मङ्गलानुष्ठाने कारणसद्भावशङ्कापरिहारकतया 'न तावत्'इत्यादि'उच्यते'-इत्यन्तोर्वरितशङ्काग्रन्थस्य अवतरणम्, शेषपूरणञ्च ॥ ख) समाधानग्रन्थ-टिप्पणी ।— १. 'फलानुद्देशेनैव सर्वविधीनामनुष्ठेयमानत्वम्, अनारम्भणीयताप्रयोजकस्य मङ्गलाननुष्ठानस्य असिद्धिश्च;'इत्यभिप्रायकसमाधायकतया 'उच्यते' इत्यादिसमाधानग्रन्थस्य अवतरणम् । २. 'अनुष्ठानस्य अनुपलम्भबाधितत्वम्' इतिशङ्कानिरासकतया 'मानस'इत्यादिवाक्यस्य अवतरणम् । ३. 'मङ्गलस्य निवेशनैकप्रमाणगम्यत्वमसिद्धम्'इत्यभिप्रायकतया 'तच्च'इत्यादिवाक्यस्य अवतरणम् । ४. निवेशनाभावासिद्धिपरतया 'यच्च'इत्यादिवाक्यस्य अवतरणम् । ]

ननु अथापि इदम् अनारम्भणीयम्, अवश्यकर्तव्यमङ्गलाचरणशून्यत्वात् अत एव न व्याकर्तव्यता च ।, इत्यभिप्रेत्य अवश्यकर्तव्यत्वं साधयितुम् अकरणे कारणम् आक्षिपति **नन्विति ॥** प्रकरणादौ, किमपि=यत्किञ्चिदपि, मङ्गलाचरणम् न अनुष्ठितम्, इदम्, कस्मात् ?= न कस्मादपि कारणात् ॥ यत्किञ्चिदपि नानुष्ठितम् इति कथमवगतम् ? इति चेत्; प्रकरणादौ उपक्रमे

दिकमपि स्तुतिनत्यादिकम्, तथा स्वकृतप्रणामज्ञापकं 'प्रणम्य'इत्यादिवचनञ्च यतो नानुष्ठितम्; इति योजना । अयमभिप्रायः– ग्रन्थे निवेशनैकगम्यत्वात्पूर्वकालीनमङ्गलस्य, तदभावेन मङ्गलाभावोऽवगम्यते; इति ।

'न कस्मात्'इति कथम् अननुष्ठाने कारणाभाव उक्तः, अफलत्वस्य अन्यफलकत्वस्य वा कारणान्तरस्य विद्यमानत्वात्? इतीमां शङ्कां परिहरति **न तावदित्यादिना** ॥ 'नापि कारणान्तरम्, तदभावात्'इति शेषः ॥

कारणान्तराभावोऽसिद्धः; विलीनप्रकृतितया अनन्तरायविधुरत्वस्य, फलोद्देशेन मङ्गलाननुष्ठानस्य(वा) विद्यमानत्वात्; इतिसमाधाने विद्यमानेऽपि; फलानुद्देशेनैव सर्वविशीनाम् अनुष्ठेयमानत्वाच्च मङ्गलविधेस्तथाऽनुष्ठानमेवावश्यकम् इतिमन्वानः तथा समाधानम् अनभिधाय, अनुष्ठाने कारणाभावेन यत् मङ्गलस्य अवश्यानुष्ठेयत्वम् उक्तम् तदङ्गीकृत्य, यच्च तदननुष्ठानेन अनारम्भणीयत्वं सिषाधयिषितम् तदसिद्धम् इत्यभिप्रेत्य, समाधत्ते **उच्यत इति** ।

ग्रन्थे अनुपलम्भबाधितम् अनुष्ठानम्, इत्यत आह **मानसादेरपीति** ।

यच्च– निवेशनैकप्रमाणगम्यत्वात् मङ्गलस्य, तदभावेन मानसादेरपि अभावः– इत्युक्तम्; तत्र ग्रन्थे निवेशनाभावमङ्गीकृत्य, तदेकप्रमाणगम्यत्वम् असिद्धम् –इत्यभिप्रेत्याह **तच्चेति** ।

इदानीम् ग्रन्थे निवेशनाभावोऽपि असिद्धः –इत्याह **यच्चायमिति** ॥

[ ३**का.** विषयः– १) मतद्वयेन शङ्कास्पष्टीकरणम् ॥– अ) स्वमतेन शङ्काग्रन्थव्याख्यानम् ।– १. नमस्कारादिनिबन्धनमेव मङ्गलम् इत्यभिप्रायकशङ्कात्वेन 'ननु'इत्यादि'उच्यते'इत्यन्तशङ्काग्रन्थस्य अवतरणम् । २. 'ननु'-इत्यादिप्रथमवाक्यगतपदार्थः । ३. मङ्गलानुष्ठाने कारणद्वयविकल्पपूर्वकम्– क. प्रथमकारणनिरासकतया 'न तावत्'इत्यादिसहेतुकस्य वाक्यस्य– च. अवतरणम्, छ. 'प्रेक्षावत्'पदस्य प्रयोजनम्, अर्थः, तदर्थभूतस्य अभ्रान्तत्वस्य

मङ्गलानुष्ठातृषु आगमेन निर्णयतश्च; ख. द्वितीयकारणनिरासकतया– ट.'नापि' इत्यादिसहेतुकस्य वाक्यस्य अवतरणम्, ठ– त. 'समाप्त्यादिव्यतिरिक्तफलम्' इतिपदस्य अर्थः, प्रयोजनञ्च; थ. 'आरम्भे, प्र, नियमेन, 'प्रेक्षावद्भिः इत्यस्यानुवृत्तिः' इत्येतेषां कृत्यानि; ग. सङ्ग्रहेण उभयकारणनिरासकानुमान-प्रयोगः; तत्र च हेतुतात्पर्यम्, अन्वयव्याप्तिः, दृष्टान्तश्च । ४. सङ्ग्रहेण शङ्काभिप्रायः ॥ आ) मतान्तरेण शङ्काग्रन्थव्याख्यानम् ।– १. मङ्गलाभावेन तत्साध्यसमाप्त्यभावात् अव्याख्येयत्वम् –इत्यभिप्रायकशङ्कात्वेन 'ननु'इत्यादि-ग्रन्थस्य अवतरणम् । २. मङ्गलस्य समाप्तिहेतुत्वे परिशेषानुमानकथनपूर्वकं तत्र विशेष्यविशेषणासिद्धिपरिहारकतया 'न तावत्'इत्यादिग्रन्थस्य अवतरणम् ।

२) समाधानग्रन्थव्याख्यानम् ॥ क. मङ्गलानुष्ठानसिद्ध्या अव्याख्येयत्वशङ्काऽनुपपत्तिरितिभावेन समाधायकतया 'उच्यते'इत्यादिग्रन्थस्य अवतरणम्, अध्याहारेण अन्वयश्च ॥ ख. 'मङ्गलानुष्ठानस्य उपलक्षणीयत्वम्'इति-शङ्कानिरासकतया 'मानस'इत्यादिपञ्चम्यन्तस्य अवतरणम्, भावार्थः; मानसस्य मुखतो ग्रहणे निमित्तञ्च । ग– १. मङ्गलसत्त्वे प्रमाणाक्षेपनिवारकतया 'तच्च'-इत्यादिवाक्यस्य अवतरणम्, पदार्थः, भावार्थश्च; २. परमास्तिकत्वानुमानस्य प्रयोगपूर्वकः परिष्कारः,मतान्तरेण तात्पर्यञ्च; ३. 'तच्च'इत्यादिवाक्यस्य सङ्ग्रहेण अभिप्रायश्च ॥ घ. 'यच्च'इत्यादिवाक्यस्य चतुर्धा अवतरणम्, पदार्थश्च । ङ. अन्योद्देशकस्य समाप्त्यादिसाधकत्वाभावशङ्कानिरासकतया 'अन्यपरमपि'-इत्यादिवाक्यस्य अवतरणम्, पदार्थः; 'भक्त्या'इतिपदस्य कृत्यम्, भावश्च । च. मङ्गलस्य अपृथङ्निबन्धनज्ञापितार्थकथनम् ॥ छ. शङ्कानिरासोपसंहारश्च ॥ ]

नमस्कारादिनिबन्धनमेव मङ्गलम्'इतिमन्वानः शङ्कते **नन्विति** ।

मङ्गलाचरणम्= आचारप्राप्तं मङ्गलम्, कस्मान्नानुष्ठितम् इति तस्य अफलत्वाद्यभिमानं विना न कस्मादपि; इत्यर्थः ॥

ननु वस्तुतः १) अफलत्वात्, २) अप्रकृतफलत्वाद्वा; तदननुष्ठानं किं न स्यात् ? इत्याशङ्क्य–

१. इत्यादिशङ्क्य

१) आद्यं निराचष्टे **न तावदिति** ।। अनुष्ठितत्वमात्रस्य चैत्यवन्दनादौ अनै-[2]
कान्त्यात् 'प्रेक्षावद्भिः'इति । अभ्रान्तैः इत्यर्थः । अभ्रान्तत्वं च मङ्गलानुष्ठा-
तृणाम् आगमसिद्धम् ।

२) द्वितीयं निराचष्टे **नापीति** ।। समाप्त्यादिव्यतिरिक्तमात्रफलकम्= समाप्ति-
प्रचयव्यतिरिक्तमात्रफलकम्– समाप्त्याद्यफलकम् इति यावत् । तेन तत्-
तदन्य-उभयफलकस्य अनुष्ठानसम्भवेऽपि नासङ्गतिः ।। अनुष्ठीयमानत्वमात्रं[3]
भोजनादावप्यस्ति; इत्यतः 'आरम्भे'इति । अत्रान्तरारम्भव्यावृत्तये ग्रन्थारम्भ-
लाभार्थः 'प्र'शब्दः । करचेष्टादौ व्यभिचारवारणाय 'नियमेन'इति । चैत्य-
वन्दनादेरपि कैश्चित् नियमेनानुष्ठानात् 'प्रेक्षावद्भिः'–इत्यनुवर्तनीयम् ।

तथाच 'मङ्गलम्, न समाप्त्याद्यफलकम्, प्रेक्षावत्कर्तृकग्रन्थारम्भ-
नियतानुष्ठानविषयत्वात्, व्यतिरेकेण यागादिवत्' इत्युक्तं भवति । समाप्त्या-
द्युद्देशेन प्रेक्षावदनुष्ठितत्वस्य हेतुत्वे तात्पर्यम् । अत्र च 'यत् यदुद्देशेन प्रेक्षा-
वदनुष्ठितम् तत् तदफलकं न भवति'इतिसामान्यमुखिव्याप्तौ स्वर्गफलकयागादिकं
दृष्टान्तः ।

**एवञ्चात्र**– मङ्गलाननुष्ठाने प्रामाणिकार्थानङ्गीकारमूलकत्वात्; शिष्टा-
चारविरुद्धत्वात्, प्रचयानर्हत्वात् च एतत्प्रकरणस्य व्याख्यानम् अयुक्तम् ।
न च मङ्गलाभावे समाप्त्यनुपपत्तिः, कारणान्तरेणापि समाप्तिसम्भवात् ।। –इति
शङ्काभिप्रायः ।।

**केचित्तु** ''मङ्गलस्य समाप्तिहेतुतया तदभावेन असमाप्तत्वात् अव्या-
ख्येयम् एतत्प्रकरणम्, इत्याशयेन शङ्कते **नन्विति** ।।

मङ्गलस्य समाप्तिहेतुत्वे किं मानम् ? इति चेत् 'मङ्गलम् समाप्ति-
फलकम् समाप्त्यन्याफलकत्वे सति सफलत्वात्' इतिपरिशेषानुमानमेव; इत्यभि-
प्रेत्य तत्र विशेष्यविशेषणासिद्धी परिहरति **न तावदिति** ।

---

२. अनेकांत्या ३. मात्रस्य

न च 'नियमेन प्रारम्भे अनुष्ठीयमानत्वात्' इत्यनेन समाप्तिफलकत्वस्यैव साधनसम्भवात्, परिशेषवैयर्थ्यम् इति वाच्यम्; समाप्त्यादिव्यतिरिक्तोद्देशेन अनुष्ठीयमानत्वस्यैव तत्र विवक्षितत्वात्, तस्य च सुखादिसाधारणस्य समाप्तिफलकत्वासाधकत्वेन[4] परिशेषसार्थक्यात्। अत एव दर्शपूर्णमासारम्भे अनुष्ठीयमान-आरम्भणीयेष्ट्यां न व्यभिचारः ॥'' [5]इति व्याचक्षते ॥

प्रकरणादौ मङ्गलानुष्ठानस्यैव सिद्धत्वात् अव्याख्येयत्वशङ्कनम् अनुपपन्नम्; इति भावेन समाधत्ते **उच्यते इति** ॥ 'तदनुष्ठितमेव मङ्गलम्' इति-अध्याहारेण अन्वयः ॥

तर्हि उपलक्ष्येत; इत्यत आह **मानसादेरपीति**। स्यादेवं यदि नमस्कारादिनिबन्धनमेव मङ्गलं स्यात्; न त्वेवम्, भगवदुत्कर्षविषयीकारि-[6]ज्ञानकर्मशब्दात्मकतया तस्य त्रैविध्यात्। प्रकृते च अस्मदादिप्रत्यक्षायोग्यज्ञानादिरूपमङ्गलसत्त्वात् नोक्तदोषः; इति भावः ॥ अत्र मानसस्यैव मुख्यत्वात्, मुखतो ग्रहणम्।

ननु तत्सत्त्वे किं मानम्? अत आह **तच्चेति** ॥ मानसत्वादिरूपं च इत्यर्थः। परमास्तिकत्वात्= सकलसिद्धान्ताभ्युपगतत्वात् ॥ तच्च 'बळित्था'-इत्याद्यागमसिद्धम्; इति भावः।

**ननु** 'आचार्यः कृतमङ्गलः परमास्तिकत्वात्' इत्यनुमाने सिद्धसाधनम्, ग्रन्थान्तरे कृतमङ्गलत्वात्; एतद्ग्रन्थादौ कृतमङ्गलत्वसाधने, मन्वादौ व्यभिचारः; 'एतद्ग्रन्थकर्तृत्वे सति' इतिहेतुविशेषणे, सपक्षाभावो विशेष्यवैयर्थ्यञ्च; **इति चेत्; न**, 'यो यद्ग्रन्थकर्तृत्वे सति परमास्तिकः, स तदादौ कृतमङ्गलकः' इतिसामान्यव्याप्तौ मन्वादिस्मृतिकर्तृः

---

४. त्वात्साधकत्वेन। ५. अयं विषयः केशवभट्टीयटिप्पण्यां २५ तः २७ पृष्ठेषु वर्तते। ६. विषयिकादेः।

सपक्षत्वात्, नास्तिकादौ व्यभिचारवारकतया तत्सार्थक्याच्च ॥ एतद्ग्रन्थ मङ्गलपुरःसरः परमास्तिककर्तृकत्वात् ग्रन्थान्तरवत् इत्यनुमाने तात्पर्यम् इत्यप्याहुः ।

**एवञ्च** परिशेषात् मानसादिरूपमेव मङ्गलं सिध्यति; इत्यभिप्रायः ॥

ननु ग्रन्थादौ मङ्गलनिबन्धनस्य शिष्यशिक्षार्थत्वेन शिष्टाचारप्राप्तत्वा तद्विरोधः; इत्यत आह **यच्चेति** । निबन्धनस्यैव मङ्गलत्वम् अभ्युपेत्या **यच्चेति**; इत्येके । निबन्धनाभावेन मङ्गलाभावानुमाने हेत्वसिद्धिः इत्या **यच्चेति**; इत्यन्ये । यस्तु आचार्यस्य परमास्तिकत्वे विप्रतिपन्नः, तं प्रति आ **यच्चेति**; इत्यप्याहुः ।,

अयम्= आचार्यः । स्वातन्त्र्यादिइत्यादिना 'स्वतन्त्रम्'इत्येकवचनार्थस्य सजातीयद्वितीयराहित्यरूप-एकत्वस्य, अस्वातन्त्र्यघटकपरत्वस्य च परिग्रहः आदितः= आदावेव; अन्यथा 'तत्त्वं द्विविधम् अस्वतन्त्रं स्वतन्त्रञ्च'इत्यवक्ष्यत् इति भावः । तन्त्रम् 'आदि'पदग्राह्यम्, इत्यन्ये; भगवत्त्वम् तथा, इत्यप्याहु अत्र च 'आदितः'इत्यस्य आदिश्लोके इत्यर्थो बोध्यः ।

ननु तत्त्वविभागादिपरस्यास्य कथम् अनन्तरायपरिसमाप्त्यादिसाधकत्वम् अन्यथा चार्वाकोच्चरित-ईश्वर-आदिशब्दस्यापि तथात्वापत्तेः ? इत्यत आ **अन्यपरमपीति** । अन्योद्देश्यकमपि; तत्= सङ्कीर्तनम् । 'भक्त्या'इति चार्वाकनिरासः । आचार्यस्य तु प्रमाणान्तरात्, 'आदि'सङ्कीर्तनाच्च भक्ति अवसीयते; इति भाव; ॥

अनेन मङ्गलस्य अपृथङ्निबन्धनम् अन्यपरस्यापि समाप्त्यादिहेतुत्व ज्ञापनाय इत्युक्तं भवति ।

'इति'शब्दः प्रकृतशङ्कानिरासपरिसमाप्त्यर्थः ॥

---

७. कर्तृत्वात् । ८. पृथक् इत्येकत्र । प्रायःपृथगनिबन्धनम् इत्येव पाठो दृष्टः

[ ३म. विषयः– अ) शङ्काग्रन्थव्याख्यानम् ।– १. 'किमपि'इति-पदस्यार्थः ॥ आ) समाधानग्रन्थव्याख्यानम् ।– १. मङ्गलाचरणनिवेशनयोः सम्बन्धं द्वेधा विकल्प्य– क. प्रथमविकल्पनिरासकतया तदाशयप्रकटनपूर्वकम् 'मानस'इत्यादिपञ्चम्यन्तस्य अवतरणम् भावार्थश्च; ख. द्वितीयविकल्पनिरासकतयाऽपि 'मानस'इत्यादिपञ्चम्यन्तस्य अवतरणम्, भावार्थश्च । २. मङ्गलानुष्ठानावधारणलाभपरतया 'तच्च'इत्यादिवाक्यस्य अवतरणम् । ३. सङ्ग्रहेण मङ्गलानुष्ठाने प्रकारद्वयेन अनुमानप्रयोगः– क.– च. प्रथमानुमानप्रयोगः, छ. तत्र हेतौ 'परम'इतिविशेषणकृत्यम्, ज. तत्सूचकतया 'भगवता'इतिपदस्य अवतरणम्, अर्थः, तस्य ऋजुयोगित्वञ्च सप्रमाणम्; ख. द्वितीयानुमान-प्रयोगः ॥ ४. निवेशनाभावासिद्धिपरतया–क. 'यच्च'इत्यादिवाक्यस्यअवतरणम्; ख. 'आदि'पदसङ्ग्राह्यप्रदर्शनञ्च । ५. वाक्यार्थपरस्य मङ्गलपरत्वाभावः – इतिशङ्कानिरासकतया– क. 'अन्यपरम्'इत्यादिवाक्यस्य अवतरणम्, पदार्थः; ख. 'स्वभावात्'इतिपदभावश्च ॥ ]

**किमपीति** । हरिप्रणमनस्तवनादिरूपम् इत्यर्थः ॥

कथमिदं विज्ञातं प्रकरणादौ भगवता मङ्गलं नाचरितम् इति ? निवेशनाभावात् इति चेत्; तत्किम् १) निवेशनमेव मङ्गलम् ? उत २) तद्व्यापकम् ?

१) नाद्यः; वाचनिकमङ्गलस्य स्तुतिरूपत्वेन निवेशनात्मकत्वेऽपि मानसिक-कायिकमङ्गलस्य तथात्वाभावात्, विशेषाभावेन सामान्याभावानुमानं कथं युज्यते ? इत्याशयेन आह **मानसादेरपीति** । वाचनिकमङ्गलस्य अकृतत्वेऽपि मानसिकं कायिकं वा मङ्गलम् कृतमेव; इति भावः ।

२) द्वितीयेऽपि एतदेवोत्तरम् **मानसादेरिति** । वाचनिकमङ्गलादृते इतरमङ्गलस्य कृतस्याऽपि निवेशनाभावोपपत्तेः; इति भावः ॥

अस्तु मङ्गलाचरणाभावसिद्धिः[1]; तथापि अनुष्ठितमेव इति तदवधारणं कथं युज्यते ? इत्यत आह तच्चेति ।

---

१. मङ्गलाचरणस्य भावसिद्धिः

**तथाच** अयं प्रयोगः—श्रीमदानन्दतीर्थाचार्यवर्यः एतत्प्रकरणारम्भ-कालीनमङ्गलानुष्ठानवान् परमास्तिकत्वात् बादरायणवत् इति । न च हेतौ विशेषणं व्यर्थम् , कदाचित् आस्तिकस्यापि निमित्तबलात् विहितस्यापि—अननु-ष्ठानसम्भवात् , तत्र व्यभिचारवारणार्थत्वात् ; नाप्यसिद्धम् ऋजुयोगित्वात् ; तदिदं सूचितम् **भगवतेति** । [2]अप्रतिहतधर्मज्ञानवैराग्यैश्वर्यादिमता इत्यर्थः तच्च भगवदन्यत्र ऋजुमात्रनिष्ठम् । तथा ह्युक्तंचतुर्मुखप्रशंसाऽवसरे—

"ज्ञानमप्रतिघं यस्य वैराग्यञ्च जगत्पतेः ।
ऐश्वर्यञ्चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥" [3]इति

**यद्वा** इदं प्रकरणम् मङ्गलानुष्ठानपूर्वकम् परमास्तिकप्रणीतत्वात् ब्रह्मसूत्रवत् ; इति ॥

असिद्धश्च मङ्गलाभावसाधकनिवेशनाभावानुमानम् —इत्याशयेन आह **यश्चायमिति** ॥ 'स्वातन्त्र्यादि' इति 'आदि' पदेन 'भगवान्विष्णुः' इत्युक्तं षड्गुणपूर्णत्वं गृह्यते ।

वाक्यार्थपरस्य विष्णुसङ्कीर्तनस्य कथं मङ्गलपरत्वम् ? इत्यत आह **अन्यपरमपीति** ॥ तत्=विष्णुसङ्कीर्तनम् ॥ **स्वभावादिति** । शीतापनोदार्थम् उत्पादितोऽपि ज्वलनो यथा प्रकाशनमपि करोति तथा; इति भावः ॥

## इति उपोद्घातः ।

---

२. समग्रैश्वर्यज्ञानवैराग्यादित्वोक्त्या ।
३. बृ. उप. भा. १ अ. अन्तिमे भागे ।

[ ४ टी. विषयः– १. तत्त्वस्य सामान्यविभागसहित'नाममात्रेण वस्तुसङ्कीर्तन'परतया 'स्वतन्त्रम्'–इत्यादिप्रथमपादद्वयस्य अवतरणम् । ]

**तत्र तावत् तत्त्वम् सामान्यतो विभागेन उद्दिशति 'स्वतन्त्रम्'इति ।**

[ १ **तत्त्वसङ्ख्याने** विषयः– तत्त्वद्वैविध्यम् । ]

तत्त्वसङ्ख्यानम्—

# स्वतन्त्रमस्वतन्त्रञ्च द्विविधं तत्त्वमिष्यते ॥ १/२ ॥

[४ ख. विषयः– १) क. 'तत्र'इतिपदस्यार्थः; ख. 'सामान्यतः'-इतिपदस्य प्रयोजनम्, भावार्थश्च; प्रयोजनाभिप्रायेण 'तावत्'इतिपदस्य अवतरणञ्च । २) अवतरणिकोक्तार्थस्य मूलस्थपदैर्लाभप्रदर्शनम् । ३. 'तत्त्व'-लक्षणपरीक्षादेरपि अर्थादुक्तत्वम् । ]

**तत्रेति** । वक्तव्यत्वेन द्विस्थानाम् उद्देशलक्षणविभागपरीक्षाणां मध्ये, इत्यर्थः ।

'भावाभावौ द्विधेतरत्' इत्यादिना उद्देशकरणात् तेन पौनरुक्त्यनिरासाय आह **सामान्यत इति** । तथा च अस्य सामान्योद्देशत्वात्, तस्य च विशेषोद्देशत्वात्, न पौनरुक्त्यम्, इति भावः ।

न चैवम् न्यूनता विशेषोद्देशविभागयोरपि करिष्यमाणत्वात्; इतिभावेन उक्तम् **तावदिति** ॥

अत्र 'तत्त्वम्'इत्यनेन सामान्योद्देशः, 'द्विविधम्'इत्यनेन विभागः, 'स्वतन्त्रमस्वतन्त्रञ्च'इत्यनेन (च) द्वैविध्यं दर्शितम् ॥

यद्यपि अत्र 'तत्त्वम्'इत्यनुवादेनैव तत्त्वसामान्यलक्षणम्, 'स्वतन्त्रम्' इत्यादिना विशेषलक्षणञ्च अर्थात् उक्तमेव; तथा 'इष्यते'इत्यनेन प्रमाणं सूचयता परीक्षाऽपि अर्थात् उक्तैव; तथापि उद्देशविभागयोरिव लक्षणपरीक्षयोः साक्षात् अनुक्तत्वात् **विभागेनोद्दिशति** इत्येव उक्तम् ।

[ ४ क. विषयः– १) क. 'इति'पदस्य अर्थः; ख. सामान्यविशेषविभागभेदेन अपौनरुक्त्यम्–इतिभावेन 'सामान्यतः'इतिपदस्य अवतरणम्; ग. हार्देन भावेन च 'तावत्'इत्यस्य अवतरणम्। २) 'तत्त्व'लक्षणपरीक्षादेः साक्षात् अकृतत्वेऽपि अर्थात् कृतत्वम्। ३) 'विभागेन'इत्यत्र विभक्त्यर्थः, तदनुसारि पाठान्तरञ्च। ४) अवतरणोक्तार्थानां मूलस्थपदैः प्राप्तिः इति प्रदर्शनम्। ]

**तत्रेति**। वक्तव्यत्वेन बुद्धिस्थानां सामान्यविशेषाणाम् उद्देशविभागपरीक्षाणां मध्ये; इत्यर्थः।

'भावाभावौ द्विधेतरत्'इत्यादिना करिष्यमाणयोः उद्देशविभागयोः विशेषविषयकत्वात् अत्र च क्रियमाणयोः सामान्यविषयकत्वात् अपौनरुक्त्यम् इतिभावेनोक्तम् **सामान्यत इति**।

विशेषोद्देशादेः सामान्योद्देशादिपूर्वकत्वात् अयमेवादौ कर्तव्यः इति हृदयम्; न च न्यूनता, विशेषोद्देशादेरपि करिष्यमाणत्वात्; इतिभावेन **तावत्**इत्युक्तम्॥

यद्यपि अत्र 'तत्त्वम्'इत्यनुवादेनैव तत्त्वसामान्यलक्षणम्, 'स्वतन्त्रम्'-इत्यादिना च विशेषलक्षणञ्च अर्थात् उक्तमेव, तथा 'इष्यते' इत्यनेन प्रमाणं सूचयता परीक्षाऽपि अर्थात् कृतैव; तथापि उद्देशविभागयोरिव लक्षणपरीक्षयोः साक्षात् अकृतत्वात् '**विभागेन** उद्देशं करोति' इत्युक्तम्॥

'विभागेन'इति सहभावे तृतीया। ततश्च विभागम् उद्देशञ्च करोति इत्यर्थः। अत एव [१]अन्यत्र समाहारद्वन्द्वविवक्षया 'विभागोद्देशं करोति' इत्युक्तम्॥

[२]अत्र च 'तत्त्वम्'इत्यनेन सामान्योद्देशः, 'द्विविधम्'इत्यनेन विभागः 'स्वतन्त्रमस्वतन्त्रञ्च'इत्यनेन (च) तद्द्वैविध्यं दर्शितम्; इति द्रष्टव्यम्।

---

१. अन्यसमाहार २. अयं विषयः बहुत्र 'तावत् इत्युक्तम्' इत्यनन्तरं दृष्टः।

[४ **वि.** विषयः– १) तत्त्वसङ्ख्यानस्थाद्यवाक्यावतारकत्वेन 'तत्र'-इत्यादिवाक्यस्य अवतरणम्, पदार्थश्च ।]

आद्यं वाक्यम् अवतारयति **तत्रेति** ।

वक्तव्यतया बुद्धिसन्निहितेषु, तावत्= पूर्वम्, तत्त्वम्, सामान्यतो विभागेन= सामान्यविभागेन च, उद्दिशति= नाम्ना कीर्तयति; इत्यर्थः ।

[ ४ **मु.** विषयः– १) शङ्कापञ्चकनिरासकतया 'तत्र'इत्यादिवाक्यस्य अवतरणम् । २) पदार्थः । ३) 'विभागेन'इत्यत्र विभक्त्यर्थश्च ।]

"स्वतन्त्रम्, अस्वतन्त्रम् –इति उद्देशकरणम् अनुपपन्नम्, अप्रस्तुतत्वात् । न च वक्तव्यत्वेन प्रस्तुतम् इति; तथापि स्वतन्त्रास्वतन्त्रयोः उद्देशेन द्विविधत्वोक्तिः अयुक्ता, बाधितत्त्वात् । न च तत्त्वोद्देशेन द्विविधत्वम् उच्यते इति; उत्तरत्र बहुविधत्वोक्त्या तद्विरुद्धत्वात् । न च सामान्यतोऽयं विभागः, तथापि 'स्वतन्त्रमस्वतन्त्रम्'इत्यस्य व्यर्थत्वात् । न च सामान्यविभागस्य अयम् उद्देशः, इति; तथापि उदाहरणानुक्त्या न्यूनत्वापत्तेः ।" – इतीमाः शङ्काः परिहरन् अवतारयति **तत्र तावदिति** ।

तत्र = वक्तव्यतया बुद्धिसन्निहितेषु । उद्देशादिषु ।

'विभागेन'इति इत्थंभूतलक्षणे तृतीया ।

[ ४ **का.** विषयः– १) 'तत्र'पदस्य त्रिधा अर्थः । २)चतुर्थपादोक्तविभाग-वैलक्षण्यपरतया 'सामान्यतः'इत्यस्य अवतरणम्, भावश्च । ३) 'तावत्' शब्दस्य अपेक्षा, तत्सूचितार्थश्च । ४) अवतरणोक्तार्थानां मूलस्थपदैः प्राप्तिः । ५) लक्षणपरीक्षयोः साक्षादनुक्तत्वात् अवतरणे अनिर्देशः ।]

**तत्रेति** ॥ तत्त्वे प्रतिपादनीये सति इत्यर्थः ॥ **यद्वा** कर्तव्यत्वेन बुद्धिस्थानाम् उद्देशलक्षणविभागपरीक्षाणां मध्ये इत्यर्थः ॥ **अथवा** 'तत्र'इति

निमित्तसप्तमी; तथाच विशेषतो जगदवगमार्थम् इत्यर्थः । सामान्यतो ज्ञाते विशेषजिज्ञासोदयात् इति भावः ।

विभागसहितोद्देशस्य चतुर्थपादेऽपि सत्त्वात् पुनरुक्तिः; इत्यत उक्तम् **सामान्यत इति** । उत्तरत्र विशेषत एव उद्देशात्; इति भावः ॥ तदपेक्षयैव 'तावत्'शब्दः । तेन सामान्योद्देशविभागादेः विशेषविभागाद्यङ्गत्वात् प्राथम्यं युक्तम् इति सूचितम् ।

अत्र 'तत्त्वम्' इति उद्देशः, 'द्विविधम्'इति विभागः, 'स्वतन्त्र-मस्वतन्त्रञ्च'इति (च) द्वैविध्यप्रदर्शनम् ।

यद्यपि उद्देशेनैव लक्षणम्, 'इष्यते'इत्यनेन लक्षणपरीक्षाऽपि लभ्येत एव; तथापि उद्देशविभागयोरिव लक्षणपरीक्षयोः साक्षात् अलाभात् उभयोरेव ग्रहणम् ।

[ ४ भ. विषयः – १) 'तत्र'पदस्य अर्थः, 'तत्'पदेन 'सङ्ग्रह प्रतिपादनम्'इत्यस्य परामर्शः । २) 'तावत्'पदस्य प्रयोजनम् । ३) 'सामा-न्यतः'इतिपदस्य प्रयोजनम् । ४) 'विभागेन उद्दिशति'इतिपदस्य अर्थः । ]

**तत्रेति** । तत्त्वनिरूपणे सङ्ग्रहेण कर्तव्ये इत्यर्थः । 'तत्त्वद्वयं सङ्ग्रह-प्रतिपादयितुम् इदं प्रकरणम्'इति प्राक् सङ्ग्रहेण तत्त्वनिरूपणस्य प्रकृतत्वात् 'तत्'शब्देन परामर्शः इति बोध्यम् ।

---

१. ग्रन्थान्तरे सम्पूर्णतया भिन्नवाक्यान्येव उपलब्धानि । **तदेवम्** –

"ननु तत्त्वानां बहुविधत्वेनोत्तरत्र निरूप्यमाणत्वात् कथं 'तत्त्वं द्विविधमिष्यते'इति द्वैविध्येन विभागो युज्यते? इत्यत उक्तं **सामान्यत इति** । सामान्यविशेषरूपत्वात् एतयोर्विभागयोः न पूर्वोत्तरविरोधः इति भावः ॥ अत एव **तावत्**– इत्युक्तम् विशेषविभागस्य सामान्यविभागं विना कर्तुम् अशक्यत्वात् सामान्यस्यैव पूर्वमुक्तिः इति भावः ॥" **इति**–

विशेषतो विभागादेः उत्तरत्र करिष्यमाणत्वात् 'तावत्'इत्युक्तिः ।

विशेषविषयाणां विभागादीनां सामान्यविषयविभागादिसापेक्षत्वात् **सामान्यत इति** ।

**विभागेनोद्दिशतीति** । 'द्विविधम्'इतिविभज्य 'स्वतन्त्रं परतन्त्रञ्च इति उद्दिशति इत्यर्थः ।

[ ५ **टी.** विषय :– १) तत्त्वसामान्यलक्षणम्, २) तत्तात्पर्यञ्च । ]

**तत्त्वम् अनारोपितम् । प्रमितिविषय इति यावत् ॥**

[ ५ **स.** विषयः – १) 'तत्त्वम्'इतिपदस्य यौगिकत्वेऽनुपपत्तिपूर्वकम् रूढ्याश्रयणेन तत्त्वलक्षणपरतया 'तत्त्वमनारोपितम्'इतिवाक्यस्य अवतरणम् । २. दलकृत्ये – क. कूर्मरोमादौ अतिव्याप्तिवारकतया 'प्रमिति'-इत्यादिवाक्यस्य अवतरणम् , ख. प्रमितौ 'सत्त्वाकारकत्व'विशेषणम् सप्रयोजनम् , ग. सप्रयोजनम् प्रमाविषयत्वे 'यदाकदाचित्'इतिविशेषणम् ॥ ]

ननु 'तत्त्वम्' नाम तस्य भावः; एवञ्च धर्मस्य द्वैविध्यम् न धर्मिणः –इत्युक्तं भवेत् ; तच्च अयुक्तम् इत्यतो रूढ्याश्रयेण तल्लक्षणमाह **तत्त्वमनारोपितमिति** ।

ननु इदं लक्षणम् अयुक्तम् , कूर्मरोमादावतिव्याप्तेः–

'अधिष्ठानञ्च सदृशं तथ्यवस्तुद्वयं विना ।
न भ्रान्तिर्भवति क्वापि ॥'

इत्युक्तत्वात् भ्रमस्य अधिष्ठानप्रधानसापेक्षत्वनियमेन, प्रकृते सत्यकूर्मरोमादिरूपप्रधानाभावेन आरोपितत्वायोगात् ; इत्यत आह **प्रमितीति** ।

---

१. विष्णुतत्त्वनिर्णये ८५३ पृष्ठे उदाहृतम् ब्रह्मवैवर्तवाक्यम् ।

न च एवमपि 'कूर्मरोम नास्ति'इतिप्रमितिविषयत्वस्य तत्र सत्त्वात् अतिव्याप्तिस्तदवस्थैव –इति वाच्यम्, सत्त्वाकारेण प्रमितिविषयत्वस्यैव लक्षणत्वेन विवक्षितत्वात्; तस्य च कूर्मरोमादौ अभावात् ।

नन्वेवम् 'घटो नास्ति'इतिप्रतीयमानस्याभावस्य 'अस्ति'इतिप्रमाविषयत्वाभावात् अव्याप्तिः –इति चेत्; न, यदा कदाचित्'अस्ति'इतिप्रमाविषयत्वस्य लक्षणत्वेन, 'घटो नास्ति'इतिवत् 'तदभावोस्ति'इत्यपि कदाचित् प्रतीतिसत्त्वेन अभावस्यापि उक्तलक्षणाऽऽक्रान्तत्वेन, अव्याप्त्यभावात् । अन्यथा अतीतादौ अव्याप्तेः; इति दिक् ॥

[ '५ के॰ विषयः– १) सप्रयोजनम् तत्त्वपदरूढ्या सूचिततत्त्वलक्षणपरतया 'तत्त्वमनारोपितम्'इत्यस्य अवतरणम् । २) प्रकारद्वयेन 'प्रमिति'-इत्यादिवाक्यस्य अवतरणम्– क. तत्त्वविवेकोक्ततत्त्वलक्षणस्यापि एतद्रूपत्वेन तद्विरोधपरिहारकतया, ख. लक्षणवाक्यस्य द्विधा विकल्पेनापि अनिर्वाहात् प्रमाविषयत्वे पर्यवसायकतया च;-इति । ३) दलकृत्ये– क. सप्रयोजना अत्यन्ताभावाप्रतियोगित्वरूपप्रमाविषयत्वयोग्यत्वस्य अभिमतिः । ख. सप्रयोजनम् लक्षणघटितप्रमायाम् 'अस्तित्वप्रकारक'इतिविशेषणम् । ग. सप्रयोजनम् अभावस्य अतीतादेश्चापि सत्त्वप्रकारकप्रमाविषयत्वसत्त्वप्रदर्शनम् । घ. सप्रयोजनम् "यत् प्रमया सत्ताऽऽविष्टतया बोध्यते, न तु 'नास्ति'इति निषिध्यते, न वा 'अन्येन एवं ज्ञातम्'इति अनूद्यते; तत् प्रमेयम्" इत्यङ्गीकारः । ङ. 'इदं रजतम्' इतिभ्रमस्य धर्म्यंशे प्रमात्वम्, वैशिष्ट्यांशे च अप्रमात्वम् ॥ ]

**ननु** तत्त्वसामान्यलक्षणाभिधानेन विना कथं विभागोद्देशावसरः ? अवच्छेदकैक्येन ऐक्यमापन्नं हि वस्तु विभज्य उद्देष्टव्यम् । **–इत्यतः** तत्त्वशब्दरूढ्या 'तत्त्वम्'इत्यनुवदतैव सूचितं तल्लक्षणमाह **तत्त्वमनारोपितमिति** ॥

**ननु** 'तत्त्व'पदसूचितम् अनारोपितत्वम् न तत्त्वसामान्यलक्षणमङ्गीकर्तुं युक्तम्, तत्त्वविवेकटीकाविरुद्धत्वात्; तत्र प्रमाविषयत्वरूपप्रमेयत्वस्य 'प्रमेयम्' इत्यनुवादेन सूचितस्य लक्षणत्वाभिधानात्; **इत्यत:;** प्रमितिविषयोऽपि 'यथा-श्रुते प्रमासम्बन्धात्प्राक् तत्त्वभावानुपपत्तिप्रसङ्गात् इति यावत्'एवमभिप्रायक: अनारोपितत्वरूप: एव, प्रमासम्बन्धात्प्रागपि अनारोपितत्वस्य सत्त्वेन तत्त्व-भावोपपत्ते:; अत: तत्रोक्तप्रमेयत्वस्यापि अनारोपितत्वरूपत्वात् न तद्विरोध:; इत्याह **प्रमितिविषय इति यावदिति** ।

यद्वा ''**ननु** अनारोपितत्वम्= १) 'न आरोपितम्– अनारोपितम्' इति प्रसज्य प्रतिषेधाश्रयणेन आरोपाविषयत्वं वा विवक्षितम्? २) किंवा 'न आरोप:–अनारोप:; तम्, इतम्=प्राप्तम्; –अनारोपितम्'इति पर्युदा-साश्रयणेन प्रमाविषयत्वं वा?—

१) नाद्य:, कूर्मरोम्ण: अपि आरोपितत्वाभावेन तत्त्वभावप्रसङ्गात्; प्रधानी-भूतसत्यकूर्मरोमाभावेन तदारोपस्य असम्भवात्, आरोपस्य आरोप्यसदृशसत्य-प्रधानसापेक्षत्वस्य सिद्धान्तस्थितत्वात्; अत एवोक्तम्–

'अधिष्ठानञ्च सदृशं तथ्यवस्तुद्वयं विना ।

न भ्रान्तिर्भवति ॥'

इत्यादि । न च– यदि कूर्मरोमादिकं न प्रतीतम् तदा अतिव्याप्ते: अज्ञानात्, यदि(च) प्रतीतम् तर्हि असत्प्रतीते: आरोपरूपत्वेन लक्षणा-भावात्, न कोऽपि दोष:; –इति वाच्यम्; तथापि लक्षणस्यातिव्याप्ते: इतरभेदसाधने वास्तवव्यभिचारपर्यवसानत्वेन दोषत्वावश्यंभावात् ।,

२) नापि 'प्रमाविषयत्वम्'इतिद्वितीय: पक्ष:, प्रमासम्बन्धात्प्राक् तत्त्वभावा-नुपपत्तिप्रसङ्गात् ।,

---

१. तत्त्वविवेके टीका... २. प्रमाणविषयत्व....

३. कूर्मरोमापि ४. साधने वा वास्तव

तदिह पक्षद्वयेऽपि लक्षणवाक्यानिर्वाहात् न अनारोपितत्वं युक्तम् ;'' **इत्यतः**– अभावार्थत्वपक्षे अनारोपितत्वमात्रस्य अतिप्रसक्ततया प्रतीयमानत्व-विशेषितस्यैव तस्य लक्षणत्वस्वीकारात्, प्रतीयमानत्वसामान्यस्य च अनारोपितपदनिषिद्ध-भ्रान्तिविषयत्वरूपविशेषपर्यवसानायोगेन प्रमाविषयत्वरूपविशेष-पर्यवसानावश्यंभावात्; तस्य च कूर्मरोमादौ अभावात् न तत्पक्षदोषः। पर्युदासाश्रयेण च सुतरां तत्रानतिप्रसङ्गः। इत्याह– **प्रमितिविषय इति यावदिति** ॥

न चैवम् एतत्पक्षोक्तदोषावकाशः, अत्यन्ताभावाप्रतियोगित्वरूपप्रमा-विषयत्वयोग्यत्वात्मकस्यैव 'प्रमाविषय इति यावत्'(इति)तत्त्वलक्षणतया अभिमतत्वात्; तस्य च प्रमासम्बन्धात्प्रागपि सत्त्वात् तत्त्वभावो युक्त एव।

न च एवमपि असन्मात्रस्य तत्त्वभावापत्तिः, तस्यापि नास्तित्वप्रकारक-प्रमाविषयत्वात्; इति वाच्यम्, अस्तित्वप्रकारकप्रमाविषयत्वस्य लक्षणत्वेन विवक्षणात्। कूर्मरोमादेर्नास्तीतिविषस्यापि सत्त्वप्रकारकप्रमागोचरत्वाभावात् न तत्र प्रसङ्गः।

न च एवमपि अभावस्य अतीतादेर्वा नास्तित्वप्रकारकप्रमागोचरत्वात् तत्र अव्याप्तिः इति वाच्यम्; 'नास्ति घटः' इतिनास्तित्वप्रकारक-प्रमागोचरस्यापि अभावस्य 'घटाभावोऽस्ति' इत्यादिसत्त्वप्रकारकप्रमागोचरस्यापि सत्त्वात्, अतीतादेः अतीततादशायां 'नास्ति' इतिप्रमागोचरस्यापि वर्तमानदशायाम् 'अस्ति' इतिप्रमागोचरत्वकस्य अकलङ्कत्वात्।

न च 'अस्मदादीनां शुक्तिरजतादिविभ्रमस्य पारमार्थिकत्वात्, तदज्ञत्वे परमार्थाशेषार्थाज्ञत्वेन सार्वज्ञहानिप्रसक्त्या, अवश्यम् ईश्वरस्य तज्ज्ञत्वं वाच्यम्,

५. अनिर्वाहान्नारोपितत्वम्। ६. 'प्रतियोगित्व' इति ग्रन्थद्वयपाठः। 'अप्रतियोगित्व' इति उर्वरितसकलग्रन्थपाठः।
७. विषयत्वस्य भावापत्तिस्तस्यालक्षणत्वेन। ८. गोचरस्याफलकत्वात्।

तथाच भ्रमविषय-ईश्वरप्रमा-विषयावच्छिन्नज्ञानस्य अवगाहनात् तद्विषयीभूत-वैशिष्ट्यस्यापि तत्त्वरूपत्वं स्यात्' इति वाच्यम्; यत्– प्रमया 'अस्ति'-इत्यनेन प्रकारेण विधीयते – सत्ताऽऽविष्टतया बोध्यते, न तु 'नास्ति'इति निषिध्यते, न वा 'अन्येन एवं ज्ञातम्'इत्यनूद्यते –तत् प्रमेयम्; इत्यङ्गीकारात्। न च ईश्वरप्रमा शुक्तिरजतस्य स्वयम् अस्तित्वग्रहणरूपा, 'शुक्तिरजतमस्ति'इत्यग्रहणात्; किन्तु 'भ्रान्तोऽयम् शुक्तिमेव रजततया जानाति' इति अनुवादरूपैव; –इति न तद्विषयत्वमात्रेण वैशिष्ट्यस्य तत्त्वभावप्रसक्तिः ॥ अत एव " 'भ्रमोऽयमासीत्'इति-अस्मदादिनिष्ठानुव्यवसायस्य प्रमात्वात्, तस्य च अर्थावच्छिन्नभ्रमविषयत्वात्, 'भ्रमविषयवैशिष्ट्यस्यापि तत्त्वभावप्रसङ्गः' " इति निरस्तम्, तस्य वैशिष्ट्यांशे अतथात्वात्।

न च– 'इदं रजतम्'इतिज्ञानस्यापि इदमंशे अबाधितत्वेन प्रमात्वात्, तेनैव–अस्तित्वाकारेणैव शुक्तिरजतस्य विषयीकरणात्, तत्र अतिव्याप्तिः स्यात् –इति वाच्यम्; भ्रमस्य धर्म्यंशे प्रमात्वेऽपि वैशिष्ट्यांशे प्रमात्वाभावेन, प्रमांशेन च 'इदम्'अंशमात्रं विषयीकुर्वता भ्रमप्रकारस्य अविषयीकरणेन, अतिव्याप्त्यनवकाशात् ॥ इति सङ्क्षेपः ॥

[ ५ **वि.** विषयः– १) लक्षणानुक्तिशङ्कायाः, 'उद्देशेनैव तल्लाभः' इति समाधानस्य च आशयेन 'तत्त्वमनारोपितम्'इतिवाक्यस्य क. अवतरणम् ख. 'अनारोपितम्'इतिपदस्य अर्थश्च । २) क) 'प्रतीतौ सत्याम्'इति-विशेषणदानाशयेन 'प्रमिति'इत्यादिवाक्यस्य अवतरणम्, ख) उक्तार्थे तत्त्वविवेकसंवादः, ग)'प्रमितिविषयः'इत्यस्यार्थः, घ) निरुक्तलक्षणस्य एतदर्थ-पर्यवसानार्थको भावः ॥ ३) दलकृत्यानि– क) प्रमालक्षणवाक्ये 'यथा'शब्दस्य कृत्यम्, ख) सप्रयोजनम् 'यदंशे ज्ञानस्यास्ति प्रमात्वम्, तद्विषयो यः, तत्तत्त्वम्'इत्यर्थाङ्गीकरणम्, ग) सप्रयोजनम् 'प्रतीत्यन्तराऽव्यवधानेन'इति

---

९. रूपं स्यात्।

विशेषणम् , घ) सप्रयोजनम् 'यत् साक्षात् अस्तीतिप्रमया विषयीक्रियते तत्' अथवा 'यत् स्वासत्त्वागोचरप्रमाविषयम् तत् तत्त्वम्'इत्यङ्गीकरणम् ; द्वितीय-प्रकारे सप्रयोजनम् 'असत्त्वम्'इतिपदस्य निर्वचनञ्च ॥ ]

ननु उद्देशस्य लक्षणोक्त्यर्थत्वात् उद्देशानन्तरं तत्त्वस्य सामान्यलक्षण-कथनम् उचितम् , तद्विना विभागोक्तिः अयुक्ताः; इत्याशङ्क्य– 'तत्त्वम्'इति उद्देशेनैव तत्त्वपदप्रवृत्तिनिमित्तम् 'अनारोपितत्वम्' तत्त्वस्य लक्षणञ्च उक्तम् इत्याशयेन आह **तत्त्वमिति** । अनारोपितम्= आरोपाविषयः इत्यर्थः ।

ननु 'कूर्मरोमादिकम् अतत्त्वम् सर्वम् आरोपविषय एव'इति नियमा-भावात् , कूर्मरोमादौ अतत्त्वे तत्त्वलक्षणम् अनारोपितत्वम् अतिव्याप्तम् ; इत्याशङ्क्य; 'प्रतीतौ सत्याम्'इतिविशेषणं देयम् इत्याशयेन आह **प्रमिति-विषय इति यावदिति** ॥ अत एव तत्त्वविवेकटीकायां तत्त्वलक्षणकथनावसरे 'प्रतीतौ सत्याम् इति वाच्यम्' इत्युक्तम् । यथार्थज्ञानं प्रमा, तद्विषयः; इत्यर्थः । प्रतीतत्वे सति आरोपाविषयत्वं प्रमाविषयत्वमेव पर्यवसितम् इति भावः ॥

यद्यपि ज्ञानजनकसन्निकर्षप्रतियोगित्वरूपं ज्ञानविषयत्वं शुक्तिरूप्यादौ अतत्त्वे क्वापि नास्ति, अतः प्रमालक्षणवाक्ये 'यथा'शब्दो व्यर्थः; तथापि ज्ञानोल्लेख्यत्वरूपं ज्ञानविषयत्वम् अतत्त्वे शुक्तिरूप्यादौ अस्ति, इति तद्व्या-वृत्त्यर्थं तद्विशेषणम् उपादेयमेव ।

ननु तथापि 'इदं रजतम्'इतिभ्रमस्तावत् धर्म्यंशे प्रमैव, अतः प्रमात्वा-धारज्ञानविषयत्वरूपं प्रमाविषयत्वम् अतत्त्वे शुक्तिरूप्यादौ अस्ति, इति चेत् ; न, 'यदंशे ज्ञानस्य अस्ति प्रमात्वम् , तद्विषयो यः, तत् तत्त्वम्'इत्यङ्गीकारात् ।

ननु तथापि मुक्तियोग्यानां स्वरूपज्ञानं सर्वांशे प्रमैव; तच्च भ्रमविषयकं भवति, अन्तःकरणधर्माणां साक्षिवेद्यत्वात् ; भ्रमश्च स्वविषयविशेषित एव तस्य

विषयो भवति; –इति अतत्त्वे प्रमाविषयत्वम् अस्ति इति अतिव्याप्तिर्दुर्वारा; इति चेत्; न, 'प्रतीत्यन्तराऽव्यवधानेन प्रमाविषयो यः, तत् तत्त्वम्'इत्यङ्गीकारात्। एतेन 'भ्रमगोचर-ईश्वरप्रमाविषयत्वं शुक्तिरूप्यादौ अतत्त्वेऽपि अस्ति' इतिचोद्यम् निरस्तम्, उक्तरीत्या उक्तचोद्यपरिहारसम्भवात्।

ननु तथापि, शुक्तिरूप्यादौ अतत्त्वे साक्षादसत्त्वप्रकारकप्रमाविषयत्वम् अस्ति इति अतिव्याप्तिर्दुवारा; इति चेत्; न, 'यत् साक्षात् अस्तीतिप्रमया-विषयीक्रियते तत् तत्त्वम्'इति वा, 'यत् स्वासत्त्वागोचरप्रमाविषयम् तत् तत्त्वम्'इति वा अङ्गीकारेण उक्तचोद्यानवकाशात्॥ असत्त्वञ्च न सत्त्वाभावः, येन अन्योन्याश्रयः स्यात्; किन्तु कालत्रयासत्त्वरूपत्रैकालिकनिषेधप्रति-योगित्वम्; इति न कश्चित् क्षुद्रोपद्रवः। इति॥

[५ मु. विषयः– अ) प्रथमवाक्यव्याख्यानम्– १. लक्षणानुक्तिशङ्का-पूर्वकम् "आवृत्त'तत्त्व'पदस्य रूढ्या लक्षणपरत्वम्"इत्यभिप्रायकम् 'तत्त्वम-नारोपितम्'इतिवाक्यस्य अवतरणम्। आ) द्वितीयवाक्यव्याख्यानम्– १. उक्तार्थे संवादितया 'प्रमिति'इत्यादिवाक्यस्य अवतरणम्, २. 'इदं वाक्यं कूर्मरोमण्यतिव्याप्तिशङ्कापरिहारार्थम्'इतिशङ्कानिरसनम्, ३. कूर्मरोम्णः अना-रोपितत्वाभावोपपादनम्, ४. तत्त्वविवेके कूर्मरोमण्यतिव्याप्तिप्रदर्शनस्य अङ्गीकारवादत्वम्।]

अलक्षितस्य विभागकथनायोगात्; इत्यतः, तत्त्वम् तत्त्वम् इति-आवृत्तिमङ्गीकृत्य आह **तत्त्वमनारोपितमिति**॥

स्वोक्तार्थे तत्त्वविवेकं संवादयितुमाह **प्रमितिविषय इति यावदिति**।

'कूर्मरोमणि अतिव्याप्तिपरिहाराय इदमुक्तम्' इति किं न स्यात्? इति चेत्; अनारोपितत्वस्यैवाभावेन अतिव्याप्त्यभावात्।

तथाहि— 'कूर्मरोम अस्ति'इतिशब्दात् प्रतीतिः १) जायते ? २) न वा ?

२) 'न'इतिपक्षे अनुभवविरोधः ।

१) आद्ये सा प्रतीतिः प्रमा ? भ्रमो वा ?— आद्ये कूर्मरोम्णः तत्त्वत्वप्रसङ्गः; द्वितीये आरोपितत्वम् अङ्गीकृतम्, भ्रमपदपर्यायत्वात् आरोपस्य ॥ तथाच कथम् अनारोपितत्वस्य तत्र अतिव्याप्तिः ? इति ।

कथं तर्हि तत्त्वविवेके तत्रातिव्याप्तिपरिहारार्थं विवक्षान्तरकरणम् ? इति चेत्; तस्य अङ्गीकारवादेन प्रवृत्तेः ॥

[ ५.का. विषयः— अ) प्रथमवाक्यव्याख्याने— १) लक्षणानुक्तिशङ्कापूर्वकम्, 'उद्देशेनैव तल्लाभः'इत्याशयेन अवतरणम्, पदार्थश्च । २) दलकृत्ये सप्रयोजनम्— क) तत्त्वारोपाविषयत्वम्, ख) तत्त्वारोपत्वविशिष्टाविषयत्वम्, ग) प्रतीतौ सत्याम् अनारोपितत्त्वम्, घ) उल्लेख्यत्वरूपविषयत्वम्, ङ) सत्त्वेन उल्लेख्यत्वम्, —इति विवक्षणम् । ३) निष्कृष्टं तत्त्वलक्षणम् । ४) अस्य लक्षणस्य विशिष्टकूर्मरोमादौ अतिव्याप्तिनिरसनम् ॥ आ) द्वितीयवाक्यव्याख्याने— १) सप्रयोजनम् उक्तलक्षणाधिगमार्थतया अवतरणम्, पदार्थः, भावश्च । २) दलकृत्ये सप्रयोजनम्— क) प्रमितौ सत्त्वप्रकारकेति विशेषणम्, ख) सत्त्वप्रकारकत्वविशिष्टेति विशेषणम्, ग) अन्यलक्षणस्य 'सत्त्वम्'इतिलक्षणोपादानार्थत्वम्, घ) प्रमासम्बन्धात्पूर्वमव्याप्तिपरिहारार्थं प्राचाम् अत्यन्ताभावाप्रतियोगित्वरूप-प्रमाविषयत्वयोग्यत्वविवक्षणस्य अभिप्रायश्च । ]

ननु तत्त्वसामान्यलक्षणम् अनभिधाय तद्विभजनम् असङ्गतम्, लक्षणेन वस्तुनिर्धारणानन्तरमेव विभागाकाङ्क्षोदयात्; इति चेत्; न, उद्देशेनैव लक्षणस्य लब्धत्वात् इत्याह तत्त्वमिति ॥ आरोपः= भ्रमः; तदविषयत्वम्— अनारोपितत्वम् ।

नन्वेवम् असम्भवः, 'सर्वं मिथ्या' इत्यादिभ्रमविषयत्वस्य सर्वत्रैव सत्त्वात्। न च भ्रमाप्रकारत्वम् अनारोपितत्वम्, 'ब्रह्म सर्वम्' इत्यादिभ्रमे तादात्म्येन सर्वस्यैव प्रकारत्वात्। न च शुक्तौ रजतस्य इव ब्रह्मणि सर्वस्य असत एव आरोप्यत्वात् न दोषः, इतिवाच्यम्; 'असदेव रजतं प्रत्यभात्' इतिवत् असदेव सर्वं प्रत्यभात्' इत्यप्रतीतेः, आरोप्यस्य असत्त्वनियमाभावात्; अत एव सुधायाम् उक्तम्' यत्र आरोप्यम् अधिष्ठानसन्निहितम् तत्र तत्तादात्म्यमात्रम् असत्' इति[1] ॥ मैवम्, सत्त्वारोपाविषयत्वस्य विवक्षितत्वात्। सत्त्ववति सत्त्वारोपासम्भवात् नोक्तदोषः।,

न च उक्तभ्रमस्य सर्वतादात्म्ये सत्त्वारोपरूपत्वात् उक्तदोषतादवस्थम् इति वाच्यम्; सत्त्वारोपत्वविशिष्टाविषयत्वस्य विवक्षितत्वात्, यत्र यस्य आरोपः तस्यैव तदारोपत्वविशिष्टविषयत्वात्।,

**ननु** एवमपि कूर्मरोमादौ अतिव्याप्तिः, तत्र रोममात्रस्य आरोपितत्वेऽपि विशिष्टस्य अनारोपितत्वात्; न च विशिष्टस्यापि 'कूर्मरोम अस्ति' इत्यारोपविषयत्वात् नातिव्याप्तिः इति वाच्यम्, 'कूर्मरोम नास्ति' इति असत्त्वेन प्रतीयमानस्य अनारोपितत्वात्; **इति चेत्; न,** प्रतीतौ सत्याम् अनारोपितत्वस्य विवक्षितत्वात्।,

न च 'प्रतीतिविषयत्वमात्रं सम्यक्, तज्जनकसन्निकर्षादिमत्त्वरूपतद्विषयत्वस्य असद्व्यावृत्तत्वात्' इति वाच्यम्, उल्लेख्यत्वरूपविषयत्वस्यैव विवक्षितत्वेन शुक्तिरजतादौ अतिव्याप्तेः।,

न चैवम् कूर्मरोमादौ अतिव्याप्तिः, सत्त्वेन उल्लेख्यत्वस्य विवक्षितत्वात्।

**एवञ्च** सत्त्वारोपानुल्लेख्यत्वे सति सत्त्वेनोल्लेख्यत्वम् तत्त्वलक्षणम् इति निष्कर्षः।

---

१. सुधा पृ. ५४ साङ्के.

न च एवं सति सत्त्वारोपानुल्लेख्यत्वे सति सत्वेनोल्लेख्यत्वस्य विशिष्ट-कूर्मरोमादौ अतिव्याप्तिः; विशिष्टस्य सत्त्वेन प्रतीतौ अनारोपितत्वासम्भवात्, अनारोपितत्वे च सत्त्वेनोल्लेख्यत्वासम्भवात् ॥

नन्वेवम् तत्त्वविवेकविरोधः, तत्र[1] प्रमेतत्वस्यैव तत्त्वसामान्यलक्षणत्वा-वगमात्। न च तत् लक्षणान्तरम् इति वाच्यम्; तस्यैव लघुत्वेन उपादेयत्वात्, अस्य तदनुपपत्तेश्च ॥ मैवम्; तल्लक्षणाधिगमार्थम् एतल्लक्षण-प्रणयनात्।

अत एव तस्य तत्रैव तात्पर्यम् इत्याह **प्रमितिविषय इति** ॥ यावत्=पर्यवसितार्थः। प्रतीतौ सत्याम् अनारोपितत्वस्य प्रमितिविषयत्वव्या-प्यतया तेन तल्लाभात्; इति भावः।

यद्यपि कौर्मरोमादौ असत्त्वप्रमितिविषयत्वमस्ति, तथापि सत्त्वप्रकारक-प्रमितिविषयत्वविवक्षणात् नातिव्याप्तिः।,

न च– 'कूर्मरोमाभावोऽस्ति' इत्यादिप्रमितिविषयत्वमादाय अतिव्याप्तिः –इति शङ्क्यम्; सत्त्वप्रकारकत्वविशिष्टप्रमितिविषयत्वस्य विवक्षितत्वात्, तादृशस्य[2] च कूर्मरोमाद्यभावे एव सत्त्वात्।,

यद्यपि 'सत्त्वम् लक्षणम्' इत्यपि शक्यते वक्तुम्; तथापि तदुपपादक-त्वात् अस्योक्तिः।,

न चैवम् प्रमासम्बन्धात्पूर्वम् अव्याप्तिः, ईश्वरप्रमासम्बन्धस्य सदैव सत्त्वात्। एवञ्च एतद्दोषवारणार्थम् अत्यन्ताभावाप्रतियोगित्वरूपप्रमाविषयत्व-[3]योग्यत्वविवक्षणं प्राचाम्, तज्जनकसन्निकर्षादिमत्त्वरूपतद्विषयत्वविवक्षया तदुल्लेख्यत्वविवक्षायाम् उक्तरीत्या दोषानवकाशात्; इत्यवधेयम् ॥

१. ५८ पृष्ठे २. तादृशकूर्म।
३. अत्यन्ताभावप्रतियोगिरूप।

[ ५ भ. विषयः– १) 'उद्देशेनैव तल्लक्षणलाभः'इत्याशयकतया 'तत्त्वम्'इत्यादिप्रथमवाक्यस्य अवतरणम्पदार्थश्च । २) सप्रयोजन-लक्षणवाक्य-लब्धतात्पर्यपरतया 'प्रमिति'इत्यादिद्वितीयवाक्यस्य अवतरणम् भावश्च । ३) निर्गलिततत्त्वसामान्यलक्षणम् ॥ ४) दलकृत्ये– क) सत्त्वप्रकारक, ख) साक्षात्, ग) असत्त्वप्रकारकप्रमित्यविषयत्त्वे सति, घ) साक्षात्, ङ) सत्त्वप्रकारक, च) असत्त्वप्रकारक, छ) प्रथम-प्रमिति-पदे 'प्र'पदम्, ज) द्वितीय-प्रमिति-पदे 'प्र'पदम्, झ) उभयत्र 'प्र'पदम् इत्येतेषां कृत्यानि । ५) कूर्मरोमादिविशिष्टस्य आरोपाविषयत्वविवक्षा । ६) कूर्मरोम-शुक्तिरजतयोः अन्तरम् । ]

अत्र कण्ठतः तत्त्वसामान्यलक्षणानुक्तावपि 'तत्त्वम्'इत्युद्देशेनैव लभ्यते तत् –इत्याशयेन आह **तत्त्वमनारोपितमिति** ॥ आरोपः= भ्रान्तिः, तदविषयः इत्यर्थः ।

शशविषाणकूर्मरोमाद्यसद्विशेषे प्रधानाभावेन भ्रान्त्यविषयत्वरूपतत्त्वलक्षणस्य अतिव्याप्तिमाशङ्क्य, भ्रान्त्यविषयः इति वाक्यलब्धतात्पर्यमाह **प्रमितिविषय इति** ॥ संशयेतरप्रतीतेः प्रमितिभ्रान्त्युभयात्मकत्वेन भ्रान्त्यविषयत्वे प्रमिति-विषयत्वं लभ्यते इति भावः ।

अत्र प्रमितिः सत्त्वप्रकारिका विवक्षिता । विषयत्वं च साक्षादेव । 'असत्त्वप्रकारकप्रमित्यविषयत्वे सति'इत्यपि पूरणीयम्' ॥ **तथा च** 'असत्त्व-प्रकारकप्रमित्यविषयत्वे सति सत्त्वप्रकारकप्रमितिसाक्षाद्विषयत्वम्'इति तत्त्व-सामान्यलक्षणं निर्गलितं भवति ॥

अत्र 'प्रमितिविषयत्वम्'इत्येवोक्तौ शशविषाणादावसद्विशेषे अतिव्याप्तिः तस्यापि 'शशविषाणमसत्'इतिप्रमितिविषयत्वात् । तत्परिहाराय 'सत्त्व-प्रकारक'इति ।,

---

१. अयं विषयः ग्रन्थान्तरे नास्ति ।

तावन्मात्रोक्तौ भ्रमविषयकानुव्यवसायविषये, तादृशेश्वरज्ञानविषये च[२] रजतादौ अतिव्याप्तिः; भ्रमस्य सत्त्वेन, तद्विषयकानुव्यवसायस्य सत्त्वप्रकारक-प्रमितित्वात् रजतस्यापि परम्परया तद्विषयत्वात्। अतः 'साक्षात्'इति।,

एतावन्मात्रोक्तौ 'नेदं रजतम्'इतिबाधकप्रत्यये निषेध्यतया भासमानरजते अतिव्याप्तिः; 'इदं'पदार्थस्य सत्त्वेन तद्विषयकबाधप्रत्ययस्य सत्त्वप्रकारकत्वात्, तत्र रजतस्य निषेध्यतया साक्षादेव भासमानत्वाच्च। अतः 'असत्त्वप्रकारकप्रमित्यविषयत्वे सति'इति।,

अत्र विशिष्टलक्षणे 'साक्षात्'इत्येतावदनुक्तौ पुनः भ्रमविषयकानुव्यवसायविषये रजतादौ अतिव्याप्तिः।,

'सत्त्वप्रकारक' इत्यनुक्तौ 'प्रमिति'पदेन असत्त्वप्रकारकप्रमितिमादाय तदविषयत्वस्य विशेषणदले प्रोक्तत्वेन व्याघातप्रसक्त्या असम्भवः स्यात्; एवं विशेषणदलेऽपि 'असत्त्वप्रकारक'इत्यनुक्तौ व्याघातेन असम्भवः स्यात्। अतः उभयमपि सार्थकम्।,

अथ[३] 'प्रमिति'पदस्थाने 'प्रतीति'पदोक्तौ शुक्तिरजतादौ अतिव्याप्तिः स्यात्; तस्यापि सत्वप्रकारकभ्रान्तिरूपप्रतीतिविषयत्वात्, असत्त्वप्रकारक-प्रमित्यविषयत्वाच्च।,

'असत्त्वप्रकारकप्रमिति'इत्यत्र 'प्रतीतिं'पदोक्तौ असम्भवः स्यात्; प्रतीतिपदेन भ्रान्तिप्रतीतिमादाय सर्वस्यापि शून्यवादिमतरीत्याऽसत्त्वप्रकारक-प्रतीतिविषयत्वेन तदविषयत्वाभावात्।,

उभयत्रापि 'प्रमिति'इत्यनुक्त्वा 'प्रतीति'इत्येवोक्तौ पुनः शुक्तिरजतादौ असति एव अतिव्याप्तिः स्यात्; सत्त्वप्रकारकभ्रान्तिविषयस्य असत्त्वप्रकारक-भ्रान्त्यविषयत्वात्॥ अतः सर्वमपि सार्थकम्।

---

२. 'तादृश......च' इति ग्रन्थान्तरे नास्ति।
३. 'अथ'......यादुपत्यादौ स्पष्टम्॥' इति विषयो ग्रन्थान्तरे नास्ति।

**ननु** 'अनारोपितं तत्त्वम्' इत्युक्ते कथं कूर्मरोमादिषु अतिव्याप्तिः, येन एवंभावेन '**प्रमितिविषय इति यावत्**' इति लक्षणं परिष्क्रियते; शुक्तिरजतादिवत् कूर्मपृष्ठे कार्ष्ण्यादिदर्शनेन कूर्मस्यापि रोम्णःप्रतीतिसम्भवात्, एवम् शशकर्णादौ विषाणस्यापि प्रतीतिसम्भवात्? **इति चेत्; न,** कूर्मरोमादिविशिष्टस्यैव प्रधानाभावेन आरोपाविषयतया विवक्षितत्वात्। न च 'इदं रजतम्'इतिवत् 'इदं कूर्मरोम'इति कदापि विशिष्टं प्रतीयते।

**ननु** एवं तर्हि तत्त्वविवेकटीकादौ कूर्मरोमादावेव कुतोऽतिव्याप्तिरुद्भाविता, शुक्तिरजतादिग्रहणमेव कुतो न कृतम्, तस्यापि विशिष्टस्य प्रधानाभावेन 'इदं शुक्तिरजतम्'इति कदापि प्रतीत्यभावात्? **इति चेत्;** सत्यम् तथापि शुक्तिरजतादिव्यवहारस्य आरोपितपरत्वेनैव सकलशास्त्रे क्रियमाणत्वात्; 'शुक्तिरजतादौ अनारोपितत्वस्य अतिव्याप्तिः' इत्युक्तौ स्फुटो विरोधः प्रतीतः स्यात्। न तथा स्यात् इति कूर्मरोमाद्युदाहरणम्; इति॥ अन्यत्तु यादुपत्यादौ स्पष्टम्॥

[ ६ **टी.** विषयः– तत्त्वसामान्यलक्षणस्य परीक्षात्वेन खण्डनखण्डखाद्यकारोक्तदूषणनिरासः।– तत्र १) 'तत्त्व'पदस्य यौगिकत्वानङ्गीकारः। २) रूढिपक्षोक्तदूषणनिरासकतया क) शुक्तिरूप्यादौ तत्त्वतायाः आक्षेपः, अत्यन्तासत एव आरोप्यत्वेन तन्निरसनञ्च; ख) भाविधर्मेण सहिततया उपलभमानस्य पूर्वधर्मिणः तत्त्वतानिरासश्च। ]

**तेन 'तस्य भावः – तत्त्वम्'इत्यादिखण्डनानवकाशः॥**

---

१. तथाहि खण्डनखण्डखाद्यम् (८७ पृष्ठे)– ''तेषु तावत् 'तत्त्वानुभूतिः प्रमा'इत्यप्ययुक्तम्; तत्त्वशब्दार्थस्य निर्वक्तुमशक्यत्वात्। तस्य भावो हि तत्त्वमुच्यते। प्रकृतञ्च तच्छब्दार्थः। न चात्र प्रकृतं किञ्चिदस्ति यत् तच्छब्देन परामृश्यते।'' इति।

ननु शुक्तिरजतादिकं कथं न तत्त्वम् ? न हि धर्मी वा रजतत्वं वा न प्रमेयम्; नापि तयोः सम्बन्धः । शुक्तिव्यक्तौ रजतत्वस्य[2] सं नास्ति –इति चेत्, मा भूत्; न हि गृहे देवदत्तो नास्ति इत्येतावता न प्रमेयः । इति ॥ स्यादिदम् आरोपितस्य अन्यत्र सत्ताम् अभ्युपगच्छतां दूषणम् । अत्यन्तासदेव रजतं दोषवशात् शुक्तिकायाम् आरोप्यते –इतिवादे तु नायं दोषः ।

एतेन 'भाविपाकरागः कुम्भः श्यामतादशायां रक्तपित्तिना रक्ततया उपलभ्यमानः तत्त्वं स्यात्' इत्यपि परास्तम्; भाविनः प्रमेयत्वेऽपि पूर्वस्य तथाभावाभावात्[3], धर्मिणः तथाभावाङ्गीकारात्[4] । इति ॥

[ ६ स. विषयः– १) 'तत्त्व'पदस्य रूढ्याश्रयणेन खण्डनकृतोक्तस्य यौगिकत्वपक्षोक्तदूषणस्य अलग्नकत्वरूपः 'तेन'इत्यादिवाक्यस्य भावः । २) शुक्तिरूप्यादौ-अतिव्याप्तिशङ्कापरतया 'ननु'इत्यादि'न प्रमेय इति'इत्यन्तग्रन्थे – क) अवतरणम्, ख) प्रथमवाक्यस्य द्विधा व्याख्यानम्, ग) द्वितीयवाक्यस्य व्याख्यानञ्च । ३) तच्छङ्कापरिहारकतया 'स्यादिदम्'इत्यादि'नायं दोषः'इत्यन्तग्रन्थे – द्वितीयवाक्यव्याख्यानम् । ४) 'एतेन' इत्यादिग्रन्थे– 'धर्मिणः'इत्याद्यंशस्य व्याख्यानम् । ]

---

२. वि. टि. पाठः 'रजतत्वस्य च'इति ।

३. 'तथात्वाभावात्'इत्यप्येकः पाठः । यादुपत्यानुसारेण तु 'अतथात्वात्' इत्येव । ४.स.टि. अनुसारेण 'तत्त्वभावाङ्गीकारादिति'
वि.टि. ,, 'धर्मिणस्तु तत्त्वभावाङ्गीकारादिति'
के.टि. ,, 'तद्धर्मिणस्तत्त्वभावाङ्गीकारादिति'
भ.टि. ,, 'धर्मिणस्तथाभावानङ्गीकारात्'इतिपाठान्तरम् ।
यादुपत्यानुसारेण तु 'तथाभावाङ्गीकारात्' इति ।

**तेनेति** । अयं भावः– 'द्विविधं तत्त्वम्'इत्यत्र 'तत्त्व'शब्दस्य "तस्य भावः तत्त्वम् –इति यौगिक एवार्थो विवक्षितः; स न सम्भवति, 'तत्'-शब्दस्य प्रकृतपरामर्शकत्वेन, प्रकृते च पूर्वं कस्यापि अप्रकृतत्वेन, तत्परामर्शानुपपत्तेः; अथ तच्छब्देन बुद्धिस्थस्य कस्यचित् परामर्शः, तथापि भावस्यैव तत्त्वत्वं स्यात् न भवितुः ।"इति खण्डनकृता दूषणम् अभिहितम्; तस्य अनवकाशः, अस्माभिः योगपरिहारेण रूढ्याश्रयणात्; अनारोपिते च 'तत्त्व'शब्दस्य 'तत्त्वतो वदति' इत्यादौ प्रसिद्धत्वात्; अनारोपितश्च धर्मवद्धर्मी अपि भवति; इति खण्डनानवकाशः, इति ॥ ॥

उक्तलक्षणस्य शुक्तिरूप्यादौ अतिव्याप्तिं शङ्कते **नन्विति** । लक्षणाभावात् इत्यत आह **न हीति** । धर्मी–शुक्तिः, रजतत्वम्– आरोप्यम् । तयोः पृथक् प्रमितत्वात् इत्यर्थः ॥ **नापीति** । शुक्तिरजतत्वयोर्हि समवाय एव सम्बन्धः; स च प्रमेयो भवति, इत्यर्थः ।,

**अथवा** तादात्म्यारोपाभिप्रायेण आह **धर्मीति** । रजतम् इत्यर्थः ॥ संसर्गारोपाभिप्रायेण आह **रजतत्वमिति** ॥ **तयोरिति** । शुक्तिशकलेन साकं रजतरजतत्वयोः इत्यर्थः । सम्बन्धः– यथाक्रमं तादात्म्यं समवायश्च, तयोरपि अन्यत्र प्रमितत्वात् इत्यर्थः ॥,

**शुक्तिव्यक्तौ रजतत्वस्येति** । तादात्म्यारोपाभिप्रायेण रजतत्वस्य च इत्यपि ग्राह्यम् ।

**अत्यन्तासदिति** । ननु सन्निकर्षाभावात् कथम् असतो भानम् ? इत्यतः 'दोषवशात्' इत्याह ॥

एतच्छब्दार्थमाह **भाविन इति** । आरोपितस्य अत्यन्तासत्त्वाङ्गीकारेण अप्रमेयत्वात् इत्यर्थः ।

नन्वथापि भ्रमस्य धर्म्यंशे प्रमात्वेन तद्विषयत्वात् धर्मिणि अतिव्याप्तिः स्यात्, इत्यत आह **धर्मिण इति** ॥ **तत्त्वभावेति** । तत्त्वत्वम् इत्यर्थः ॥

[६ के. विषयः– अ) 'तत्त्व'पदस्य यौगिकत्वपक्षे दूषणद्वयम्, रूढिपरत्वेन तन्निरसनञ्च। –१) खण्डनकृतोक्तदूषणपरिहारकतया 'तेन'-इत्यादिवाक्यस्य अवतरणम्, आशयश्च। २) अन्यमतोक्त-भावप्रत्ययवैयर्थ्यादिदूषण–अनवकाशश्च ॥

आ) 'तत्त्व'पदस्य रूढिपरत्वे दोषशङ्का, तस्यालग्नकत्वञ्च।– १) 'ननु ...नायं दोषः'इतिशङ्कासमाधानयोर्ग्रन्थस्य त्रिधा व्याख्यानम् – क) शङ्कात्वेन– १. 'ननु....न प्रमेय इति'इतिग्रन्थस्य अवतरणम्, प्रमितिविषयत्वे 'प्र'शब्दस्य कृत्याभावरूपभावश्च; २. 'स्यात्....नायं दोषः'इति'प्र'-शब्दकृत्यप्रदर्शकसमाधानग्रन्थस्य भावः। ख) खण्डनोक्तदूषणस्य अर्थतोऽनुवादपूर्वकम् अस्माकमलग्नकत्वप्रदर्शकाशयेन 'ननु....नायं दोषः'इतिग्रन्थस्य अवतरणम्। ग) प्रमितिविषयत्वस्य भ्रमविषये अतिव्याप्त्यर्थम् १. भ्रमविषयस्य सत्त्वोपपादकतया शङ्काग्रन्थस्य– च. अवतरणम्, छ. 'रजतत्वम्' इत्यस्य अभिप्रायः, ज. 'नापि तयोः सम्बन्धः'इत्यस्य उपलक्षणत्वम्; २. तन्निवृत्त्यर्थञ्च समाधानग्रन्थे– च. अत्यन्तासत्' इत्यादेराशयः, छ. 'दोष'-पदार्थश्च। २) 'अत्र प्रतीतस्य अन्यत्र सत्त्वम् अयुक्तम्'इत्यर्थप्रकटनार्थम् सुधावाक्यानां शब्दार्थाभ्याम् अनुवादः; तत्सङ्क्षेपश्च। तत्र– क) प्रतीतरजतस्य अन्यत्र सत्त्वात् 'अत्यन्त सदेव रजतमारोप्यतेइति'समाधानस्य अयुक्तत्वशङ्कने– १. रजतरजतत्वयोः 'इदं'कारास्पदस्य च असत्त्वाभावः। २. रजतस्यासत्त्वनिवारणे क. असत्त्वावेदकबाधबोधस्य रजतगोचरत्वान्यथाप्युपपत्तिः, ख. अत्यन्तासतः प्रतीत्यनुपपत्तिश्च। ३. देशान्तरे-सत्त्वस्य स्थापनम्। ४. उक्तार्थसाहाय्येन शङ्कास्थापनञ्च। ख) तच्छङ्कानिरसने १. तद्रजतस्य-सत्त्वे– अनुभवविरोधः। २. प्रतीतरजतस्य-देशान्तरे-सत्त्वेन–एतदनुभवस्योपपादने प्रमाणभावः, मध्ये- असतः प्रतीत्युपपत्तिश्च, ३. तद्रजतस्य अत्यन्तासत्त्वमेव इति तात्पर्यम्, ४. उक्तार्थसङ्क्षेपश्च ॥ ३) प्रमाणलक्षण-खण्डनप्रसङ्गीय-श्रीहर्षोक्तदूषण-निरासकतया 'एतेन'इत्यादिग्रन्थस्य अवतरणम्, पदार्थः, भावश्च ॥ ४) 'धर्मिणस्तत्त्वभावाङ्गीकारात्'इतिटीकापाठभेदस्य अस्वारस्यनिराकरणम् ॥ ]

'तत्त्व'शब्दस्य अनारोपिते रूढ्यङ्गीकारेण खण्डनकारोक्तं दूषणमपि परिहृतम् इत्याह **तेनेति** ॥ 'तत्त्वानुभूतिः प्रमा'इत्युदयनोक्तप्रमालक्षणं[1] खण्डयता श्रीहर्षेणे[2] "किं तत्त्वमत्र विवक्षितम् ? यद्युच्यते 'तस्य भावः तत्त्वम्'इति तन्न, प्रकृतं हि तच्छब्दार्थः, न चात्र प्रकृतं किञ्चिदस्ति यत् 'तत्'शब्देन परामृश्येत" इत्यादिना 'तत्त्व'शब्दस्य योगार्थमाश्रित्य यत् दूषणम् उक्तम्; 'तत्त्व'शब्दस्य अस्माभिः उक्तरीत्या यौगिकार्थानाश्रयणात्, रूढ्यैव 'तत्त्व' शब्दस्य अनारोपितत्वाङ्गीकारात्, नावकाशं लभते; इत्याशयः ।

स्वतन्त्रतत्त्वपदार्थस्य अन्यार्थतया तत्पदेनैव बोधसम्भवात् भावप्रत्ययवैयर्थ्यादिदूषणानवकाशः; इति भावः –इत्यन्ये ॥

सिद्धान्तिनं नैयायिकं मत्वा शङ्कते **नन्विति** ॥ तथाच मितिविषयत्वमात्रमेव लक्षणम्, 'प्र'शब्दघटितमपीति । व्यावर्त्याभावात् इति भावः ।,

**स्यादिदमिति** । तथा च नैयायिकमते उक्तरीत्या तद्वैयर्थ्यप्रसक्तावपि नास्मत्पक्षे तत्, अत्यन्तासद्रजतव्यावृत्त्यै तस्य आवश्यकत्वात्; इति भावः ।

**यद्वा** ननु 'तत्त्व'शब्दरूढ्या अनारोपितत्वार्थत्वाङ्गीकारेण, योगमाश्रित्य प्रसञ्जितश्रीहर्षोक्तदूषणानवकाशेऽपि, 'तत्त्व'शब्दस्य रूढिपक्षं खण्डयतया[3] तेनैवोक्तम्[4]– "अथोच्येत अवयवार्थचिन्तया दूषणाभिधानमिदं त्यज्यताम्, यतोऽयं 'तत्त्व'शब्दः स्वरूपमात्रवचनः"इति रूढिमाशङ्क्य, "कथञ्च एवं सति निरासः ! तथाहि– यो 'रजतम्'इति प्रत्ययः, सोऽपि स्वरूपबुद्धिर्भवत्येव । न हि धर्मी वा रजतत्वं वा न स्वरूपम्; नापि तयोः प्रतिभासमानः सम्बन्धो न स्वरूपम् इति युक्तम् । समवायो हि तयोः सम्बन्धः प्रतिभाति । स तु

---

१. प्रमाणलक्षणखण्डता । २. ख.खं.खा. ८७ पृष्ठे ।
३. डता ४. खण्डन.खण्ड [illegible] ८८, ८९ पृष्ठयोः

स्वरूपमेव ॥ शुक्तिव्यक्तौ रजतत्वस्य स नास्ति –इति चेत्; तत्र-नास्तित्वेऽपि स्वरूपतया अन्यत्रवृत्तेः । न हि गृहे देवदत्तो नास्ति इति स्वरूपं न स्यात् ॥'' इति । तदेतत् अर्थतः अनूद्यः; तुल्यन्यायतया प्रसक्तमिदं दूषणं नास्माकम् किन्तु वैशेषिकादीनामेव –इत्याह **नन्वित्यादिना नायं दोष इत्यन्तेन** ॥ **सम्बन्ध इति** । 'न प्रमेयम्'इति वर्तते ।

**यद्वा** प्रमितिविषयत्वं तत्त्वलक्षणं भवत् भ्रमविषयाद्व्यावृत्तमेव तथा भवेत् ।; न च तत् तथा, भ्रमविषयशुक्तिरजतादावपि प्रमेयत्वसत्त्वात् । तथाच अतिव्याप्तेः नेदं लक्षणम् । –इत्याशयेन भ्रमविषयस्य सत्त्वम् उपपादयति **नन्विति** ॥ 'रजतत्त्वम्'इति संसर्गारोपाभिप्रायेण । तादात्म्यारोपे 'रजतम्'इत्यपि पठनीयम् । 'नापि तयोः सम्बन्धः'इत्युपलक्षणम्, 'पुरो[6]वृत्ति रजततादात्म्यम्'इत्यपि द्रष्टव्यम् ।;

**अत्यन्तासदिति** । तथा च प्रमितिविषयत्वस्य भ्रमविषयादधिष्ठानात् अव्यावृत्तत्वेऽपि तस्य तत्त्वतया इष्टत्वात्; तत्त्वतया अनभिमतात् भ्रमविशेषात् आरोपितात् व्यावृत्तत्वेन युक्तमेव अस्य तत्त्वलक्षणत्वम् – इत्याशयः ।,

**दोषवशादिति** । करणदोषात् अर्थदोषाच्च इत्यर्थः ॥

''[7]**ननु**– यद्धि यथा भासते तत्तथैव'इति औत्सर्गिकोऽयं न्यायः; अपवादस्तु बलवद्बाधकोपनिपातात् । तथाच– इदम्, रजतञ्च, तत्तादात्म्यञ्च त्रितयम् इह अवभासते, इदञ्च रजतत्वञ्च तत्संसर्गश्चेति । तत्र रजतरजतत्वयोः 'इदं' कारास्पदस्य च बाधाभावात् संवादसद्भावाच्च न असत्त्वम् उपपद्यते । तत्तादात्म्यस्य तत्संसर्गस्य बाधात् विसंवादाच्च असत्त्वमेव ।, न च

---

५. ग्रन्थान्तरे 'प्र'पदं नास्ति । ६. पुरोवर्ति
७. सुधा (१–१–१) पृ.५३सां.९पं.तः पृ.५४नि.१३पं.पर्यन्तग्रन्थस्य शब्दार्थाभ्याम् अनुवादः ।

– 'नेदं रजतम्' इति बाधबोधो रजतस्यापि असत्त्वमावेदयति –इति युक्तम्; तस्य तादात्म्यमात्रगोचरत्वेन उपपत्तौ रजतगोचरत्वकल्पनायां गौरवप्रसङ्गात्; रजतस्य अत्यन्तासत्त्वे प्रतीत्यनुपपत्तिश्च तत्सामग्रीविरहात् इति ।

स्थिते चैवं सत्त्वे, बाधकसमये पुरोऽदर्शनात् देशान्तरे सत्त्वमास्थीयते; दोषसहकृतं चक्षुः शुक्तिमात्रसन्निकृष्टम् अविप्रकृष्टरजतात्मना तदा दर्शयति इति ।,

ततश्च उक्तयुक्त्यां प्रतीयमानरजतस्य अन्यत्रसत्त्वस्थितेः कथम् 'अत्यन्तासदेव रजतं दोषवशात् शुक्तिकायाम् आरोप्यते' इतिसमाधानम्? –इति चेत्; मैवम् ।– सत्त्वे सति रजतस्य 'असदेव रजतं प्रत्यभात्' इत्यनुभवविरोधो दुष्परिहर एव ।

अत्र-असत्त्वेऽपि अन्यत्र-सत्त्वात् तदुपपत्तिः –इति चेत्; न, अत्र प्रतीतस्य देशान्तरे सत्त्वे प्रमाणाभावात् ॥—

१) न तावत् भ्रान्तिः तत्र मानम्; विरोधात्, अत्रैव–सत्त्वावेदकत्वाच्च ।

२) नापि बाधः तत्र मानम्; तस्य इहरजतनिषेधात्मनः अन्यत्र–सत्त्वासत्त्वयोः औदासीन्यात् ।

३) नापि भ्रान्त्यनुपपत्तिः तत्र मानम्; भ्रान्तेः पुरोवर्ति[१]-इन्द्रिय-दोषादिभिर्विना अनुपपद्यमानायाः तन्मात्राक्षेपकत्वात् ।,

असत्त्वे कथं प्रतीतिः? इति चेत्; सत्त्वेऽपि कथम्? न हि अन्यत्र सत्त्वम् अत्र-प्रतीतेः उपकारि ॥ १) इन्द्रियार्थसन्निकर्षार्थं वा तदाधेयम्, २) संस्कारसिद्ध्यर्थं वा । नाद्यः, विप्रकृष्टेन सन्निकर्षाभावात्; 'पुरोवर्तिसन्निकर्षमात्रेणैव भ्रान्त्युत्पादाङ्गीकारात् । नान्त्यः संस्कारो हि

१. अत्र सर्वत्र 'पुरोवृत्ति' इत्यपि बहुत्र पाठः ।

रजतानुभवम् आक्षिपेत्, अनुभवश्च यथार्थो रजतसत्ताम्, अत्र–प्रतीतयैव अन्यत्र–सत्ता तु कुतः कल्प्या ?,

किञ्च असतः प्रतिभासासम्भवे कथं तादात्म्यं प्रतिभासेत्, तस्य कुत्राप्यभावात्।

४) नापि बाधानुपपत्तिः तत्र मानम्; बाधस्य अन्यत्र–सत्तया विना अनुपपत्त्यभावात्।

५) अत्रैव–रजतसत्तानिषेधान्यथाऽनुपपत्त्या अन्यत्र-सत्त्वसिद्धिः; इति चेत्; न, तस्य अत्रैव–प्राप्तत्वेन उपपत्तेः ॥"

तथाच[10] प्रतीतस्य अन्यत्र–सत्तायाः विना प्रमाणम् असिद्धेः नान्यत्र-सत्त्वम्; इति युक्तमुक्तम्।

अत्यन्तासदेव रजतं दोषवशात् शुक्तिकायाम् आरोप्यते; इति सङ्क्षेपः ॥

यच्च 'यत् यथाभूतं[11] प्रतीतम् तस्य तथाभूतस्य सत्त्वम्' इतिप्रमाणलक्षणं खण्डयता श्रीहर्षेण उक्तम्[12] 'भाविपाकरागः कुम्भः;' इत्यादि; तन्निराकरोति **एतेनेति**।

परामृष्टं दर्शयति **भाविन इति** ॥ **पूर्वस्येति**। पूर्वप्रतीतस्य इत्यर्थः।

किमत्र १) रागस्य तत्त्वभावः आपद्येत ? २) धर्मिणः–कुम्भस्य वा ?

१) आद्येऽपि भाविनो वा ? पूर्वमारोपितस्य वा ?– नाद्यः, तस्य इष्टत्वात्; न द्वितीयः, पूर्वारोपविषयस्य अत्यन्तासत्त्वाभ्युपगमेन तत्त्वरूपत्वापादकाभावात्।,

१०. तथाचाप्रतीतस्यान्यत्र सत्तया विना।

११. यथाभूतसङ्क्षेपं प्रतीतं तस्यातथाभूतस्य।

१२. खं.खं.खा.८९–९० पृष्ठयोः।

२) नान्त्यः, धर्मिणः सर्वैरपि सत्त्वाङ्गीकारेण तत्त्वभावापादकाभावात् । न हि धर्मिणः सत्यतायां कस्यापि विमतिः; इति भावः ॥

यत्तु केनचित् उक्तम् 'धर्मिणस्तत्त्वभावाङ्गीकारात् –इति पाठो न स्वरसः'[13] इति; तन्न;– उक्तरीत्या [14]धर्मिणः सत्यत्वाङ्गीकारेण तत्त्वभावापादकभावार्थत्वे स्वारस्यस्य व्युत्पादितत्वात् ।, अस्वारस्यबीजानुपन्यासाच्च ।, '[15]धर्मिणः तत्त्वभावाङ्गीकारात्' इति [16]तु पक्षान्तरनिरासकतया स्फुटप्रतीयमानस्य 'कुतः?' इत्याशङ्कानिवर्तकत्वेन हेतूक्तिपरतया व्याख्यानस्य अनुचितत्वाच्च ।, 'तद्धर्मिणस्तत्त्वभावाङ्गीकारात्'इतिपाठे धर्मिणस्तत्त्वरूपत्वाङ्गीकारात् इति अस्मद्रीत्यैव व्याख्यानोपपत्तौ 'आ'कारप्रश्लेषेण 'तदवस्थायां रक्तत्वस्य अत्यन्तासत्त्वात् न प्रमेयम्'इतिव्याख्यानस्य अनुचितत्वाच्च ।; इत्यास्तां तावत् ॥

[ ६ वि. विषयः— अ)– १) 'तेन'इत्यादिप्रथमवाक्यस्य पदार्थः । २) 'तत्त्व'पदस्य प्रकारद्वयेन योगकल्पनम्, तत्खण्डने च ।

आ) तत्त्वलक्षणस्य– १) अतिव्याप्तिशङ्कात्वेन– क) 'ननु......न प्रमेय इति'इतिग्रन्थस्य अवतरणम् । ख) 'न हि'इत्यन्तस्य प्रश्नस्य पदार्थः । ग) शुक्तिरजतादिकस्य चतुर्विधांशेष्वपि तत्त्वता न निषेध्या इत्यभिप्रायकम् 'न हि....न प्रमेयः'इत्यस्य अवतरणम् । घ) अंशद्वये तत्त्वतोपपादकतया 'न हि....न प्रमेयम्'इत्यस्य पदार्थः । ङ) तृतीयांशे तदुपपादकतया 'नापि तयोः सम्बन्धः'इत्यस्य पदार्थः । च) चतुर्थांशे तदुपपादकतया– १. आदौ तदभावशङ्कात्वेन 'शुक्तिव्यक्तौ....चेत्' इत्यस्य अवतरणम्, पदार्थः, भावश्च ; २. 'तत्र तदभावस्यापि नानिष्टत्वम्'इत्याशयकम् 'मा भूत्'इत्यस्य अवतरणम्

१३. यादुपत्त्ये ५ पृष्ठे एवमुक्तं वर्तते ।
१४. उक्तरीत्या भावः धर्मिणः
१५. 'धर्मिणस्तु'इत्येकः पाठः
१६. 'तुना'इति ग्रन्थद्वयपाठः

पदार्थश्च; ३. अनिष्टत्वशङ्कापरिहारकतया 'न हि .... न प्रमेयः' इत्यस्य अवतरणम्, पदार्थः, शेषपूरणञ्च। छ) 'इति पदेन शङ्कासमाप्तिश्च॥ २) अतिव्याप्तिपरिहारकत्वेन– क) 'स्यात्....नायं दोषः'इत्यस्य अवतरणम्, पदार्थः, भावश्च। ख) 'एतेन...अङ्गीकारात्' इत्यस्य व्याख्याने– १. 'एतेन....परास्तम्'इत्यस्य पदार्थः; २. 'एतेन....परास्तम्'इत्युक्तार्थ-विवरकतया 'भाविनः....अभावात्'इत्यस्य अवतरणम्, पदार्थः, भावश्च; ३. 'पूर्वप्रतीतधर्मिणोऽपि आरोपविषयत्वम्'इति शङ्कानिवारकतया 'धर्मिणः' इत्यादिपञ्चम्यन्तस्य अवतरणम्, पदार्थः, भावश्च। ग) 'इति'शब्देन शङ्का-निराससमाप्तिश्च॥ ]

**तेनेति**। येन निरुक्तप्रमाविषयः तत्त्वपदार्थः, तेन कारणेन; 'तस्य भावः तत्त्वम्', 'तत् च तत्त्वञ्च'इत्यादेर्विकल्पत्वस्य, यत्, खण्डनम्= निराकरणम्, तस्य; अवकाशः=अवसरः, नास्ति; –इत्यर्थः।

'तस्य भावः तत्त्वम्' इत्युक्ते घटस्य भावः –घटत्वमेव तत्त्वम्, न तु घटः; इत्यापातात्; शशशृङ्गस्य भावः –शशशृङ्गत्वम् अपि तत्त्वम्, इत्यापाताच्च।, 'तच्च तत्त्वञ्च'इत्याद्युक्तौ। युष्मच्छब्दवाच्ये जडे अव्याप्तिः। –इत्यादि'तत्त्वशब्दार्थविकल्पखण्डनम्' अनुसन्धेयम्॥

तत्त्वलक्षणस्य अतिव्याप्तिम् आशङ्कते **नन्विति**।

शुक्त्यभेदेन प्रतीतं रजतम्, 'आदि'पदोक्तं रज्जुसर्पादिकञ्च तत्त्वं न भवति –इति कथम्?= तत्त्वमेव इत्यर्थः।;

शुक्तिरियंकथं तत्त्वम्? इतिजिज्ञासायाम्, 'शुक्तिरूप्यं तत्त्वं न भवति'इतिवदता– १) धर्मी तत्त्वं न भवति इत्युच्यते? उत २) धर्मो रजतत्वम्? आहोस्वित् ३) तयोः सम्बन्धः? अथवा ४) रजताभेदः? इतिविकल्पं हृदि निधाय, सर्वस्मिन्पक्षे तत्र तत्र तत्त्वलक्षणम् अस्ति –इति-उत्तरम् अभिप्रेत्य आह **न हि** इत्यादिना।—

१, २) धर्मी= रजतत्वस्य धर्मी रजतव्यक्तिः इत्यर्थः । यस्मात्, देशान्तरे रजतत्वाधारव्यक्तेः, तत्र रजतत्वस्य च, प्रमितत्वात्; धर्मी रजतत्वं वा द्वयम्, न भवति इति न = प्रमेयमेव इत्यर्थः ।,

३) **नापीति** ॥ 'न हि'इति अनुवर्तते । पुलिङ्गान्तं सत् 'प्रमेयम्'-इतिपदम् (अपि) । 'अपि'शब्दो रजताभेदसमुच्चयार्थः, 'सम्बन्धः'इत्यनेन सम्बध्यते ॥ हि= यस्मात्, रजतत्वसम्बन्धस्य रजताभेदस्य च रजते प्रमितत्वात्; तयोः= धर्मधर्मिणोः, सम्बन्धः = रजताभेदः, च; प्रमेयः न भवति इति न = प्रमेयमेव इत्यर्थः।,

४) रजतसम्बन्धे रजताभेदे च, प्रमेयत्वं नास्ति --इत्याशयेन शङ्कते **शुक्तिव्यक्ताविति** । रजतत्वपदेन रजतम् अपि उपलक्ष्यते । शुक्तिव्यक्तौ= शुक्तिरूपायां व्यक्तौ, [1]रजतत्वस्य च = रजतस्य च, सम्बन्धः अभेदश्च, नास्ति; इत्यर्थः । भ्रमविषयो यः, शुक्तौ रजतत्वसम्बन्धो रजताभेदश्च; तयोः प्रमेयत्वं नास्ति, इतिभावः ॥ तावता का नो हानिः ? इत्याशयेन आह **मा भूदिति** । शुक्तिव्यक्तौ रजतत्वसम्बन्धो रजताभेदश्च उभयं मास्तु इत्यर्थः ॥ तर्हि उभयंतत्त्वं न स्यात् इत्याशङ्क्याह **न हीति** । हि= यस्मात्, अन्यत्र सत्त्वात् एव, 'देवदत्तो गृहे नास्ति'इत्येतावता 'प्रमेयो न भवति' –इति न; इत्यर्थः । 'तद्वत् इदं द्वयमपि प्रमेयमेव' इति शेषः ।

'इति'शब्दः शङ्कासमाप्तिपरः ॥

परिहरति **स्यादिति** । आरोपितस्य= आरोपविषयस्य, अन्यत्र= यत्र आरोपो भवति ततोऽन्यस्मिन्देशे, सत्त्वम्, अभ्युपगच्छताम् – नैयायिकानाम् इदम्– प्रमाविषयत्वस्य तत्त्वलक्षणस्य अतिव्याप्तिरूपम् दूषणम्, स्यात्; इत्यर्थः । अत्यन्तासदेव= कालत्रयेऽप्यसदेव, रजतम्, काचकामलादिदोषवशात्, शुक्तिकायाम् – अधिष्ठाने, आरोप्यते= आरोपेण उल्लिख्यते

---

१. रजतत्वस्य च सम्बन्धो

इति, वादे= सिद्धान्ते; अयम्– अतिव्याप्तिरूपः, दोषः, नास्ति; –इत्यर्थः। कालत्रयेऽपि असत् आरोपितम् अस्ति, इति, '(तत्)प्रमाविषयः'इत्येतत् न युक्तम् इति भावः।

**एतेनेति**। भाविपाकरागः= भाविना-भविष्यता पाकेन-अग्निसंयोगेन रक्तरूपं यस्य सः तथोक्तः, कुम्भः, श्यामतादशायाम्= श्यामरूपसद्भावकाले, रक्तपित्तिना= रक्तपित्तिव्याधिरूपदोषवता, रक्ततया= रक्तरूपवत्तया, उपलभ्यमानः; तत्र रक्तरूपस्य सत्त्वात्, तद्रूपं[3] स्यात्= प्रमेयं स्यात्, इत्यपि, एतेन– 'अत्यन्तासदेव आरोप्यते इति वादे नायं दोषः'इत्यनेन, निरस्तम्; इत्यर्थः।,

" 'एतेन, इत्यनेन उक्तं दूषणम् विवृणोति **भाविनः प्रमेयत्वेऽपीति**। भविष्यतो रक्तरूपस्य, प्रमाविषयत्वेऽपि, पूर्वस्य= श्यामतादशायां प्रतीतस्य रक्तरूपस्य, अतथात्वात्= प्रमाविषयत्वाभावात्; इत्यर्थः। आरोपितस्य अत्यन्तासत्त्वेन अस्तीतिप्रमा-विषयत्वम् न सम्भवति; इति भावः।,

ननु पूर्वप्रतीतरक्तरूपवत् पूर्वं प्रतीतो धर्मी घटोऽपि अतत्त्वं स्यात् आरोपविषयत्वाविशेषात्; इत्यत आह **धर्मिणस्त्विति**। पूर्वंप्रतीतरक्तरूपात् अस्य विशेषज्ञापनाय 'तु'शब्दः। धर्मिणः= पूर्वं रक्तरूपधर्मितया प्रतीतस्य घटस्य, तु, तत्त्वभावाङ्गीकारात्= प्रमाविषयत्वाङ्गीकारात्; इत्यर्थः। आरोपितस्य धर्म्यंशे प्रमात्वारोपाभावेन आरोपविषयत्वं धर्मिणि नास्त्येव; इति भावः।

तत्त्वलक्षणस्य-अतिव्याप्तिनिराकरणपरिसमाप्तिपरः 'इति'शब्दः॥

---

२. इति चेत्यादिसिद्धान्ते

३. अनेन टीकायां **तत्त्वं स्यात्** इत्यस्य अयं पाठभेदः इति ज्ञायते।

[ ६ **मु.** विषय:– अ) शङ्काग्रन्थव्याख्यानम्– १. शुक्तिरजतादेः तत्त्वत्वव्यावृत्तिः अयुक्ता –इत्यभिप्रायकशङ्कात्वेन 'ननु....न प्रमेयः । इति' इत्यस्य अवतरणम् ॥ आ) समाधानग्रन्थव्याख्यानम्– १) उक्तशङ्कानिवारणप्रकारद्वयकथनपूर्वकम् आद्यप्रकारानुसरणस्य अकौशलत्वमभिप्रेत्य द्वितीयानुसरणतया 'स्यादिदम्....नायं दोषः'इत्यस्य अवतरणम् । २) उक्तप्रकारेणैव द्वितीयातिव्याप्तिनिराकरणपरतया 'एतेन....परास्तम्'इत्यस्य अवतरणम् । ३) अभिप्रायकथनपूर्वकम् द्वितीयातिव्याप्तिनिरासकतया 'भाविनः....अङ्गीकारात्'इत्यस्य अवतरणम् ॥ ]

या शुक्तिरजतादेः तत्त्वत्वव्यावृत्तिः 'अनारोपितम्'इतिलक्षणेन अभिप्रेता, सा न युक्ता; तस्यापि तत्त्वत्वात्; –इत्यभिप्रेत्य शङ्कते **नन्विति ॥**

रजतत्वप्रतियोगिक-शुक्त्यधिकरणक-संसर्गस्य शुक्तौ रजततादात्म्यस्य (च) तत्त्वत्वाभावेन, शुक्तिरजतादेः अतत्त्वत्वं[1] निराकुर्वति पूर्वपक्षिणि निराकर्तुं शक्येऽपि; रजतरजतत्वयोः-अन्यत्र-सत्त्वस्य अप्रामाणिकत्वात्, तदङ्गीकारेण -पूर्वपक्षदूषणे अकौशलं मन्यमानः तथा–निराकरणमकृत्वा, पूर्वपक्ष्युक्त-दूषणस्य स्वावस्थया[2] दूषणत्वं वदन्, रजतरजतत्वयोः अत्यन्तासत्त्वेन पूर्वपक्षिणं दूषयति **स्यादिदमिति-वाक्यद्वयेन ।**

**ननु** प्रमितिविषयत्वं नाम-यत् यथाभूतं प्रतीयते तस्य तथाऽवस्थानम् एव ।, इदं तु न सम्भवति; भाविपाकरागकुम्भस्य–श्यामतादशायां रक्ततया उपलभ्यमानस्य[3] कालान्तरे तथात्वात् **इत्यत** आह **एतेनेति**।,

"किमत्र १) रागस्य तत्त्वता आपाद्यते ? किंवा २) धर्मिणः ? १) आद्ये– भाविनः ? पूर्वम् आरोपितस्य वा ? नाद्यः इष्टत्वात् । नै[4]

१. अतत्त्वं २. स्ववस्थया ३. उपलम्भमानस्य
४. 'न द्वितीयः'इति उपलब्धग्रन्थे नास्ति ।

द्वितीयः; यद्देशकालयोः यत् यथा प्रतीयते तद्देशकालयोः तस्य तथात्वस्यैव तत्त्वलक्षणत्वेन, श्यामताऽवस्थायां सत्त्वेन-प्रतीयमान-रागस्य अतथात्वेन, तत्र अतिव्याप्त्यभावात् ।

२) नान्त्यः; धर्मिणः तत्त्वतया अङ्गीकृतत्वेन इष्टापत्तेः॥" —इत्यभिप्रेत्य समाधत्ते **भाविनः प्रमेयत्वेऽपि** इत्यादिना वाक्यद्वयेन ॥

[ ६ का. विषयः— अ) 'तत्त्व'शब्दस्य यौगिकार्थपरित्यागपरतया 'तेन....अनवकाशः'इति वाक्यस्य व्याख्याने— १) स्वमतेन— खण्डनकारोक्त दूषणानवकाशोक्तिपरतया अवतरणम्, पदार्थः, भावश्च । २) अन्यमतेन पदार्थः ।

आ) 'तत्त्व'पदरूढिरक्षोक्तदूषणनिरासपूर्वकरूढ्याश्रयणे— १) दूषण-शङ्कात्वेन— क) खण्डनकारोक्तदूषणशङ्कापरतया 'ननु....न प्रमेय इति' इत्यस्य अवतरणम्, 'शुक्तिरजतादिकम्'इतिपदस्य अर्थश्च । ख) 'शुक्तिरजतम्'इति प्रतीतिगत-अंशत्रयस्यापि प्रमेयत्वोक्तिपरतया 'न हि .... न प्रमेय इति' इत्यस्य व्याख्याने— १. अवतरणम्; २. 'नापि तयोः सम्बन्धः'इत्यस्य अर्थः, भावश्च; ३. शुक्ति—रजतत्व—उभयसम्बन्धस्य प्रमेयत्वोपपादनपरतया शुक्ति-व्यक्तौ....न प्रमेय इति'इत्यस्य अवतरणम्, भावश्च । २) शङ्कासमाधा-यकतया— क) 'स्यादिदम्....नायं दोषः'इत्यस्य व्याख्याने— १. अवतरणम्; २. पदार्थः, भावश्च; ३. 'असतः प्रतीत्यभावः'इतिशङ्कानिरासकतया 'दोषवशात्'इत्यस्य अवतरणम्, भावः, (तात्पर्य)दिशा च । ख) 'एतेन.... अङ्गीकारात्'इत्यस्य व्याख्याने— १. खण्डनकृतोक्तदूषणान्तरनिरासकतया 'भाविनः....अङ्गीकारात्'इत्यस्य अवतरणम्, भावश्च ॥ ]

एवं 'तत्त्व'शब्दव्याख्यानेन 'तत्त्वानुभूतिः प्रमा'इत्युदयनोक्तलक्षणे खण्डनकारोक्तदूषणस्य प्रकृतेऽनवकाशः —इत्याह **तेनेति** ॥ "[१]तस्य भावः —तत्त्वम् । 'प्रकृतम्'च 'तत्'शब्दार्थः ॥ न च प्रकृतं किञ्चिदस्ति ।"

१. खं.खं.खा. ८७ पृष्ठे ।

इत्यादिरूपं यत्खण्डनम्, तदनवकाशः; इत्यर्थः । अस्माभिः 'तत्त्व'-शब्दस्य यौगिकार्थत्यागेन रूढ्यर्थाङ्गीकारात्; इति भावः ।

केचित्तु "तस्य भावः तत्त्वम् । 'आदि'ना 'स चासौ त्वं च'इति-विग्रहान्तरपरिग्रहः ॥ तस्य यत् खण्डनम्– प्रथमे 'स्वातन्त्र्यादिकमेव तत्त्वं स्यात्, न तु स्वतन्त्रम्,' द्वितीये 'तत्-त्वम्-पदार्थयोः ईशजीवयोः अभेदापत्तिः' –इत्यादिकम्; तदनवकाशः; रूढ्यङ्गीकारात् ॥" इत्यपि व्याचक्षते ॥

रूढिपक्षेऽपि खण्डनकारोक्तरीत्या दूषणमाशङ्कते **नन्विति** ॥ शुक्ति-जतादिकम्= शुक्तौ 'इदं रजतम्'इति प्रतीयमानम् ।;

तद्धि विशेषणविशेष्यसम्बन्धरूपं प्रत्येकं प्रमेयमेव; इत्याह **न हीति** ।,

तयोः= शुक्तिरजतत्वयोः, भासमानः, सम्बन्धः– समवायः, न प्रमेयः; –इत्यपि न; इत्यर्थः ॥ देशकालान्तरे विद्यमानस्यैव आरोप्यत्वे। भ्रमविषयस्यापि तत्त्वत्वात्; तत्त्वानुभूतित्वरूपप्रमालक्षणस्य भ्रमे इव, प्रमेयलक्षणस्य भ्रमविषये अतिव्याप्तिः ।, तस्यापि लक्ष्यत्वे च 'प्र'शब्दवैयर्थ्यम् - न च भ्रमविषयस्य प्रत्येकं प्रमेयत्वेऽपि; विशिष्टस्य अतथात्वात्, तद्वारकतया तत्सार्थक्यम्; इति वाच्यम्; विशिष्टस्य विशेष्यविशेषणसम्बन्धानतिरिक्तत्वात् ॥ –इति भावः ।,

ननु शुक्तिरजतत्वयोः प्रमेयत्वेऽपि तदुभयसम्बन्धस्य न तथात्वम्, शुक्तिरजतत्वयोः सम्बन्धाभावात्; तथाच तद्वारकतयैव 'प्र'शब्दसार्थक्यम्; इत्याशङ्क्य निषेधति शुक्तिव्यक्ताविति ॥ **मा भूदिति** । अन्यत्र सत एव रजतत्वसम्बन्धस्य शुक्तिव्यक्तौ भावेन देवदत्तादिवत् प्रमेयत्वोपपत्तेः; इति भावः ।

समाधत्ते **स्यादिदमिति** ।,

इदम्= शुक्तिरजतादेः तत्त्वत्वोपपादनम्; अन्यत्र-सत्तानियमम्, अभ्युपगच्छताम्– तार्किकाणाम्, मतदूषणम्, उक्तातिव्याप्तिसम्पादकत्वात्; न तु सिद्धान्ते, आरोपितरजतादौ अतिव्याप्तिवारकतया 'प्र'शब्दसार्थक्यात्; इति भावः ।,

**ननु** असतः कथं प्रतीतिः, सन्निकर्षाभावात्? न च 'कथम् अन्यत्र सतोऽपि प्रतीतिः, संयोगादिसन्निकर्षाभावात्?' इति वाच्यम्, ज्ञानलक्षणसन्निकर्षस्वीकारात्; असतश्च पूर्वमनुपस्थितत्वेन तदयोगात् । –इत्याशङ्क्योक्तम् **दोषवशादिति** ।,–

अयं भावः ।– अपूर्वसन्निकर्षकल्पनापेक्षया रजतसादृश्यादिदोषसहकृतशुक्तिसन्निकर्षस्यैव रजतावभासकत्वं युक्तम् । न च आरोपितस्य अत्र-सत्त्वम् अपि कल्प्यम्, मानाभावात् । न च– असत्त्वेऽपि किं मानम्? –इति वाच्यम्, 'असदेव रजतं प्रत्यभात्'इत्यनुभवस्यैव मानत्वात् । न च 'असत्'-इत्यस्य 'तत्र असत्'इत्यर्थः, मानाभावात् ॥ किञ्च उपस्थितम् अनुपस्थितं वा रजतम् आरोप्यम्? नाद्यः, आरोपितस्य उपस्थितरजतवैलक्षण्यानुभवात्; नान्त्यः, अनुपस्थितस्य सन्निकर्षाभावेन भानायोगात् । किञ्च विनिगमकाभावेन, बहूनां भ्रमविषयत्वकल्पनात् असतः कल्पनमेव लघीयः । न च असतः तज्ज्ञानजनकसन्निकर्षाश्रयत्वलक्षणविषयत्वायोगः, तदभावेऽपि उल्लेख्यत्वरूपविषयत्वोपपत्तेः इति ॥ एवञ्च'प्र'शब्दाभावे[२] भ्रमविषयविशिष्टेऽपि अतिव्याप्तिर्बोध्या, सिद्धान्ते विशिष्टस्य अतिरिक्तत्वात् । अत एव तत्त्वविवेकटीकायाम्[३] 'उल्लिखितं विशिष्टम् अतत्त्वमेव'इत्युक्तम् ॥ इति दिक् ।;

२. प्रशब्दाद्भ्रम
३. त.वि.टी. ६० पृष्ठे ।

यत्तु उक्तातिव्याप्तिवारणाय 'यद्यथाभूतं प्रतीतं तत्तथाभूतं तत्त्वम् –इति विवक्षणीयम् । न च 'इदं रजतम्' इतिमतौ 'इदं'त्वेन भातस्य 'इदं'-त्ववत्त्वात् अतिव्याप्तिः –इति शङ्क्यम्; 'येन रूपेण यत्प्रतीयते, तद्रूप-विशिष्टं तत्; तेन रूपेण प्रमेयम्'इत्यङ्गीकारात्, शुक्तेः 'इदं'त्वेन प्रमेयत्वेऽपि रजतत्वेन अप्रमेयत्वात् ।'' ईत्याशङ्क्य खण्डनकृतोक्तम्– ''रक्तपित्तवता रक्त-त्वेन प्रतीतः श्यामघटोऽपि तत्त्वं स्यात्, तस्य उत्तरकाले रक्तत्ववत्त्वात् । न च 'प्रतीतिकाले यद्यथाभूतम्'इतिविवक्षितम्; 'भाविरागोऽयम्' इतिप्रतीतोऽपि अतत्त्वं स्यात् ॥''इति; तदपि निरस्तम् –इत्याह– **एतेनेति** ॥ अत्यन्तासतः आरोप्याङ्गीकारेण इत्यर्थः ।,

कथम् एतावता एव उक्तदोषनिरासः ? इत्यत आह **भाविन इति** ॥ अयं भावः ।– किम् अस्मन्मते कुम्भस्य तत्त्वत्वम् आपाद्यते ? किंवा रक्तत्वस्य ? अन्त्येऽपि किम् भाविनः ? उत पूर्वं प्रतीतस्य ?– आद्ययोरिष्टापत्तिः । अन्त्यस्य च अत्यन्तासत्त्वात् आपादकत्वाभावः । इति ॥

[ ६ भ. विषयः– अ) 'तत्त्व'पदस्य यौगिकार्थेऽनुपपत्तिकथनपूर्वकं तन्निरासकतया 'तेन....अनवकाशः'इत्यस्य अवतरणम्, अर्थश्च ।

आ) तत्त्वलक्षणस्य अतिव्याप्तिनिरसने १) शुक्तिरजतादेस्तत्त्वत्वाशयेन 'प्र'पदवैयर्थ्यशङ्कात्वेन 'ननु....न प्रमेय इति'इत्यस्य व्याख्याने- क) अवतर-णम् । ख) 'नहि....न प्रमेय इति'इतिव्याख्याने १. 'प्रमायामिव भ्रमेऽपि अंशत्रयस्यापि तत्त्वत्वम्'इतिभावेन उपपादकतया अवतरणम्; २. 'धर्मि' पदाभिप्रेतार्थस्य सहेतुकम् उपपादनम्; ३. 'नापि....'इत्यत्र 'प्रमेयः' इति-पदस्य अनुवृत्तिश्च । २) तत्सार्थक्यतया– क) 'नायं दोषः'इत्यस्य भावः । ख) 'एतेन....अङ्गीकारात्'इत्यस्य व्याख्याने– १. 'एतेन'पदस्यार्थः; २. 'एतेन....परास्तम्'इत्युक्तार्थविवरकतया 'भाविनः....अङ्गीकारात्'इत्यस्य अवतरणम्, पदार्थः, भावश्च; पाठान्तरव्याख्यानञ्च ॥ ]

---

४. खं.खं.खा. ९० पृष्ठे. ५. आपादकत्वभावः

[1] "नेनु[2] 'तस्य भावः तत्त्वम्'इत्युच्यते। तच्छब्दश्च प्रकृत-परामर्शकः। न चात्र प्रकृतं किञ्चिदस्ति॥ अतः कथं 'तत्त्वं द्विविधम्'-इत्यादि उच्यते?" इत्यत आह **तेनेति**। तत्त्वशब्दस्य प्रमितिविषये रूढ्यङ्गीकारेण, खण्डनकारमतावलम्बनेनोक्तशङ्कायाः अनवकाशः इत्यर्थः॥

**ननु उक्तलक्षणे** शुक्तिरजताद्यारोपितव्यावृत्त्यर्थं कुतः प्रमित्यादिपदोपादानम्, तस्यापि सत्यत्वेन तत्त्वतोपपत्तेः? —इत्याशयेन शङ्कते **नन्विति**।

ज्ञानमात्रम् अंशत्रयावच्छिन्नं भवति, 'इदमित्थम्'इत्याकारकत्वात्। तत्र 'इदम्'इति धर्म्यंशः, 'इत्थम्'इति प्रकारांशः, प्रकारप्रकारिणोः सम्बन्धश्च; विशिष्टाकारकत्वात्। तत्र यथा प्रमायाम् अंशत्रयस्यापि प्रामाणिकत्वम्, एवम् आरोपेऽपि प्रामाणिकत्वमेव॥ इति कथम् अतत्त्वत्वं तस्य? —इति-भावेन उपपादयति **न हीति**।,

**नन्वत्र** 'धर्मि'पदेन किं शुक्तिकाशकलम् अभिप्रेतम्? उत आपणस्थं रजतम्? नाद्यः, 'नापि तयोः सम्बन्धः'इतिवक्ष्यमाणवाक्यार्थानुपपत्ति-प्रसङ्गात्; न हि शुक्तिकाशकलरजतत्वयोः[3] सम्बन्धः कदाऽपि प्रमाविषयो दृष्टः। न द्वितीयः, तत्सत्यतायाः[4] प्रकृतरजतसत्तायाम् अनुपयोगात्॥— **इति चेत्; न,** प्रकाराश्रयभूतधर्मिसामान्यस्यैव विवक्षितत्वात्। अत एव विशेष-पर्यवसानार्थं 'शुक्तिव्यक्तौ'इत्युक्तम्; इति ध्येयम्।;

**नापि[5] तयोः सम्बन्धः इति**। 'प्रमेयः' इति योज्यम्।

---

१. अयं विषयः ग्रन्थान्तरे नास्ति।

२. खं.खं.खा. ८७ पृष्ठे द्रष्टव्यम्। ३. श्चैतयोः

४. एकस्मिन्ग्रन्थे एतद्धेतुस्थाने प्रकृतारोपस्य शुक्तिदर्शनान्वयव्यतिरेकानुविधायित्वानुपपत्तेः; 'शुक्तिव्यक्तौ' इतिवक्ष्यमाण'व्यक्ति'शब्दवैयर्थ्यापाताच्च।' इति वर्तते।

५. इतः परं विषयः एकस्मिन्ग्रन्थे नास्ति।

**नायं दोष इति ।** धर्मिणो रजतस्य, रजतत्वस्य, तत्सम्बन्धस्य च अत्यन्तासत एव आरोपाङ्गीकारात् इति भावः ॥,

**एतेनेति ।** 'अत्यन्तासदेव दोषवशात् आरोप्यते'इत्यङ्गीकारेण इत्यर्थः ।,

एतदेव विशदयति **'भाविनः'इत्यादिना ।** भाविनो रागस्य प्रमेयत्वेऽपि, पूर्वस्य= पूर्वप्रतीतस्य रागस्य, अतथात्वात्- प्रमित्यविषयत्वात्; इत्यर्थः ।,

अयं भावः ।— किमत्र १) रागस्य तत्त्वता आपाद्यते ? उत २) धर्मिणः कुम्भस्य ?

१) आद्येऽपि भाविनो वा ? उत पूर्वमारोपितस्य ? नाद्यः इष्टत्वात्; न द्वितीयः अत्यन्तासत एव तस्य पूर्वम् आरोपाङ्गीकारात्;

२) नान्त्यः धर्मिणः तत्त्वभावाङ्गीकारेण इष्टत्वात्, रक्ताविशिष्ट-कुम्भस्य च अत्यन्तासत्त्वाङ्गीकारात्; इति ।

'धर्मिणस्तथाभावानङ्गीकात्'इतिपाठे 'पूर्वस्य अतथात्वं कुतः ? इत्यत आह'इत्यवतार्य 'धर्मिणः– कुम्भस्य, तथा– रक्तत्वेन, पूर्वम्, भावाङ्गीकारात्'इति व्याख्येयम् ॥

[ ७ **टी.** विषयः— अ) तत्त्वसामान्यविभागे— १) मूल-वाक्ययोजनायाम्– क) अन्वयः; ख) 'इति'शब्दाध्याहारः सप्रयोजनः । २) विभक्ततत्त्वविशेषलक्षणे– क) स्वतन्त्रतत्त्वलक्षणम्; ख) अस्वतन्त्र-तत्त्वलक्षणञ्च ।

आ) उक्ततत्त्वद्वैविध्योपपादकत्वेन– १) 'इष्यते'इत्यस्य अवतरणम्; २) शेषपूरणञ्च । ]

**तत् द्विविधम्** ॥ 'स्वतन्त्रमस्वतन्त्रश्च' इति 'इति' शब्दाध्याहारेण योज्यम् । अन्यथा 'स्वतन्त्रम् अस्वतन्त्रश्च तत्त्वम् प्रत्येकं द्विविधम्' इति प्रतीतिः स्यात् ।

**स्वरूप-प्रमिति-प्रवृत्ति-लक्षणसत्तात्रैविध्ये परानपेक्षम् स्वतन्त्रम्; परापेक्षम् अस्वतन्त्रम्** ॥

तदुपपादनायोक्तम् 'इष्यते' इति । 'प्रामाणिकैः' इति शेषः ।

[ ७ स. विषयः— अ) मूलयोजनासन्दर्भे— १) स्वतन्त्रद्वैविध्यान्यथाप्रतीतिनिरासार्थक-अध्याहार-कथनपरतया 'स्वतन्त्र....स्यात्' इत्यस्य अवतरणम्; 'अन्यथा' इतिपदस्यार्थश्च ।

आ) तत्त्वविशेषलक्षणे— १) प्रथम-तत्त्वविशेष-लक्षणपरतया— क) तत्त्वविशेषोद्देशक्रमकथनपूर्वकं 'स्वरूप....स्वतन्त्रम्' इत्यस्य अवतरणम्, पदार्थश्च । ख) लक्षणगतसत्ताप्राथम्ये निमित्तं तत्त्वविवेकसंवादसहितम् । ग) विशेषणानां प्रत्येकलक्षणपरत्वम् । घ) अनुव्याख्यानोक्तलक्षणादन्यलक्षणकरणे प्रयोजनम् । २) द्वितीय-तत्त्वविशेष-लक्षणपरतया— क) पूर्ववाक्यगतपदानामनुवृत्तिः ।

इ) उक्ततत्त्वसामान्यविभागोपपादने— १) 'तत्' पदपरामर्श्यप्रदर्शनम्; २) शेषपूरणस्य प्रयोजनञ्च । ]

ननु 'स्वतन्त्रम्' इत्यादिना 'स्वतन्त्रं परतन्त्रञ्च प्रत्येकं द्विविधम्' इति प्रतीयते; न च तत्सम्भवति, स्वतन्त्रद्वैविध्यस्य प्रमाणबाधितत्वात्; इत्यतः 'इति' शब्दाध्याहारेण व्याचष्टे **स्वतन्त्रमिति** ।

**अन्यथेति** । 'इति' शब्दानध्याहारे इत्यर्थः ॥

प्राधान्यक्रमानुसारेण प्रथमोद्दिष्टं तत्त्वं लक्षयति **स्वरूपेति** ॥ सत्तात्रैविध्ये= सत्तादित्रैविध्ये इत्यर्थः ।[1]

१. 'दि' पदं नास्ति ।

अत्र असतः प्रमित्याद्यभावेन सत्ताया उपजीव्यत्वात् प्रथमं सत्तोद्देश इति । अत एवोक्तं तत्त्वविवेकटीकायाम्[२] 'यत्स्वसत्तादौ स्वाधीनम्'इति ।,

अत्र 'सत्तायाम्, प्रमितौ, प्रवृत्तौ च अन्यानपेक्षत्वम्' इति प्रत्येकमेव लक्षणम्; अन्यथा विशेषणवैयर्थ्यापत्तेः ।,

यद्यप्यत्र 'स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः'[३] इत्यनुव्याख्यानानुसारेण 'यत् स्वसत्तादौ स्वाधीनम् तत् स्वतन्त्रम्'इति वक्तव्यम्, देशस्य सर्वगतत्ववत् कालस्य त्रिकालसम्बन्धित्ववत् (च) भगवतोऽपि विशेषबलात् स्वाधीनत्वसम्भवात्; तथापि विशेषे विप्रतिपन्नं प्रति एतत्; इति द्रष्टव्यम् ।

**परापेक्षमिति** । अत्रापि 'स्वसत्तादौ'इत्यनुवर्तते ॥

तदुपपादनाय– उक्तविभागोपपादनाय ।

अप्रामाणिकाभ्युपगमस्य उक्तविभागानुपपादकत्वादाह **प्रामाणिकैरिति** ।

[ **७ के.** विषयः– अ) मूलवाक्ययोजनासन्दर्भे– १) पूर्वोत्तरटीकाग्रन्थसङ्गतिकथनपूर्वकं 'द्विविधम्'इत्यस्य तात्पर्येण अवतरणम् । २) 'अन्यथा....स्यात्'इत्यस्य पदार्थतात्पर्याभ्याम् अवतरणम् ।

आ) तत्त्वविशेषलक्षणे– १) प्रथम-तत्त्वविशेष-लक्षणपरतया– क) 'स्वरूप....स्वतन्त्रम्'इत्यस्य सप्रयोजनम् आशयपूर्वकम् मूलालब्धत्वयुतञ्च अवतरणम् । ख) पदार्थे– १. 'सत्तात्रैविध्ये'इत्यस्य– क. अर्थः, अस्मिन्न तत्त्वविवेकटीकासंवादः, ख. विशेषणानाम् अनेकलक्षणपरत्वम्, ग. स्वरूपादीनां 'सत्त्व'व्यवहारोपपादनम्; २. 'स्वतन्त्रम्'इत्यस्य क. स्वाधीनत्व [illegible]थ दोषोद्भावनस्य तद्भिया तात्पर्यान्तरकरणस्य च भावः सप्रमाणः, ख. निरुक्तिलभ्यस्वाधीनत्वस्य लक्षणत्वानुपपत्तिनिरासः । २) उभय-तत्त्वविशेष-लक्ष

२. पृष्ठ ६ ३. १–२–१ । पृ. ३७७.

परतया– क) साभिप्रायं सप्रयोजनञ्च 'अपेक्षा'पदेन अधीनत्वविवक्षणम्, ख) तथाविवक्षणेनैव विशेषणवैयर्थ्यनिरसनम्, ग) 'पर'पदकृत्यम् ।

इ) उक्ततत्त्वसामान्यविभागोपपादने– १) पदार्थः, २) परीक्षाभाव-प्रयुक्तन्यूनत्व-अभावाभिप्रायेण शेषपूरकस्य अवतरणम् । ]

एवम् आक्षेपात् कारिकाखण्डाद्वा लब्ध-तत्त्वसामान्यलक्षणं व्याख्याय विभागोद्देशपरं वाक्यं व्याचष्टे **द्विविधमिति** ।

'इति'शब्दानध्याहारे बाधकमाह **अन्यथेति** ।।

ननु स्वतन्त्रपरतन्त्रयोर्लक्षणानभिधानात्, न्यूनत्वम्, इत्यतः 'स्वत-न्त्रम्'इत्याद्यनुवादेनैव लक्षणस्य सूचितत्वात् अदोषः; इत्याशयेन संज्ञानिरुक्त्या लब्धं लक्षणमाह **स्वरूपेति** ।।;

**सत्तात्रैविध्य इति**[1] । सत्तादित्रैविध्ये इत्यर्थः ।। अत एव तत्त्वविवेक-टीकायां[2] 'यत् स्वसत्तादौ'इति 'आदि'पदप्रयोगः; इति ध्येयम् ।,

अत्र 'स्वसत्तायां स्वाधीनम्', 'स्वप्रवृत्तौ स्वाधीनम्'इत्याद्यनेकलक्षण-सूचने–तात्पर्यात् व्यावर्त्याप्रसिद्ध्या विशेषणवैयर्थ्यशङ्कानवकाशः ।,

वस्तुतः अत्र 'आदि'पदाभावेऽपि[3] न दोषः; ''केचिन्मन्यन्ते स्वरूप-मेव वस्तुनः सत्त्वम् इति; अपरे तु पुनः प्रमाणयोग्यत्वम्; अन्ये पुनः अर्थ-क्रियाकारित्वम् इति । तदिदं त्रयमपि प्रकृत्यादीनां भगवदधीनम् ।।''इति-पातञ्जलाधिकरणीय– 'तदधीनाश्च सर्वदा' इत्याद्यनुव्याख्यानसुधाऽनुसारेण[4]-स्वरूपादीनां सत्त्वव्यवहारोपपत्तेः; इति ध्येयम् ।;

अत्र 'स्वतन्त्र'पदस्य 'स्वाधीनम्'इतिपदार्थम् उक्त्वा तस्य परतन्त्र-लक्ष्म्यादावतिव्याप्तत्वात् 'परानपेक्षम्'इतितात्पर्योक्तिः; 'विशेषे-विवदमानं प्रति 'परानधीनत्वम्'एव लक्षणम् अस्तु' इतिभावेन; न तु 'परानधीनत्वम्'एव

---

१. बहुत्र 'दि'पदं नोपलब्धम् । २. पृष्ठ-६१.

३. पदाभावेनापि

४. अनुव्याख्यानम् २–२–५. सुधा पृ. ३३० पं. ११

'स्वतन्त्र'शब्दमुख्यार्थः, तथासति 'स्वेच्छाऽनुसारितामेव स्वातन्त्रं हि विदो विदुः'[5]इत्यनुव्याख्यानेन, 'स्वतन्त्रः= स्वेच्छाधीनप्रवृत्तिः'[6]इतितत्त्वोद्योतटीकया, "बाधकाभावेन-उपचाराश्रयणस्य अयुक्तत्वादेव 'स्वतन्त्रः'इत्यस्य 'परतन्त्रताव्यावृत्तिः' अर्थः इत्ययुक्तम्[7]" –इति[8]'देशः सर्वत्र पुरुषः स्वतन्त्रः कालनित्यता, इत्येतद्व्याख्यानटीकया[9] च विरोधापातात्[10]।,

न च– स्वस्य स्वाधीनत्वासम्भवेन निरुक्तिर्लभ्यस्य[11] लक्षणत्वानुपपत्तेः, अमुख्याश्रयणम्; –इति वाच्यम्; देशस्य देशसम्बन्धित्ववत्, कालस्य कालसम्बन्धित्ववच्च विशेषबलेन ईश्वरस्यापि ईश्वराधीनत्वसम्भवेन बाधकाभावात्, इति भावः।

अत्र परानधीनसत्ताकत्व-तदधीनसत्ताकत्वे एव स्वतन्त्रास्वतन्त्रलक्षणतया अभिमते, इति; अपेक्षायाश्चेतनधर्मत्वेन यथाश्रुते स्वतन्त्रलक्षणे अचेतने

---

५. अनुव्याख्यानम् २-२-१
६. त.द्यो.टी.पृ. ११३. पदुपरि के.टि.पृ.१२२ द्रष्टव्यम्।
७. 'इत्ययुक्तम्'इतिपदमेव बहुत्र नोपलभ्यते॥
उपलब्धतत्त्वनिर्णयपाठः 'इत्युक्तम्'इत्येव वर्तते। परं 'परतन्त्रताव्यावृत्तिः' इत्यर्थस्य 'स्वतन्त्र'पदादुपचारेणैव लाभात्, तथा तत्त्वोद्योतस्य केशवभट्टीयटिप्पण्याम् (१२२ पृष्ठे,उदाहृते अस्मिन् तत्त्वनिर्णयटीकावाक्ये 'इत्ययुक्तम्'इतिपाठस्यैव उपलब्धत्वाच्च, 'इत्युक्तम्'इति पाठः प्रामादिकः' 'इत्ययुक्तम्'इत्येव च पाठः शुद्धः; इत्यनुमीयते।
८. इदं वाक्यं तत्त्वनिर्णयटीकायां १०२५ पृष्ठे वर्तते। 'स्वातन्त्र्यम्'इति प्रायपाठः।
९. इदं वाक्यं तत्त्वनिर्णयस्य १०२४ पृष्ठे वर्तते।
१०. अत्र 'अत्र स्वतन्त्रपदस्य....विरोधापातात्' इत्यस्मिन्ग्रन्थे अनेके पाठभेदाः उपलब्धाः। तत्र सर्वेषां संकलनेन अयमत्र दत्तः।
११. निरुक्तिर्लभ्यस्य

अतिव्याप्तिः, अस्वतन्त्रलक्षणे च अव्याप्तिः, इतिचोद्यानवकाश ।, अधीनताया एव 'अपेक्षा'पदेन विवक्षणात् ।,

अत एव 'परानपेक्षतदपेक्षत्वयोरेव लक्षणत्वसम्भवात् शेषवैयर्थ्यम्'-इतिपरास्तम्; यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावात् ।;

न च 'पर'पदवैयर्थ्यम्, भगवत्स्वरूपभूताया अपि सत्तायाः विशेषबलेन स्वाधीनतया असम्भवादिप्रसङ्गात्; इति ध्येयम् ॥

**तदुपपादनायेति** । तत्त्वद्वैविध्योपपादनायेत्यर्थः ।

'इष्यते'इति-स्वोक्तविभागस्य प्रामाणिकत्वसूचनात् परीक्षाऽपि अर्थात् कृता, इति न न्यूनत्वम्; इत्याह **प्रामाणिकैरिति शेष इति** ।

[ ७ **वि.** विषयः— अ) मूलवाक्ययोजनासन्दर्भे— १) व्याख्यातपूर्वटीकासङ्ग्रहार्थपूर्वकम् उत्तरटीकावाक्ययोजकतया 'द्विविधम्'इत्यस्य अवतरणम्, योजना च । २) अन्वयाभावनिरासकतया 'स्वतन्त्रं.... स्यात्'इत्यस्य अवतरणम्, पदार्थश्च ।

आ) तत्त्वविशेषलक्षणे— १) उभयतत्त्वविशेष लक्षणतया 'स्वरूप.... अस्वतन्त्रम्'इत्यस्य अवतरणम् । २) प्रथम तत्त्वविशेष लक्षणे— क) पदार्थः; ख) स्वरूप-प्रमिति-प्रवृत्तीनां सत्तात्वोपपादनम्; ग) दलकृत्ये— १. त्रिविध-सत्तानिर्देशस्य लक्षणदोषनिवारणपरत्वाभावः, २. 'स्वसत्तायाम्'इत्यस्य कृत्यम् । ३) द्वितीय-तत्वविशेष-लक्षणे पदार्थः ।

इ) उक्त-तत्त्वसामान्यविभाग-उपपादने— १) 'इष्यते'इत्यस्य वैयर्थ्य-निरासकतया 'तदुप...इष्यत इति'इत्यस्य अवतरणम्, विग्रहार्थौ । २) " 'इष्यते'इतिपदेन तदुपपादनालाभः''इतिशङ्कानिवर्तकत्वेन शेषपूरकस्य अवतरणम्, पदार्थश्च । ]

तत्त्वपदप्रवृत्तिनिमित्तम् अनारोपितत्त्वं तत्त्वस्य सामान्यलक्षणम् इत्यभिधाय, वाक्यं योजयति द्विविधमिति ॥ तत्त्वं द्विविधम् ।

कथं द्वैविध्यम् ? इतिजिज्ञासायाम् 'स्वतन्त्रमस्वतन्त्रञ्च'इत्युक्ते अन्वयाप्रतीतेः आह **स्वतन्त्रमस्वतन्त्रश्चेतीति** ॥ योज्यम्= योजनीयम् इत्यर्थः । **अन्यथेति** 'इति'शब्दाध्याहारमन्तरेण वाक्ययोजनायाम् इत्यर्थः प्रत्येकम्= एकैकं तत्त्वम् इत्यर्थः ।

स्वतन्त्रास्वतन्त्रयोः किं लक्षणम् ? इतिजिज्ञासायाम्; 'स्वतन्त्रास्वतन्त्र'शब्दरूपसंज्ञानिरुक्त्यैव अनयोर्लक्षणं सूचितम् –इत्याशयेन, तयोः लक्षणमाह **स्वरूपेति** ।;

स्वम्= स्वीयम्, रूपम्– धर्मिभूतं रूपम् इति यावत्, प्रमितिः= स्वस्वान्यगोचरा समीचीना प्रतीतिः, प्रवृत्तिः= कार्यार्थे व्यापारः, –ताः एव, लक्षणम्= स्वरूपम्, यस्याः सा,– तथोक्ता; तस्याः त्रैविध्ये– त्रिविधसत्तायाम् इति यावत् ।,

निरूपे शशविषाणादौ 'असत्'इतिप्रयोेत् स्वरूपं सत्ता भवति । स्वपरविषयकज्ञानशून्ये पुरुषे 'असत्'इतिप्रयोगात् प्रमितिः अपि सत्ता भवति । कार्योपयुक्तव्यापाररहिते पुरुषे 'असत्'शब्दप्रयोगात् प्रवृत्तिः अपि सत्ता इत्यवगन्तव्यम् ।,

'स्वसत्तायां परानपेक्षं स्वतन्त्रम्'इत्येव लक्षणोक्तिः । 'सत्ता च त्रिविधा' इति ज्ञापनाय इतरोक्तिः ॥ परानधीने तुच्छे अतिव्याप्तिवारणाय 'स्वसत्तायाम्'इतिविशेषणम् ।;

**परापेक्षम्** – उक्तसत्तात्रैविध्ये यत् पराधीनम्, तत् परतन्त्रम्; इत्यर्थः ॥

'इष्यते'इत्यस्य वैयर्थ्यमाशङ्क्याह **तदुपपादनायेति** । तस्य– उक्ततत्त्वविभागस्य, समर्थनाय; इत्यर्थः ।

ननु 'इष्यते'= अङ्गीक्रियते'इत्यनेन कथं तदुपपादनं भवति ? इति जिज्ञासायाम् आह **प्रामाणिकैरिति शेष इति** । प्रमाणसिद्धार्थाङ्गीकारिणः प्रामाणिकाः, तैः; इत्यर्थः ।

[ ७ मु. विषयः— तत्त्वसामान्यविभागे— तत्त्वविशेषलक्षणे— प्रथम-तत्त्वविशेष(स्वतन्त्र)लक्षणे— १) लक्षणोक्तित्वेन 'स्वरूप....स्वतन्त्रम्'इत्यस्य अवतरणम् । २) 'स्वतन्त्र'शब्दार्थे— क) अर्थः, तत्र सप्रयोजनं विशेषणञ्च । ख) दलकृत्यानि । ग) न्यायसिद्धार्थपरतया 'परानपेक्षम्'इत्यस्य— १. अवतरणम्; २. अर्थः; ३. तेन च इतरांशवैयर्थ्यनिरसनम्; घ) 'स्वरूप-प्रमितिप्रवृत्तिः....'इत्यस्य द्विधा अवतरणम्— १. स्वरूपेत्यादेः सार्थक्याभि-प्रायेण, २. प्रकारान्तरेण-लक्षणसूचनार्थत्वेन च । ङ) सत्तायाः प्रमिति-प्रवृत्तिरूपत्वप्रदर्शनम् । ]

निरुक्तिलभ्यं लक्षणमाह **स्वरूपेति** ॥

स्वाधीनत्वं 'स्वतन्त्र'शब्दार्थः । तच्च लक्ष्म्यादेरपि समम्; इति 'असाधारण्येन व्यपदेशा भवन्ति'इति न्यायेन 'अन्यानधीनत्वे सति स्वाधीनत्वम्' शब्दार्थत्वेन वर्णितम् ।

तत्र अनधीनत्वमात्रस्य लक्षणत्वे विष्णोरपि स्वाधीनत्वेन असम्भवा-पत्तेः । पराधीनत्वस्य शशविषाणे; अतः स्वाधीनत्वविशेषणम् । स्वाधीनत्वस्य लक्षणत्वे लक्ष्म्यादौ; अतः पूर्वविशेषणम् । इति ।

विशिष्टस्य लक्षणत्वम् अभिप्रेत्य विशेष्यस्य 'स्वतन्त्र'शब्दावयवव्युत्प-त्त्यैव प्रतीतेः न्यायसिद्धमर्थमाह **परानपेक्षमिति** । रूढलक्षणया परानधीनम् इत्यर्थः । तर्हि इतरव्यर्थम्; इति चेत्; क्वचित् स्वरूपे, क्वचित् प्रवृत्तौ, सत्तायां परानधीनत्वोक्तेः ।

स्वरूपप्रवृत्तिप्रमितीनां परस्परस्वरूपत्वाभावः, सत्ताया अपि तत्स्वरूप-त्वाभावः, किम्? इत्यपेक्षायाम् तत्स्वरूपत्वं वक्तुं 'स्वरूपकथनार्थत्वेन सार्थक्यात्' इत्यभिप्रेत्योक्तम् **स्वरूपेत्यादि** । सामान्यगर्भितस्य विशेष-त्रयगर्भितस्य 'पराधीनसत्ताकत्वम्'इत्यादेः लक्षणस्य सूचनाय वा **स्वरूपेत्यादि** ।

'सदेव सत्ता'इति व्युत्पत्त्या स्वरूपरूपत्वम्, 'सतो भावः सत्ता'इति व्युत्पत्त्या प्रमिति-प्रवृत्ति-रूपत्वं सत्तायाः; इति भावः ।

[ ७ का. विषयः– अ) मूलवाक्ययोजनासन्दर्भे– १) 'तत् द्विविधम्' इत्यस्य– क) अवतरणम्; ख) पदार्थः । २) अध्याहारसन्दर्भे– क) 'अन्यथा'पदस्यार्थः; ख) शेषरूपो भावश्च ।

आ) तत्त्वविशेषलक्षणे– १) उभयतत्त्वविशेष-लक्षणपरतया– क) 'स्वरूप....अस्वतन्त्रम्'इत्यस्य अवतरणम् । ख) प्रथमतत्त्वविशेष-लक्षणत्वेन– १. तावदंशस्य पदार्थः; २. सप्रयोजनम् 'परानपेक्षम्'इत्यस्य अवतरणम्; ३. दलकृत्यानि च । ग) वास्तविकः स्वतन्त्र-परतन्त्र-पदार्थः । घ) अन्यमतेन स्वतन्त्र-परतन्त्र-पदार्थः । ङ) तत्त्वविवेकटीकास्थ-'स्वतन्त्र'-लक्षणविषयिकायाः व्यासतीर्थीयटिप्पण्याः आशयश्च ।

इ) उक्ततत्त्वसामान्यविभागोपपादने– १) 'तदुपपादनाय....शेषः' इत्यस्य क) अवतरणम्, ख) अर्थः । २) 'प्रामाणिकैः'इत्यस्य भावः ।]

इदानीं मूलं योजयति **तदिति** ॥ तत्– तत्त्वम् ।

अन्यथा– 'इति'शब्दानध्याहारे ॥ स्वतन्त्रद्वैविध्यञ्च प्रमाणबाधितम् इति भावः ॥

स्वतन्त्रास्वतन्त्रयोरपि उद्देशलब्धं लक्षणम् आह **स्वरूपेति**[1]।

स्वरूपम्= अनागन्तुकं रूपम्; प्रमितिः= प्रमायोग्यत्वम्, अबाधितधर्मः इति यावत्; प्रवृत्तिः= कार्यजननशक्तिः; तल्लक्षणत्रिविधसत्तासु स्वाधीनत्वम् ।,

स्वतन्त्रत्वम् इत्युक्तौ रमादिष्वतिव्याप्ति, अतः स्वमात्राधीनत्वं विवक्षणीयम्; तच्च न 'स्वान्यानधीनत्वे सति स्वाधीनत्वम्', विशेष्यवैयर्थ्यात्[2]; इतिभावेनोक्तम् **परानपेक्षमिति** ।,

---

१. अत्र एकस्मिन्ग्रन्थे वाक्यद्वयमधिकं लेखकान्तरेण प्रक्षिप्तमिति दृश्यते– 'प्रमाविषयत्वात्यन्ताभावानधिकरणत्वम् इत्यर्थः । एतेन यदाकदाचित् प्रमाभावेन तत्त्वत्वाभावेऽपि प्रमाविषयत्वस्वरूपयोग्यत्वसम्भवेन नाव्याप्तिः इति सूचितम् ।'इति ।

२. वैशिष्ट्यवैयर्थ्यात्

'स्वस्य स्वाधीनत्वात् असम्भव'वारणाय 'पर'शब्दः ॥ न 'स्वरूप'-इत्यादिकं व्यर्थम्; परानधीनस्वरूपत्वादेरेव विवक्षितत्वेन यथासन्निवेशेना[3]-वैयर्थ्यात् ॥ न च 'प्रमिति'आदिपदवैयर्थ्यम्; 'पराधीनप्रमितित्व'आदेः पृथग्लक्षणत्वात् ॥ सत्तात्रैविध्योक्तिस्तु स्वरूपादित्रयस्य सत्ताव्यवहारविषयत्व-ज्ञापनार्थम् ॥ न चैवम् सामान्यतः पराधीनसत्ताकत्वमेव लक्षणम् अस्तु इति वाच्यम्; एकमते स्वरूपादित्रये सत्ताव्यवहाराभावेन विशेषलक्षणपर्यवसानात् । तथोक्तं सुधायाम्[4]—'केचिन्मन्यन्ते वस्तुनः[5] स्वरूपमेव सत्त्वम् इति, अपरे प्रमाण-योग्यत्वम् इति, अन्ये पुनः अर्थक्रियाकारित्वम्[6] इति; तदिदं त्रयं प्रकृत्यादीनां भगवदधीनम्' इति । अत एव 'यत् स्वसत्तादौ[7] परानपेक्षम्'इतितत्त्वविवेक-टीकायाम् आदिपदेन प्रमित्यादिकम् उपात्तम् ।

वस्तुतः— परानधीनत्वम् एव स्वतन्त्रत्वम् । तद्वैपरीत्यम् अस्वतन्त्रत्वम् । स्वरूपेत्यादिकन्तु तदुपपादनम् ।—इत्यवधेयम् ।

केचित्तु "स्वनिष्पत्ति-स्वप्रमिति-स्वप्रवृत्ति-अन्यतमेषु परानपेक्षम् स्वतन्त्रम् । तद्विपरीतम् अस्वतन्त्रम् ॥ स्वप्रमितिपदेन च स्ववृत्तियावद्धर्म-प्रकारकयथार्थज्ञानं विवक्षितम् ॥ अतः स्वतन्त्रस्य पराधीनप्रमितिविषयत्वेऽपि न दोषः ॥"इति व्याचक्षते ।

यत् 'स्वसत्तादौ स्वाधीनम्, न तु परापेक्षम्; तत् स्वतन्त्रम्'इति-तत्त्वविवेकटीकायाम् "यथाश्रुतम् स्वाधीनत्वम् अपि तल्लक्षणम्; विशेषबलात् स्वस्यस्वाधीनता-निर्वाहात् । विशेषे विवदमानं प्रति 'परानपेक्षत्वम्'विवक्षि-तम् ।"इति व्यासतीर्थचरणैः उक्तम् ॥ तत्र आद्ये रमादावतिव्याप्तिवारणाय मुख्यतः स्वाधीनत्वं विवक्षणीयम्; तच्च पराधीनस्वनिष्ठनियामकताकत्वम्, रमादीनाञ्च स्वनियामकत्वस्य पराधीनत्वात् नातिव्याप्तिः । द्वितीये 'पर'शब्दः स्पष्टार्थ एव । —इत्याशयः ॥

३. वेशना । ४. २–२–५ सूत्रे ३३० पृ. ११ पं. । ५. वस्तुतः । ६. कारत्वम् । ७. त.वि. मन्दारमञ्जरी ६१ पृष्ठे ।

न्यूनताभङ्गाय परीक्षार्थत्वेन 'इष्यते'इतिमूलम् अवतारयति **तदुपपादनायेति** ॥ उक्तार्थस्यैव उपपन्नत्वज्ञापनाय इत्यर्थः । इष्यते= अङ्गीक्रियते ।

**प्रामाणिकैरिति** । अन्येषामप्रामाणिकत्वलाभात् परपक्षप्रतिक्षेपपूर्वक स्वपक्षस्थापनरूपपरीक्षालाभः; इति भावः ।

[ ७ भः विषयः– अ) उभय-तत्त्वविशेष-लक्षणपरतया– १) भावपूर्वकम् 'स्वतन्त्र-अस्वतन्त्र'शब्दनिर्वचनतया 'स्वरूप....अस्वतन्त्रम्'इत्यस्य अवतरणम् । २) प्रमिति-प्रवृत्ति-पदार्थौ । ३) 'सत्ताश्रैविध्ये'इत्यस्य– क) प्रयोजनम् ; ख) अर्थश्च । ४) 'परानपेक्ष-परापेक्ष'पदयोः अर्थौ । ५) स्वतन्त्रास्वतन्त्रयोः निष्कृष्टलक्षणे च ।

आ) उक्त-तत्त्वसामान्यविभाग-उपपादकतया– १) परीक्षासूचकत्वेन 'तदुप....शेषः'इत्यस्य अवतरणम् । ]

[1]उद्देशेनैव लक्षणमपि लब्धम्, अतो न न्यूनता; इतिभावेन 'स्वतन्त्र-अस्वतन्त्र'शब्दौ निर्वक्ति **स्वरूपेति** ।

प्रमितिः= प्रमाणयोग्यत्वम्, प्रवृत्तिः= अर्थक्रियावत्त्वम् ।

स्वरूपादित्रयाणामपि सत्तात्वेन पृथक् वादिनां व्यवहारात् तदनुसारेण **सत्तात्रैविध्ये** इत्युक्तम् । त्रिविधसत्तायाम् इत्यर्थः ।

परानपेक्षम्= परानधीनम् । परापेक्षम्= पराधीनम् ।

**तथाच** परानधीनसत्ताकत्वम् स्वतन्त्रतत्त्वस्य, पराधीनसत्ताकत्वम् अस्वतन्त्रतत्त्वस्य लक्षणम् इत्युक्तम् भवति ॥

'इष्यते'इति उक्तार्थे प्रमाणं सुचयता परीक्षाऽपि सुचिता; इत्याह **तदुपपादनायेति** ।

---

१. 'उद्देशेनैव....तदुपपानायेति'इति विषयः एकस्मिन्ग्रन्थे नास्त्येव ।

[ ८ टी. विषयः— उक्ततत्त्वसामान्यविभागोपपादने—

अ) तद्विभागस्य परीक्षायां पञ्चविधमतनिरसने— १) तत्वसामान्याभावम्-तद्दूषणे— क) प्रथमतः प्रत्यक्षादिविरोधः। एतत्प्रत्यक्षस्य च— १. बाधकाभावात् भ्रान्तित्वाभावः, २. बाधसत्व-भ्रान्तित्वयोः अङ्गीकारेऽपि तत्त्वसामान्याभावासिद्धौ— क. भ्रान्तेः तत्त्वभूत-अधिष्ठानसापेक्षत्वनियमः; ख. बाधस्य च तत्त्वभूत-अवधिसापेक्षत्वनियमः। ख) व्याघातश्च। २) 'एकमेवतत्त्वम्' इतिमतदूषणे— क) प्रत्यक्षादिविरोधः; एतत्प्रत्यक्षादेर्भ्रान्तित्वाभावश्च। ३) 'सर्वमेव स्वतन्त्रम्' इतिमतदूषणे— क) प्रतीतिविरोधः; ख) अनिष्टापत्तिश्च। ४) 'परतन्त्रमेव तत्त्वम्' इतिमतदूषणे— क) अनिष्टापत्तिः; ख) आगमविरोधश्च। ५) अन्यप्रकारकद्वैविध्ये वैयर्थ्यम्।

आ) उक्तप्रकारेणविभक्ततत्त्वयोः परस्परविशिष्टसम्बन्धज्ञानेन निःश्रेयसजनकत्वम्, तदन्यथा अपार्थकत्वञ्च। इ) तत्त्वद्वैविध्योपपादनोपसंहारः ॥ ]

**तथाहि— यदि 'तत्त्वमेव नास्ति' इति ब्रूयात् तदा प्रत्यक्षादिविरोधः। 'भ्रान्तिः सा' इति चेत्; न, बाधकाभावात्। न च निरधिष्ठाना भ्रान्तिरस्ति; नापि निरवधिको बाधः॥ 'नास्त्येव तत्त्वम्' इत्यस्यार्थस्य प्रमितत्वाप्रमितत्वयोः व्याघातश्च।**

**यदि[1] च एकमेव तत्त्वम्; तदा भेदोपलम्भविरोधः। तद्भ्रान्तितायाश्च बाधकं वाच्यम्; तच्च अन्यत्र निरस्तम्।**

**यदि वा सर्वमेव स्वतन्त्रं स्यात्; तदा पारतन्त्र्यादिप्रतीतिविरोधः, नित्यसुखादि–प्रसङ्गश्च।**

**यदि वा[2] परतन्त्रमेव तत्त्वं भवेत्; तदा अनवस्थितेः असम्भवाच्च न कस्यापि सत्तादिकं स्यात्, आगमविरोधश्च[3]।**

---

१. वि. टि. अनुसारेण 'यदिवा' इति पाठः।

२. के. टि. अनुसारेण 'यदिच' इति पाठः।

३. स. टि. अनुसारेण 'धाच्च' इति पाठः।

यद्यपि भावाभावतया वा चेतनाचेतनत्वेन वा नित्यानित्यतया वा अस्य द्वैविध्यं शक्यते वक्तुम्; तथापि अस्य वैयर्थ्यात् अयमेव विभागो न्याय्यः ॥

परतन्त्रप्रमेयं[4] स्वतन्त्रप्रमेयायत्ततया विदितं हि निःश्रेयसाय भवति। तथाच प्रकरणान्ते वक्ष्यति। अन्यथा गङ्गावालुकापरिगणनवत् इदं तत्त्वसङ्ख्यानम् अपार्थकं स्यात् ॥

अतः स्वतन्त्रास्वतन्त्रभेदात् द्विविधं तत्त्वम्; इति ॥

[ ८ स. विषयः– उक्ततत्त्वद्वैविध्यपरीक्षायाम्–

अ) उक्तविभागानङ्गीकारे चतुर्विधकारणानि विकल्पयित्वा – १) प्रथमकारणनिरासकतया 'यदि....व्याघातश्च' इत्यस्य व्याख्याने- क) अवतरणम्। ख) 'यदि....विरोधः' इत्यस्य अर्थः। ग) अस्यैवार्थस्य समर्थने– १. भ्रान्तेः-तत्त्वान्यथाऽनुपपत्तौ– क. 'न च...अस्ति' इत्यस्य अभिप्रायपूर्वकम् अवतरणम्, ख. अस्यैव भावः, ग. केशोण्डुकादिभ्रमस्य तेजोधिष्ठानकत्वम्; २. बाधस्यापि तत्त्वान्यथाऽनुपपत्तौ– क. 'नापि....बाधः' इत्यस्य अभिप्रायपूर्वकम् अवतरणम् ख. 'अवधि'पदार्थः, ग. तात्पर्यार्थश्च। घ) अभिप्रायपूर्वकम् दूषणान्तरत्वेन 'नास्त्येव....व्याघातश्च' इत्यस्य अवतरणम्। २) द्वितीयकारणनिरासकतया- 'यदि च....निरस्तम्' इत्यस्य व्याख्याने– क) अवतरणम्, ख) भेदोपलम्भस्य आकारः, ग) 'तत्'पदाभिप्रेतं भेदमिथ्यात्वानुमानम्, घ) 'अन्यत्र' इतिपदोक्त–स्थलादिप्रदर्शनम्। ३) तृतीयकारणनिरासकतया 'यदि वा सर्वमेव...विरोधश्च' इतिग्रन्थव्याख्याने तृतीयकारणं द्विधा विकल्प्य– क) आद्यपक्षनिरासकतया 'यदि वा....प्रसङ्गश्च' इत्यस्य व्याख्याने– १. अवतरणम्, २. पदार्थः, ३. अचेतने-नित्यसुखादिप्रसङ्गस्य उपपादनञ्च। ख) द्वितीयपक्षनिरासकतया 'यदि वा परतन्त्रमेव....विरोधश्च' इतिग्रन्थव्याख्याने– १. अवतरणम्, २. अनवस्थितिविवरणम्, ३. असम्भवविवरणम्,

---

४. के.टि. अनुसारेण– 'परेतन्त्रं हि, परतन्त्रत्वं हि, परतन्त्रतत्त्वंहि' इतिपाठभेदाः ग्रन्थभेदेन उपलभ्यन्ते।

४. 'आदि'पदसङ्ग्राह्यम्, ५. विरोधे आगमप्रदर्शनम् । ४) चतुर्थकारण-निरासकतया 'यद्यपि...न्याय्यः'इतिग्रन्थव्याख्याने– साभिप्रायम् अवतरणम् ।

आ) उक्तविभागस्य सार्थक्ये– १) 'परतन्त्र....तत्त्वम्'इतिग्रन्थस्य व्याख्याने– क) अवतरणम्; ख) 'हि'शब्दस्य– अर्थः, 'अतः'शब्देन सम्बन्धश्च; ग) 'वक्ष्यति'इत्यतः परं शेषः, घ) 'इति'इत्यतः परञ्च शेषः ॥ ]

यस्तु स्वातन्त्र्यास्वातन्त्र्याभ्याम्-उक्तविभागं नाङ्गीकरोति, स प्रष्टव्यः – किम् १) तत्त्वस्यैवाभावात् उक्तविभागानङ्गीकारः ? उत २) तत्त्वस्य एकत्वात् ? ३) अनेकत्वेऽपि अनेकविधत्वाभावात् ? ४) प्रकारान्तरेण-अनेक-विधत्वात् वा ? —

१) न तावत् आद्यः –इत्याह **यदीति** ॥;

यदि तत्त्वमेव न स्यात् तदा 'अयं घटः'इत्यादिप्रत्यक्षविरोधः, विषयं विना प्रमित्यनुपपत्तेः । 'आदि'शब्देन अनुमानादिसङ्ग्रहः ॥ यद्वा 'अयं घटः तत्त्वम्'इत्यादिप्रत्यक्षविरोधः; इत्यर्थः ।;

अस्तु वा भ्रान्तिः तथापि तत्त्वस्वरूपाभावे सा न सम्भवति, 'रजतम्'इत्येव-भ्रमस्य अभावेन 'इदं रजतम्'इत्येव-भ्रमदर्शनेन च भ्रमस्य साधिष्ठानत्वनियमात्; इत्याह **नचेति** । **तथाच** प्रत्यक्षस्य-भ्रमत्वान्यथाऽनु-पपत्तिः एव तत्त्वसद्भावे मानम्; इति भावः ॥ ननु केशोण्डूकादिभ्रमो निरधिष्ठानो दृष्टः इति चेत्; न, तस्यापि तेजोधिष्ठानत्वाभ्युपगमात्; अत एव न गाढान्धकारे तद्भ्रमः; इति ।,

अस्तु वा बाधः; सोऽपि तत्त्वाभावे न सम्भवति, 'किमपि न'इति-बाधाभावेन 'इदं रजतं न'इत्येव-बाधदर्शनेन च बाधस्य सावधित्वनियमात्; इत्याह **नापीति** ॥ **निरवधिक इति** । यस्मिन्निवृत्तेऽपि यत् न निवर्तते सः अवधिः इत्यर्थः ॥ **तथाच** बाधान्यथाऽनुपपत्तिः अपि तत्त्वसद्भावे मानम्; इति भावः ॥,

किञ्च 'नास्त्येव प्रमेयम्'इतिज्ञानस्य प्रमात्वे तद्विषयस्य प्रमेयाभावरूपस्य प्रमेयस्य सिद्धिः, अप्रमात्वे च तद्विषयस्य प्रमेयाभावस्य बाधे प्रमेयसिद्धिः इति तन्निषेधे व्याहतिः; इत्यभिप्रेत्य दूषणान्तरम् आह **नास्त्येवेति ।**

२) 'तत्त्वस्य एकत्वात् द्वैविध्यम् अनुपपन्नम्'इतिद्वितीयं दूषयति **यदि चेति ।**

'घटपटौ भिन्नौ'इत्यादिभेदोपलम्भविरोधः ।,

ननु 'विमतो भेदो मिथ्या भेदत्वात् चन्द्रभेदवत्'इत्यनुमानं बाधकम्; इत्यत आह **तद्देति ।,**

अन्यत्र– तत्त्वोद्योतादौ साध्यविकलत्वादिना, निरस्तम्; इत्यर्थः ।

३) ननु न व्यक्त्यैक्यम् अङ्गीक्रियते, येन भेदोपलम्भविरोधः स्यात्, किन्नाम 'एकप्रकारत्वम्'इतितृतीयः पक्षः आश्रीयते इति चेत्; तत्रापि किं सर्वस्य स्वातन्त्र्यम् अभ्युपगम्यते ? उत अस्वातन्त्र्यम् ?

नाद्यः; इत्याह **यदि वेति ॥** 'पारतन्त्र्यादि'इति'आदि'शब्देन दुःखादिसङ्ग्रहः । 'नित्यसुखादि'इति'आदि'पदेन नित्यज्ञान-नित्यबल-नित्यशक्त्यादिसङ्ग्रहः ॥ नच 'अचेतनस्य कथं सुखादिप्रसङ्गः ?' इति-वाच्यम्; अचेतनस्य स्वातन्त्र्यानुपपत्तावपि तस्य स्वातन्त्र्ये नित्यसुखादिप्रसङ्गस्य दुर्वारत्वात् ।,

द्वितीयं दूषयति **यदि वेति ॥** जीवस्य जीवान्तरनियामकत्वे तस्यापि जीवत्वेन अस्वतन्त्रत्वेन अन्यापेक्षत्वे अनवस्थितेः ॥ जीवत्वेन अन्यनियामकत्वासम्भवाच्च । जीवत्वेऽपि अस्य पूर्वनियामकत्वे पूर्वस्यैव तथात्वं किं न स्यात् ? ननु 'अन्धपङ्ग्वोरिव किं न स्यात् ?' इति चेत्; न, प्रत्यासत्तेरेव अनुपपत्तेः ॥ 'आदि'पदेन प्रवृत्तिप्रमित्योः सङ्ग्रहः ॥ **आगमविरोधाच्चेति ।** 'सर्वस्याधिपतिः सर्वस्येशानः सर्वस्य वशी'[1] इत्याद्यागमविरोधाच्च; इत्यर्थः ।

१ बृ. उप. ६–४–२२ । ब्र.सू.भा. १–६–४३ इत्यत्र उदाहृतम्

४) 'द्वैविध्येऽपि प्रकारान्तरेण द्वैविध्यम्, नतु उक्तरीत्या ।' इतिचतुर्थं निराह यद्यपीति ॥

ननु इदं वैयर्थ्यं प्रकृतेऽपि तुल्यम्; इत्यत आह **परतन्त्रेति** ॥ 'हि'शब्दो हेतौ । अत एव वक्ष्यति 'अतः स्वतन्त्र'इति ॥ **वक्ष्यतीति** । 'विष्णुनास्य समस्तस्य' इत्यादिना इति शेषः ॥ **द्विविधं तत्त्वमिति** । 'विभागः उपपन्नः'इतिशेषः ॥

[ ८ के. विषयः– उक्ततत्त्वद्वैविध्यपरीक्षायाम्–

अ) उक्ततत्त्वद्वैविध्यानङ्गीकरणे सम्भावितकारणचतुष्टयं विकल्प्य–

१) प्रथमकारणनिरासकतया 'यदि...व्याघातश्च'इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'यदि...'प्रत्यक्षादिविरोधः'इत्यस्य अर्थः । उक्तविरोधसमर्थने च– १. उक्तप्रत्यक्षादेः बाधकाभावात् अभ्रान्तत्वसमर्थने 'बाधकाभावात्'इत्यस्य भावः; २. उक्तप्रत्यक्षादेः बाध-भ्रान्तित्व-उभयाङ्गीकारेऽपि तत्त्वसामान्याभावस्य असिद्ध्युपपादने– क. 'न च....भ्रान्तिरस्ति' इत्यस्य– अभिप्रायपूर्वकम् अवतरणम्, अर्थश्च; केशोण्डुकादिभ्रमस्य तेजोधिष्ठानकत्वञ्च; ख. 'नापि....बाधः'इत्यस्य अभिप्रायपूर्वकम् अवतरणम् । ग) प्रथमकारणनिरसने दूषणान्तरत्वेन अभिप्रायपूर्वकम् 'नास्त्येव....व्याघातश्च' इत्यस्य अवतरणम् ।

२) द्वितीयकारणनिरासकतया– यदि च...निरस्तम्'इत्यस्य व्याख्याने– क) तत्कारणानुवादपूर्वकम् अवतरणम् । ख) 'भेदोपलम्भविरोधः'इत्यस्य अर्थः ग) उक्तार्थस्योपपादने भेदोपलम्भस्य भ्रान्तित्वनिरासे– १. 'बाधकं वाच्यम्' इत्यस्य भावः; २. अभिप्रायपूर्वकम् 'तच्च....निरस्तम्'इत्यस्य अवतरणम् ।

३) तृतीयकारणनिरासकतया– 'यदि वा सर्वमेव...आगमविरोधाच्च'इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'नित्यसुखादि' इत्यत्र 'आदि'पदस्य अर्थः । ग) 'यदि च परतन्त्रमेव....आगमविरोधाच्च'इत्यस्य व्याख्याने– १. अभिप्रायपूर्वकम् अवतरणम्, २. अर्थः, ३. असम्भवस्य विवरणम्, ४. विरोधे आगमप्रदर्शनञ्च ।

---

२. तत्त्वसङ्ख्याने अन्तिमः श्लोकः ।

४) चतुर्थकारणनिरासकतया– 'यद्यपि....स्यात्'इत्यस्य व्याख्याने– क) तत्कारणानुवादपूर्वकम् अवतरणम् । ख) 'वैयर्थ्यात्'इत्यस्य भावः । ग) उक्तस्य वैयर्थ्यस्य उपपादकतया 'परतन्त्र....स्यात्'इत्यस्य व्याख्याने– १. अवतरणम्, २. 'वक्ष्यति'इत्यतःपरं शेषः, ३. तत्त्वसङ्ख्यान-तत्त्व-विवेकयोः-अन्तिमविषययोः भेदं प्रदर्श्य तत्त्वविवेकस्य तत्त्वसङ्ख्यानशेषत्व-कथनेन 'वक्ष्यति'इत्युक्तार्थस्य उपपादनम्, ४. 'अपार्थम्'पदस्य अर्थश्च । ]

आ) उक्ततत्त्वद्वैविध्यपरीक्षायाः उपसंहारकत्वेन 'अतः....तत्त्वमिति' इत्यस्य व्याख्याने– १) 'अतः'पदस्य अर्थः । २. शेषश्च ॥ ]

स्वातन्त्र्यपारतन्त्र्याभ्यां द्वैविध्यमनङ्गीकुर्वन् प्रष्टव्यः– किम्

१) शून्यवादिरीत्या तत्त्वस्यैव अभावात् तदनङ्गीकारः ?

२) भावेऽपि विज्ञानवादिरीत्या अनेकत्वाभावात् वा ?

३) अनेकत्वेऽपि सर्वस्य अस्वतन्त्रत्वादिना ऐकविध्येन द्वैविध्यासम्भवात् वा ?

४) प्रकारान्तरेणापि द्वैविध्यसम्भवात् वा

१) तत्र आद्यं दूषयति **यदीति** । यदि तत्त्वमेव न स्यात् तदा 'घटः' इत्यादिप्रत्यक्षप्रमितिविरोधः; विषयं विना प्रमित्यनुपपत्तेः; इत्यर्थः । 'आदि' पदेन अनुमानादिपरिग्रहः ॥ यद्वा 'अयं घटः तत्त्वम्' इत्यादिप्रत्यक्ष-विरोधः; इत्यर्थः ।

**बाधकाभावादिति** । अनुमानादेः प्रत्यक्षमूलकत्वेन तद्बाधकत्वा-सम्भवात्; इति भावः ।;

"अस्तु भ्रान्तिः; तथापि तत्त्वरुपाभावे न सम्भवति, भ्रान्तेः अधि-ष्ठानसापेक्षत्वात् । न हि 'रजतम्'इत्येव भ्रमः; किन्तु 'इदं रजतम्' इति ॥ तथाच तत्त्वस्यैव अभावे सैव न स्यात् ॥" इत्याह **न चेति** । 'नापि' इत्यर्थः ॥ केशोण्डुकादिभ्रमस्यापि तेजोधिष्ठानात् न निरधिष्ठानत्वम्; अत एव अन्धकारे न तद्भ्रमः; इति बोध्यम् ।,

"अस्तु वा बाधः; सोऽपि तत्त्वाभावे[1] नापद्यते, तस्य अवधिसापेक्षत्वात्। न हि 'किमपि न' इत्येव बाधः; किन्तु 'इदं रजतं न'इत्येव ॥ तथाच तत्त्वरूपाभावेन अवधेरेवाभावात् न बाधः सम्भवति ॥" इत्याह **नापीति** ।

"किञ्च 'नास्त्येव तत्त्वम्'इतिज्ञानस्य प्रमात्वे —एतद्विषयस्य तत्त्वाभावस्य[2] तत्त्वस्य सिद्धिः, अप्रमात्वे तु एतद्विषयस्य तत्त्वाभावस्य बाधेन तत्त्वसिद्धिः; इति तन्निषेधे व्याहतिः ।"इत्याह **नास्त्येवेति** ।

२) अस्तु तर्हि 'तत्त्वस्य ऐकविध्यात् भवदुक्तद्वैविध्यानङ्गीकारः' इति द्वितीयः, निरवद्यत्वात्; इत्यत आह **यदि चेति** ।

'घटपटौ भिन्नौ'इत्यादिभेदप्रत्यक्षोपलम्भबाधः; इत्यर्थः ।

**बाधकं वाच्यमिति** । न च तत् वक्तुं शक्यम् । ततश्च बाधकाभावात् न भेदोपलम्भस्य भ्रान्तित्वम्; इति भावः ।,

ननु 'विमतो भेदः मिथ्या भेदत्वात् चन्द्रभेदवत् ।' इति अनुमानस्यैव बाधकत्वात्[3], कथं बाधकाभावः ?, इत्यतः अनुव्याख्यानादौ[4]

'....साध्यधर्मोऽयं सन्नसन्वा न वोभयम् ।
यदि सन्नपसिद्धान्तः स एवासन्नितीरिते ॥....'

---

१. तत्त्वभावे नापपद्यते
२. तत्त्वभावस्य बाधे ।
३. बाधकः स्यात्
४. २–३–२८ ब्र.सू.स्य अनुव्याख्याने पृ. ४०२ । सुधा(पृ.४३८)अनुसारेण अस्यान्वयार्थश्च एवम्— अयं साध्यधर्मः सन् वा ? असन् वा ? उभयम्(सदसन्) वा ? नोभयम्(सदसद्विलक्षणो) वा? — यदि सन् (तदा) अपसिद्धान्तः; असन् इति ईरिते सः (अपसिद्धान्तः) एव;....इत्यादि ।

इत्यादिना अनुमानस्य निरस्तत्वात् न तदपि बाधकम्; इत्याह **तच्चान्यत्रेति** ।

३) "ननु च न व्यक्त्यैक्यं ब्रूमः, येन उक्तभेदोपलम्भबाधकप्रसङ्गः; किन्नाम स्वतन्त्रत्वादिना सर्वस्यापि ऐकविध्यमेव ।" इति-तृतीयं निराकरोति **यदीति** ।

**नित्यसुखादीति** । दुःखाभावादिकम् 'आदि'शब्दार्थः ।;

सर्वस्य अस्वातन्त्र्ये 'अनवस्थितेरसम्भवाच्च नेतरः'[5] इतिसूत्रखण्डोक्तन्यायेन न कस्यापि प्रवृत्तिः; इत्याह **यदि चेति** ।,

जीवस्य जीवान्तरनियामकत्वेन अनवस्थितेः, तस्यापि जीवत्वेन अस्वतन्त्रतया अन्यापेक्षत्वात्; जीवत्वेन अन्यनियामकत्वासम्भवाच्च । जीवत्वेऽपि अस्य अन्यानपेक्षत्वे अन्यनियामकत्वे च पूर्वस्यैव तदस्तु; इत्यर्थः ॥ 'सत्तादिकम्' इति 'आदि' पदेन प्रवृत्त्यादेः सङ्ग्रहः ।,

ननु च प्रत्येकम् असमर्थाभ्यां वाह्यवाहकभावापन्नाभ्याम् अन्धपङ्गुभ्यां गमनक्रियानिर्वाहवत्, प्रत्येकम् असमर्थैः अपि मिलितैः अस्वतन्त्रैः प्रवृत्त्यादिकम् उपपद्यते; इति चेत्; न, स्वतःशक्तिमात्रशून्ययोः इतरेतराश्रयणेन इतरेतरप्रत्यासत्तेरेव अयोगस्य अत्र अभिप्रेतत्वात् ।,

**आगमविरोधाच्चेति** । 'सर्वस्याधिपतिः सर्वस्येशानः'[6] इत्यादि-भगवत्स्वातन्त्र्यप्रतिपादक-आगम-विरोधात्; इत्यर्थः ।

४) 'द्वैविध्येऽपि तत्त्वस्य प्रकारान्तरेणापि द्वैविध्यसम्भवात् एव तदनङ्गीकारः' इत्यन्तिमपक्षं निराकरोति **यद्यपीति** ।

मोक्षरूपफलानुपयोगित्वात् इति भावः ।

---

५. ब्र. सू. १–२–१७ ६. बृ. उप. ६–४–२२

स्वपक्षसाधकहेतुम् एव उपपादयति **परतन्त्रेति**[७] ।,

“ ‘विष्णुनाऽस्य समस्तस्य’इत्यादिना” इति शेषः ।,

यद्यपि एतत्प्रकरणान्ते सृष्ट्यादिविषये ‘परतन्त्रं विष्ण्वायत्तम्’ इत्येव उच्यते, न तु तथाज्ञानस्य निःश्रेयसहेतुत्वम्; तथापि एतत्प्रकरणार्थसाक्षित्वेन भगवत्प्रणीततत्त्वविवेकगतवाक्योदाहृतिरुपतया **तत्त्वविवेकस्य** एतत्प्रकरणशेषत्वात्, तदन्ते–

‘य एतत्परतन्त्रन्तु सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥’

इत्युक्तेः, इयम् उक्तिः; इति ध्येयम् ।,

अपार्थम्= व्यर्थम् ॥

**अत इति** । सम्भावितपक्षाणाम् उक्तरीत्या दुष्टत्वात्; इत्यर्थः ॥ ‘सिद्धम्’इति वाक्यशेषः ॥

[ ८ वि. विषयः– उक्त-तत्त्वसामान्य-विभाग-परीक्षायाम्–

अ) पूर्वोत्तरग्रन्थसङ्गतिप्रदर्शकतया ‘तथाहि’इत्यस्य अवतरणम् ।

आ) (१) उक्ततत्त्वविभागानङ्गीकरणे-सम्भावितकारणचतुष्टयविकल्पः । तन्निराकरणे च–

१) प्रथमपक्षनिरासकतया ‘यदि तत्त्वमेव....व्याघातश्च’इत्यस्य व्याख्याने– क) अवतरणम् । ख) प्रथमपक्षस्य-प्रथमदूषणपरतया– १. ‘यदि....विरोधः’ इत्यस्य अर्थः; २. तस्यैव दूषणस्य उपपादने– क. उक्तप्रत्यक्षादेः भ्रान्तित्वाभावकथने– भ्रान्तित्वशङ्कात्वेन ‘भ्रान्तिः सेति चेत्’इत्यस्य अवतरणम्, पदार्थश्च; तच्छङ्कानिरासकत्वेन च ‘न’इत्यस्य अवतरणम्, अनुवृत्तिः, अर्थः, तथा तन्निरसने हेतुत्वेन ‘बाधकाभावात्’इत्यस्य अवतरणम्, अर्थः, भावश्च;

---

७. ‘परतन्त्रं हीति’ इत्येकत्र, “परतन्त्रत्वं हीति’ इति चैकत्र, ‘परतन्त्रतत्त्वं हीति’ इति च ग्रन्थत्रये पाठः ।

ख. उक्तप्रत्यक्षादेः भ्रान्तित्वाङ्गीकारेऽपि तत्त्वसिद्धिपरतया 'न च....अस्ति' इत्यस्य– अवतरणम्, पदार्थः, भावश्च; ग. उक्तप्रत्यक्षादेः बाधाङ्गीकारेऽपि तत्त्वसिद्धिपरतया 'नापि....बाधः'इत्यस्य अवतरणम्, द्विधा अर्थभावौ च । ग) प्रथमपक्षस्य द्वितीयदूषणतया 'नास्त्येव....व्याघातश्च'इत्यस्य अवतरणम्, अर्थः, अभिप्रायश्च ।

२) द्वितीयपक्षनिरासकतया 'यदि च एकमेव....निरस्तम्'इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'यदि....विरोधः'इत्यस्य अर्थः । ग) उक्तस्य भेदोपलम्भविरोधस्य समर्थने– १. तस्य भ्रान्तित्वनिरसने– क. भ्रान्तेः बाधसापेक्षतया 'तद्भ्रा....वाच्यम्'इत्यस्य अवतरणम्, अर्थश्च; ख. उक्तभेदोपलम्भे कल्पितस्य अनुमानागमरूपस्य बाधस्य निरस्तत्वेन 'तच्च....निरस्तम्'इत्यस्य – अवतरणम्, अर्थः, अभिप्रायश्च ।

३) तृतीयपक्षनिरासकतया 'यदि वा सर्वमेव....प्रसङ्गश्च'इत्यस्य व्याख्याने– क) अवतरणम् । ख) तृतीयपक्षस्य-प्रथमदूषणत्वेन 'यदि....विरोधः' इत्यस्य अर्थः । ग) तृतीयपक्षस्य-द्वितीयदूषणत्वेन 'नित्य....प्रसङ्गश्च'इत्यस्य-अर्थश्च ।

४) चतुर्थपक्षनिरासकतया– 'यदि वा परतन्त्रमेव....विरोधश्च'इत्यस्य व्याख्याने–क) अवतरणम् । ख) चतुर्थपक्षस्य-प्रथमदूषणतया 'यदि....स्यात्' इत्यस्य अर्थः । ५) चतुर्थपक्षस्य-द्वितीयदूषणतया 'आगमविरोधश्च'इत्यस्य-आगमप्रदर्शनसहितः अर्थः ।

आ) (२) उक्ततत्त्वविभागानङ्गीकरणे-सम्भावितपञ्चमकारणदूषणपरतया 'यद्यपि....स्यात्'इत्यस्य व्याख्याने– १) तत्पञ्चमकारणविवरणपरतया 'यद्यपि....वक्तुम्'इत्यस्य– क) अवतरणम् । ख) अर्थः ग) भावश्च । २) तत्कारणपरिहारकतया 'तथापि....न्याय्यः'इत्यस्य– क) अवतरणम् । ख) अर्थश्च । ३) उक्तपरिहारोपपादनार्थम् । स्वोक्त-तत्त्वविभागस्य विशिष्टप्रकारेण-सार्थक्यपरतया 'परतन्त्र....स्यात्'इत्यस्य व्याख्याने– क) अवतरणम् ख) 'परतन्त्र....भवति'इत्यस्य अर्थः, भावश्च । ग) सार्थक्येन-उक्तविभागगत-विशिष्टप्रकारकत्वस्य-दुर्ज्ञेयत्व-निरासकतया 'तथाच....वक्ष्यति'इत्यस्य– १. अवतरणम्, २. अर्थश्च । घ) उक्तविभागमकृत्वा आचार्योक्तस्यापि

पक्षे तदभावावगतिप्रमारूपबाधाभावात् 'अस्त्येव तत्त्वम्'इत्यस्य आद्यस्य प्रमितत्त्वावश्यंभावात् 'नास्त्येव तत्त्वम्'इत्युक्ते व्याघातो भवति; इत्यनुसन्धेयम्।

२) द्वितीयं पक्षमपाकरोति यदि वेति ।

तत्त्वम्, एकमेव वा भवेत्– भेदरहितमेव वा यदि स्यात्, नर्हि, घटपटादितत्त्वभेदप्रतीतिविरोधः स्यात्; इत्यर्थः ।

'भ्रान्तिविरोधः अकिञ्चित्करः'इत्याशङ्क्य आह तद्भ्रान्तितायाञ्चेति । तस्य– तत्त्वभेदोपलम्भस्य, भ्रान्तितायाम् च = भ्रान्तित्वाङ्गीकारे तु, बाधकम्= तद्विषयविरोधिविषयकप्रबलप्रमाणम् वाच्यम्; इत्यर्थः ॥

ननु 'विमतो भेदः मिथ्या भेदत्वात् चन्द्रभेदवत्'इत्याद्यनुमानम्;

'नेह नानास्ति किञ्चन',

'विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥'[1]

इत्याद्यागमवाक्यं च अस्ति बाधकम्; इत्यत आह तच्चेति । भेदोपलम्भबाधकत्वेन परामिमतम् अनुमानादिकम् अपि, अन्यत्र= ग्रन्थान्तरे, निराकृतम्; इत्यर्थः । धर्मिग्राहकत्वेन पक्ष-साध्य-हेतु-व्याप्ति-दृष्टान्तादि-भेदग्राहकत्वेन च उपजीव्यभेदप्रत्यक्षादिप्रमाणबाधितत्वात्, अनुमानम् अप्रमाणम्; एवम् पदपदार्थयोः, वाक्यवाक्यार्थयोः, पदानां च भेदप्रतीतिमन्तरेण वाक्यस्वरूपज्ञानानुदयात् पदादिभेदग्राहकप्रत्यक्षस्य उपजीव्यतया प्राबल्यात् लौकिकार्थे आगमापेक्षया प्रत्यक्षस्य प्रबलत्वात् भेदप्रत्यक्षादि प्रमाणबाधितत्वात्, आगमः प्रतीते अर्थे प्रमाणं न भवति; इत्यनेन प्रकारेण अन्यत्र निरस्तं वेदितव्यम् ।

१. तत्त्वोद्योतस्य वि. टि. पृ. १२४ इत्यत्र उदाहृताः।

३) तृतीयपक्षं निराकरोति **यदि वेति** ।

सर्वम्, तत्त्वम्, स्वतन्त्रम् एव वा यदि स्यात्; तदा= तर्हि, तत्त्वानाम्, पारतन्त्र्य-उत्पत्ति-विनाश-दारिद्र्य-आदि-प्रतीतिविरोधः स्यात्; इत्यर्थः ।

**नित्यसुखादीति** । नित्यम्= सर्वदा, सुखस्य, 'आदि'पदोक्तस्य दुःखाद्यभावस्य, प्रसङ्गः= प्राप्तिः, स्यात्; इत्यर्थः ।

४) चतुर्थं पक्षम् अपाकरोति **यदीति** ।

सर्वम् तत्त्वम्, परतन्त्रम्, एव, वा, यदि, भवेत्= स्यात्; तदा = तर्हि, अनवस्थितेः= 'इदम् एतदधीनम्, एतत् तदधीनम्' इति-अप्रामाणिक-निरवधिकपरम्परायाः; असम्भवाच्च= परतन्त्रत्वाविशेषेण एकस्यापि नियामकत्वासम्भवात् च; कस्यापि, तत्त्वस्य, सत्ता= स्थितिः, 'आदि'-पदोक्तम् प्रवृत्त्यादिकञ्च, न, स्यात्; इत्यर्थः ।

**आगमविरोधश्चेति** ।—

[४]'स्वतन्त्रमस्वतन्त्रञ्च प्रमेयं द्विविधं मतम् ॥',

[५]'ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥',

[६]'यः पृथिव्यां तिष्ठन्नन्तरा यमयति ।'

इत्यागमविरोधश्च स्यात्; इत्यर्थः ।

---

४. तत्त्वविवेके प्रथमश्लोकः ।

५. विष्णुसहस्रनामस्तोत्रे १३५ श्लोकः ।

६. बृ. उप. ४–५–१.

५) प्रकारान्तरेण उक्तविभागानुपपत्तिम् आशङ्कते यद्यपीति ।

'भावश्च अभावश्च'इतिद्वन्द्वान्ते श्रूयमाणः 'तन्'प्रत्ययः प्रत्येकम् अभिसम्बध्यते; एवम् 'चेतनाचेतनतया'इत्यादौ अवगन्तव्यम् । भावत्वाभावत्वाभ्यां वा, चेतनत्वाचेतनत्वाभ्याम्(वा,) नित्यत्वानित्यत्वाभ्यां वा, तत्त्वसामान्यस्य, द्वैविध्यम्, यद्यपि, वक्तुम्, शक्यते; इत्यर्थः । प्रकारान्तरेणापि तत्त्वविभागकथनसम्भवात् स्वतन्त्रत्व.स्व.तन्त्रत्वाभ्याम् एव तत्त्वस्य विभागकरणे नियामकं नास्ति; इति भावः ॥,

परिहरति तथापीति । 'भावाभावतया'इत्यादिना-उक्तप्रकारेण तत्त्वद्वैविध्यस्य वक्तुं शक्यत्वेऽपि; अस्य भावाभावतया चेतनाचेतनतया वा नित्यानित्यतया वा तत्त्वद्वैविध्यकथनस्य; वैयर्थ्यात्= 'विगतः अर्थः= प्रयोजनम् यस्य तत् तथा, तस्य भावो वैयर्थ्यम्, तस्मात्'- प्रयोजनरहितत्वात्; अयम् एव = भगवत्पादोक्त एव, विभागः- तत्त्वसामान्यविभागः, न्याय्यः= युक्तः; इत्यर्थः ।

ननु तर्हि पराकृत-तत्त्वविभागवत् स्वतन्त्रत्व-अस्वतन्त्रत्वाभ्याम् अपि विभागो न वक्तव्यः, वैयर्थ्यात्; इत्याशङ्क्य आह परतन्त्रप्रमेयमिति ।

'हि'शब्दो 'यस्मात्'इत्यर्थे; 'तस्मात्'इति शेषः । हि= यस्मात्, परतन्त्रतत्त्वम्, स्वतन्त्रतत्त्वाधीनतया, विदितम्= निश्चितम्, निःश्रेयसाय= मोक्षाय, भवति; तस्मात्- अयमेव विभागो न्याय्यः; इति भावः । स्वतन्त्रास्वतन्त्रभेदात् तत्त्वविभागकथनस्य मोक्षोपयोगिज्ञानसाधनत्वेन सफलत्वात्, तथैव तत्त्वविभागो वक्तव्यः; इति भावः ।,

ननु समस्तस्यापि परतन्त्रतत्त्वस्य सृष्टिसंहारज्ञानाज्ञानबन्धमोक्षाणाम् अभावात् सृष्ट्यादौ स्वतन्त्रतत्त्वायत्ततया परतन्त्रतत्त्वं दुर्ज्ञेयम्; इत्यत आह तथाचेति । यथा च स्वतन्त्रतत्त्वायत्ततया परतन्त्रतत्त्वं सुज्ञेयम्

तथा च =. तेन प्रकारेणापि, अस्य प्रकरणस्य अन्ते—

'सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ।

बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ।

विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः ॥'

इत्यवसानवाक्ये, वक्ष्यति= आचार्यो वक्ष्यति; इत्यर्थः ।,

ननु भगवत्पादैरपि भावाभावतया चेतनाचेतनतया नित्यानित्यतया च अस्वतन्त्रतत्त्वविभागकथनात् तथा-विभक्तपरतन्त्रतत्त्वज्ञानं मोक्षोपयोगि इत्यवश्यम् अभ्युपेयम्, अन्यथा तत्कथनवैयर्थ्यात्; तद्वत् 'भावाभावतया'इत्यादिना उक्तप्रकारेण तत्त्वसामान्यविभागकथनस्यापि सफलत्वसम्भवेन तथैव तत्त्वसामान्यविभागः कथ्यताम्; इत्याशङ्क्याह **अन्यथेति** । स्वतन्त्रत्वास्वतन्त्रत्वभेदेन तत्त्वसामान्यविभागमकृत्वैव भावाभावतया वा चेतनाचेतनतया वा तत्त्वसामान्यविभागकथने, गङ्गावालुकानाम्= गङ्गासिकतानाम् एतावन्ति-इतिपरिगणनवत्, इदम्— परोक्तम्, तत्त्वसङ्ख्यानम्, अपार्थकम्= व्यर्थम्, स्यात्; इत्यर्थः । मोक्षसाधनं यत् परतन्त्रभूत—जगदुदयादिनिमित्तत्वेन-स्वतन्त्र(तत्त्व)ज्ञानम् तत् भावाभावादिभेदेन-विभक्तपरतन्त्रतत्त्वज्ञानसापेक्षम् इति तथा परतन्त्र(त)त्त्वविभागकथनस्य सार्थकत्वेऽपि, भावाभावादिभेदेन तत्र सामान्यविभागकथनस्य गङ्गावालुकपरिगणनवत् मोक्षोपयोगिज्ञानसाधनत्वाभावात् विफलत्वमेव; इति भावः ॥

'तथाहि'इत्यादिना उक्तं तत्त्वसामान्यविभागसमर्थनम् उपसंहरति **अत इति** । तत्त्वस्य तत्त्वभेदस्य च स्वतन्त्रास्वतन्त्रयोश्च समर्थितत्वात्, भावाभावादिभेदात्-तत्त्वसामान्यविभागकथनस्य वैयर्थ्याच्च; इत्यर्थः ।

'इति'शब्दः 'स्वतन्त्रमस्वतन्त्रञ्च'इत्यनेन-उक्तविभाग-समर्थन-परिसमाप्तौ वर्तते ॥

---

७. निमित्तेन । ८. भादेन।

[ ८ मु. विषयः— उक्ततत्त्वसामान्यविभागोपपादने— १) तत्त्वसामान्याभावकथयितॄणां विरोधार्थं प्रमाणितस्य प्रत्यक्षादेः भ्रान्तित्वमभ्युपेत्यापि तत्त्वसिद्धिपरतया 'न च निरधिष्ठाना भ्रान्तिरस्ति' इत्यस्य व्याख्याने—
क) अवतरणम् । ख) अनुमान-आगम-जन्य-भ्रमस्यापि क्वचित् साक्षात् क्वचित् परम्परया तत्त्वरूपाधिष्ठान-विषयकत्वम् । २) तत्त्वैक्यकथयितॄणां विरोधार्थं प्रमाणितस्य भेदोपलम्भस्य भ्रान्तित्वनिरसने 'तद्भ्रान्तितायाञ्च' इत्यतःपरं शेषपूरणम् ॥ ]

प्रत्यक्षप्रतीतेः भ्रान्तित्वमङ्गीकृत्यापि तत्त्वं साधयति **न च निरधिष्ठानेति** ।

नन्वत्र "भ्रान्तेः आरोप्यमाणस्य यत् सत्यम् अधिष्ठानम् तद्विषयकत्वनियमो वक्तव्यः; तस्यैव तत्त्वसाधकत्वात् । न चायं नियमो युज्यते; प्रत्यक्षप्रतीतेः कथंचित्तन्नियमेऽपि आनुमानिक-आगमिक-भ्रान्तेः तन्नियमाभावात् ॥, तथाहि— 'शशविषाणम् तीक्ष्णम् विषाणत्वात्'इत्यनुमानाभासोत्थ-शशविषाणाधिकरणक-तीक्ष्णत्वप्रतीतिर्हि आनुमानिकभ्रान्तिः; 'शशविषाणे तैक्ष्ण्यम्'इतिशब्दाच्च एतादृशप्रतीतिः आगमिकभ्रान्तिः ।, न च उभयत्र आरोप्यमाणतैक्ष्ण्यधिकरणं शशविषाणं सत्यम् , येन अयं नियमः उपपद्यते"**इति चेत्; न,** साक्षात् परम्परया वा सत्याधिष्ठानविषयकत्वस्य तदर्थत्वात् । उक्तोभयत्र आरोप्यमाणतैक्ष्ण्याधिकरणस्य शशविषाणस्य सत्यत्वाभावेऽपि शशविषाणभ्रमाधिकरणस्य सत्यत्वेन परम्परया, 'वह्निः अनुष्णः' इत्यादिभ्रमानुमित्यादेः साक्षात्-सत्याधिष्ठानविषयकत्वस्य विद्यमानत्वेन; भ्रममात्रस्य सत्याधिष्ठानविषयकत्वोपपत्तेः ॥ प्रत्यक्षप्रतीतेः भ्रमत्वमात्रावलम्बेन तत्त्वसाधनाय प्रवृत्तत्वेन वा अदोषात् ॥

**तद्भ्रान्तितायामिति** । 'नियामकम्'इति शेषः ॥

[ ८ का. विषयः– उक्ततत्त्वविभागोपपादने– तत्परीक्षायाम्– 'तथाहि....तत्त्वमिति' इत्यस्य व्याख्याने–

अ) परीक्षाप्रकारप्रदर्शकतया अवतरणम् ।

आ) उक्तविभागानङ्गीकारे– कारणचतुष्टयं विकल्प्य; तद्दूषकतया 'यदि....आगमविरोधश्च' इत्यस्य व्याख्याने–

१) प्रथमकारणदूषकतया– 'यदि....व्याघातश्च इत्यस्य व्याख्याने– क) अवतरणम् । ख) प्रथमकारणस्य प्रथमदूषकतया 'यदि....बाधः' इत्यस्य व्याख्याने– १. 'प्रत्यक्षादिविरोधः' इत्यस्य भावः; २. 'भ्रान्ति....बाधकाभावात्' इत्यस्य व्याख्याने– क. इष्टापत्तित्वशङ्कात्वेन 'भ्रान्तिः सा' इत्यस्य अवतरणम्, ख तच्छङ्कानिरासकत्वेन 'बाधकाभावात्' इत्यस्य भावः, तात्पर्यञ्च; ३. विरोधार्थ-प्रमाणितप्रत्यक्षादौ-भ्रान्तित्वबाधकयोः अङ्गीकारे बाधकतया 'न च....बाधः' इत्यस्य व्याख्याने– क. अवतरणम्, ख. अर्थः, ग. भावः, घ. भ्रान्तिबाधयोः अधिष्ठान अवधिसापेक्षत्वस्य असार्वत्रिकत्वम्, ङ. हार्दञ्च । ग) प्रथमकारणस्य द्वितीयदूषकतया– शङ्काभिप्रायपूर्वकं तन्निरासकतया– 'नास्त्येव....व्याघातश्च' इत्यस्य व्याख्याने– १. अवतरणम्, अर्थः, भावश्च; २. सर्वासत्त्ववादिनाम् उपेक्षणीयत्वञ्च ।

२) द्वितीयकारणदूषकतया– 'यदि च....निरस्तम्' इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'द्वितीयकारणदूषकतया-प्रमाणितस्य भेदोपलम्भस्य भ्रान्तित्वम्' इतिशङ्कानिवारकतया 'तद्भ्रान्ति...निरस्तम्' इत्यस्य- अवतरणम्, अर्थश्च ।

३) तृतीयकारणदूषकतया 'यदि वा सर्वमेव......प्रसङ्गश्च' इत्यस्य व्याख्याने–क) अवतरणम् । ख) अर्थः । ग) भावः । घ) तृतीयकारणदूषकतया-उपात्तस्य द्वितीयदूषणरूपस्य नित्यसुखादिप्रसङ्गस्य द्वेधा उपपादने– १. अचेतनेऽपि–सुखादिप्रसङ्गस्य अनुपपत्त्यभावः; २. 'सुखादि' पदेन नित्यव्यक्तसुखस्वरूपादेः विवक्षणम् ।

४) चतुर्थकारणदूषकतया– 'यदि वा परतन्त्रमेव......विरोधश्च इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'अनवस्थितेः....सत्तादिकं स्यात्' इत्यस्य– १. अर्थः, २. भावश्च ग) विरोधे आगमप्रदर्शनञ्च ।

इ) उक्तविभागानङ्गीकारे-सम्भावित-पञ्चमकारणदूषकतया 'यद्यपि.... अपार्थकं स्यात्'इत्यस्य व्याख्याने–१) तत्कारणानुवादपूर्वकं तन्निरासकतया 'यद्यपि....न्याय्यः'इत्यस्य– क. अवतरणम्, ख. अर्थश्च। २) तत्कारण-निरासनस्य-उपपादकतया 'परतन्त्र....स्यात्'इत्यस्य व्याख्याने– क) 'स्वोक्त-तत्त्वविभागस्य विशिष्टप्रकारेण ज्ञाते सति मोक्षोपयोगित्वम्'इत्यर्थपरतया– 'परतन्त्र....भवति'इत्यस्य– अवतरणम्, अर्थः, भावश्च। ख) उक्तमोक्षोप-योगित्वे- प्रकृतप्रकरणसंवादोक्तितया 'तथाच....वक्ष्यति' इत्यस्य अव-तरणम्, अर्थः, भावश्च। ग) उक्तविभागमकृत्वा अन्यस्य सर्वविधस्यापि विभागस्य वैयर्थ्यपरतया 'अन्यथा....स्यात्'इत्यस्य अवतरणम्, भावश्च।

ई) उक्त विभागोपपादनोपसंहारकतया 'अतः....इति' इत्यस्य व्याख्याने– १) अवतरणम्। २) अर्थः। ३) 'इति'पदोत्तरं शेषपूरणञ्च॥]

तत्प्रकारं दर्शयति **तथाहीति**॥

उक्तार्थस्य अनुपपन्नत्वं किम्–

१) तत्त्वस्यैव अभावात्?

२) भावेऽपि वा तस्य एकत्वात्?

३) अनेकत्वेऽपि वा सर्वस्वातन्त्र्यात्?

४) किंवा सर्वास्वातन्त्र्यात्?

१) तत्र आद्यं दूषयति **यदीति**।

प्रत्यक्षादिविरोधः– घटादिविषयकप्रत्यक्षादिप्रतीतेः प्रमात्वानुपपत्तिः, विषयाभावात्; इति भावः।;

अत्र इष्टापत्तिम् आशङ्कते **भ्रान्तिरिति**॥ प्रमात्वबाधकस्य विषया-सत्त्वप्रत्ययस्य अभावात्; इति भावः। तथाच भ्रान्तित्वे साधकाभावः; इति भावः।,

---

१. तत्त्वैवाभावात् २. अनेकेऽपि

'ननु मा भूत् असदादीनां बाधकप्रत्ययः, बुद्धादीनां तु अस्त्येव; स एव भ्रान्तित्वसाधको भविष्यति'इत्याशङ्क्य भ्रान्तिबाधकयोः बाधकञ्च आह **न चेति** ॥ यत्र आरोपः तत् अधिष्ठानम्, यत्र बाधः सः अवधिः; तद्-विनाभूतौ भ्रान्तिबाधौ ॥ 'इत्थम्'इत्येव भ्रान्तेः 'नेत्थम्'इत्येव बाधस्य च अदर्शनात्, किन्तु 'इदमित्थम्' 'नेदमित्थम्' इत्येव; इति अधिष्ठान-अवधि-भूत-तत्त्वाभावे भ्रान्तिबाधानुपपत्तिः; इति भावः ॥ न चैवम् 'नरशृङ्गम् अस्ति', '...नास्ति'इत्यादिभ्रमबाधानुपपत्तिः; अपरोक्षभ्रमस्थले एव तथा अङ्गीकारात् ॥ **एवञ्च** विश्वविषयकभ्रान्तिबाधाङ्गीकर्त्रा अधिष्ठानावधिभूततत्त्वम् अङ्गीकार्यम्; इति हृदयम् ।

''ननु 'नास्त्येव तत्त्वम्'इति निरवधिक एव बाधः बुद्धाद्यैः[३] अङ्गी-क्रियते, अन्यथा सर्वासत्त्वप्रतिपादनानुपपत्तेः; ततश्च घटादिप्रत्ययस्य निरधिष्ठानस्यैव भ्रमत्वमपि;'' इत्याशङ्क्य आह **नास्त्येवेति** । आद्ये तादृश-बाधविषयस्य तत्त्वाभावस्य, द्वितीये तत्प्रतियोगिनो घटादेरेव; तत्त्वत्व-सिद्ध्यापत्त्या तत्त्वसामान्यनिषेधे व्याघातः; इत्यर्थः । भावाभावयोः एकस्य अप्रमितत्वे अन्यस्य प्रमितत्वं न्यायप्राप्तम्; इति भावः ।,

न च[४] 'सर्वासत्त्ववादिभिः तादृशन्यायानभ्युपगमात् न दोषः'इति वाच्यम्; तत्त्वसामान्यनिषेधे प्रमाणोक्तौ तद्विषयतत्त्वसिद्धेः आवश्यकत्वात्, तदनुक्तौ वादित्वाभावेन जडवदुपेक्ष्यत्वात् । सर्वासत्त्वादिप्रतिपादनं तु आग्रहादिमूलकमेव; इति ध्येयम् ।

२) द्वितीयं दूषयति **यदि चेति** ।

ननु घटपटादिभेदप्रतीतिः भ्रान्तिरेव, अधिष्ठानतत्त्वाभ्युपगमेन उक्त-दोषाभावात्; इत्यत आह **तद्भ्रान्तितायामिति** । भेदप्रतीतेः भ्रान्तितायाम्

३. 'बुधादेः'इत्येकत्र । 'बुद्धादेः'इति चैकत्र । ४. न चासर्वा

अङ्गीक्रियमाणायां तत्प्रमात्वे बाधकं वाच्यम्, अन्यथा अधिष्ठानज्ञानस्यापि भ्रान्तित्वापात्; तच्च 'भेदो मिथ्या भेदत्वात् चन्द्रभेदवत्'इत्याद्यनुमानरूपं उपजीव्यप्रत्यक्षादिविरोधात् अप्रमाणमेव इति अन्यत्र तत्त्वोद्योतादौ निरस्तम्; इत्यर्थः ।

३) तृतीयं दूषयति **यदिवेति** ।

'पारतन्त्र्यादि'इति'आदि'ना दुःखादे, 'नित्यसुखादि'इति'आदि'ना (च) तदभावादेः परिग्रहः । स्वतन्त्रस्य इष्टानिष्टप्राप्तिपरिहारावश्यकत्वात् इति भावः ।

न च 'कथम् अचेतनस्य घटादेः सुखादिप्रसङ्गः ?' इति वाच्यम्; स्वातन्त्र्यादेव चैतन्यस्यापि प्राप्तेः, सुखादेरपि स्वातन्त्र्येण कारणानपेक्षत्वाच्च ।,

न चैवम् 'सुखादेः अन्येन अनापाद्यत्वात् कथं तत्प्रसङ्गः ?'इति वाच्यम्, ईश्वरवत् नित्यव्यक्तसुखस्वरूपादेः आपाद्यत्वात् ।

४) चतुर्थं दूषयति **यदिवेति** ।

**अनवस्थितेरिति** । 'अस्य यदधीनत्वम् तस्य अन्याधीनत्वम्' इत्यनवस्थितेः, विनिगमकाभावेन मिथो नियामकत्वासम्भवाच्च । नियामकासिध्द्या न कस्यापि सत्ताप्रवृत्त्यादिकं स्यात् इत्यर्थः । न च सिद्धान्तेऽपि एष दोषः, सर्वनियामक-ईश्वरशक्तेरेव नियामकत्वात्; इति भावः ।

**आगमविरोधश्चेति** । 'सर्वस्याधिपतिः सर्वस्येशानः' इत्याद्यागमविरोधः ।

---

५. अन्याधिष्ठान
६. आपाद्यत्वात्
७. इत्यनवस्थिते
८. बृ.उप.६–४–२२

५) स्यादेतत्; प्रकारान्तरेणापि तत्त्वविभागसम्भवात् स्वातन्त्र्या-स्वातन्त्र्याभ्याम् एव तद्विभागे किं नियामकम्? इत्याशङ्क्य आह **यद्यपीति**।,

अस्य– भावाभावादिना विभागस्य, वैयर्थ्यात्= मोक्षानुपयोगित्वात्।

स्वातन्त्र्यादिना विभाग एव कथं मोक्षोपयोगी? इत्यत आह **परतन्त्रेति**।;

निःश्रेयसाय= मोक्षाय। विभागान्तरे च प्रपञ्चस्य पारतन्त्र्या-लाभात्; इति भावः।,

एतच्च आचार्यैरेव सूचितम् इत्याह **तथाचेति**। स्वतन्त्रास्वतन्त्रविवेकस्य मोक्षोपयोगित्वाभिप्रायेणैव; इत्यर्थः। अन्यथा 'सृष्टिस्थितिश्च' इत्यादिना सर्वस्य विष्णवधीनत्वोक्तिवैयर्थ्यात्,

'य एतत्परतन्त्रन्तु सर्वमेव हरेः सदा।
वशमित्येव जानाति संसारान्मुच्यते हि सः॥'

इति तत्त्वविवेकान्ते स्पष्टमुक्तत्वेन तदनतिभिन्नार्थके अत्र तदभिप्रायस्य आवश्यकत्वाच्च; इति भावः।,

ननु स्वतन्त्रास्वतन्त्रविवेकवत् भावाभावादिविवेकोऽपि मोक्षोपयोगी, अन्यथा 'द्विधेतरत्' इत्यादेः वैयर्थ्यापत्तेः; इत्यत आह **अन्यथेति**। स्वातन्त्र्यादिना अविभज्य भावत्वादिनैव विभागे अपार्थकं स्यात्। स्वातन्त्र्या-दिविवेकस्यैव-मोक्षमुख्योपयोगितायाः तत्त्वविवेकादिसिद्धतया तदभावे तदङ्गभूतभावत्वादिविवेकस्य वैयर्थ्यात्; इति भावः॥

'तथाहि'इत्यादिना उक्तम् उपसंहरति **अत इति**। उक्तरीत्या तत्त्व-द्वैविध्यस्यैव प्रामाणिकत्वात् प्रयोजनवत्त्वाच्च; इत्यर्थः॥ 'इति'इत्यनन्तरम् 'विभागो युक्तः' इति शेषः॥

---

१. विभागोपार्थकं

[ ८ भ. विषयः– उक्तविभागोपपादने– तत्परीक्षायाम्—

अ) उक्तविभागानङ्गीकर्तृणां-प्रमाणविरोधोपपादकतया 'तथाहि...... तत्त्वमिति'इत्यस्य अवतरणम् ।

आ) उक्तद्वैविध्यानङ्गीकरणकारणनिराकरणे–

१) प्रथमकारणनिराकरणार्थे– क) प्रथमदूषणत्वेन प्रमाणितस्य प्रत्यक्षादि-विरोधस्य भ्रान्तित्वं बाधसत्त्वञ्च अभ्युपेत्यापि तत्त्वसामान्याभावासिद्धिपर-तया 'न च निषिष्ठाना....बाधः'इत्यस्य– अवतरणम्, अर्थः, भावश्च । ख) द्वितीयदूषणत्वेन 'नास्त्येव....व्याघातश्च'इत्यस्य अर्थः ।

२) चतुर्थकारणनिराकरणार्थम् उक्तस्य 'आगमविरोधश्च'इत्यस्य सोपपत्तिकं तृतीयचतुर्थ-उभयकारणनिराकरणपरत्वम्; विरोधे आगमप्रदर्शनञ्च ।

३) पञ्चमकारणनिराकरणे– क) 'स्वोक्तविभागस्य विशिष्टप्रकारेण-ज्ञाने मोक्ष-साधनत्वम्'इतिविषयके प्रकृतप्रकरणवाक्यसंवादप्रदर्शने– १. तद्वाक्यप्रदर्शनम् २. तत्त्वविवेकस्य तत्त्वसङ्ख्यानान्तर्गतत्वोपपादनम्, अत्र तत्त्वविवेकटीका-वाक्यसंवादप्रदर्शनञ्च । ख) विपक्षे बाधकत्वेन 'अन्यथा....स्यात्'इत्यस्य व्याख्याने– 'तत्त्वसङ्ख्यानम्'इत्यस्य अर्थः ॥ ]

'प्रामाणिकैरङ्गीक्रियते'इत्युक्त्या एवमनङ्गीकारिणां प्रमाणविरोधः सूचितः । तमुपपादयति **तथाहीति** ।

अस्तु वा बाधकसद्भावः, तद्बलात् प्रत्यक्षादिप्रतीतेः भ्रान्तित्वमपि; तथापि 'नास्त्येव तत्त्वम्'इति वक्तुं न शक्यते, भ्रान्तौ यत् अधिष्ठानत्वेन प्रतीयते बाधे च यत् अवधित्वेन अवभासते तस्यैव तत्त्वताप्राप्तेः; इति-भावेन आह **न च निरधिष्ठानेत्यादि** । अवधिः= आश्रयः । 'इदम् इत्थम्'इति हि भ्रमः, 'इदम् इत्थं न भवति'इति च बाधः; तत्र उभयत्रापि यत् 'इदम्'इति प्रतीयते तदेव 'अधिष्ठान'आदिपदवाच्यम् तत्त्वम् अङ्गी-कार्यम्; इति भावः ।,

---

१. अयं विषयः एकस्मिन्ग्रन्थे नास्तिः । २. इतो वाक्यद्वयम् एकत्र नास्ति ।

**नास्त्येव तत्त्वमिति ।** प्रमितत्वे तस्यार्थस्यैव तत्त्वताप्राप्त्या 'नास्त्येव तत्त्वम्'इत्युक्ते व्याघातः । अप्रमितत्वे अभावस्य अप्रामाणिकत्वे प्रतियोगिनः सत्त्वस्य नियतत्वात् तत्त्वसद्भावस्यैव प्रमितत्वप्राप्त्या 'नास्त्येव तत्त्वम्'इत्युक्ते व्याघातः; इत्यर्थः ।

**आगमविरोधश्चेति ।** अयञ्च दोषः सर्वस्वातन्त्र्य-पारतन्त्र्य-उभय-पक्षेऽपि उक्तो ज्ञातव्यः, सुसम्भवत्वात्; अत एव पक्षद्वयदूषणान्ते प्रोक्तः । ते आगमाः–

'[३]आत्मा हि परमः स्वतन्त्रः सर्ववित्सर्वशक्तिः परमसुखः परमः ।
जीवस्तु तद्वशोऽल्पज्ञोऽल्पशक्तिरार्तोऽल्पकः ॥
स्वतन्त्रो यद्वशाः सर्वे स विष्णुः परमो मतः ।'

इत्याद्याः अन्यत्र उदाहृताः द्रष्टव्याः ।

**तथाच प्रकरणान्त इति ।**–

'[४]एतत्परतन्त्रन्तु सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥'

इत्यत्र इत्यर्थः ।

ननु एतद्वाक्यं तत्त्वविवेकप्रकरणान्तर्गतम्; तत्कथम् अस्य एतत्प्रकरणान्तर्गतत्वम्? सत्यम्; तथापि 'तत्त्वसङ्ख्यानोक्तार्थे साक्षित्वेन भगवत्प्रणीततत्त्वविवेकगतवाक्यान्येव आचार्यैः उदाहृतानि इति न तस्य पृथक्प्रकरणत्वम्'इत्यभिप्रेत्य 'प्रकरणान्ते'इत्युक्तम्; इत्यदोषः । तथाचोक्तं तत्त्वविवेकटीकायाम्– 'यद्वा प्रकरणं नाम एकप्रमेयप्रतिपादक-अनेकवाक्यान्येव । प्रकृते च तत्त्वपरिगणनरूप-एकप्रमेयस्य उभाभ्यामपि प्रकरणाभ्यां प्रतिपाद्यमानत्वात् एकप्रकरणत्वं प्राप्तम्'इति उदाहृतवाक्यस्य प्रकरणान्तर्गतत्वम् उपपन्नमेव इति ।,

**तत्त्वसङ्ख्यानमिति ।** तत्त्वपरिगणनम् इत्यर्थः ॥

---

३. भाल्लवेयश्रुतिः १–१८९ ४. तत्त्वविवेके अन्तिमश्लोकः ।

[ ९ टी. विषयः— स्वतन्त्रतत्त्वनिरूपणे—
अ) उपोद्घातत्वेन— १) स्वतन्त्रतत्त्वस्य—प्रथमोद्देशे निमित्तम् । २) मूले-लक्षणानुक्तेः बीजम् ॥ आ) 'स्वतन्त्रो भगवान् विष्णुः'इतितत्त्वसङ्ख्यानस्य-द्वितीयवाक्यस्य त्रेधा व्याख्याने— १) प्रथमव्याख्यानत्वेन— क) स्वतन्त्रतत्त्वस्य -प्रथमनिर्देशे निमित्तकथनपूर्वकम् अवतरणम् । ख) 'भगवान्'इतिपदस्य कृत्यम् । ग) अस्वतन्त्रतत्त्वनिर्देशक-शेष-पूरणम् । २) " 'द्विविधम्'इति-पदसूचितस्य अवान्तरभेदस्य स्वतन्त्रतत्त्वविषये अपवादः"इत्यर्थपरतया अव-तरणम् । ३) 'साङ्ख्याद्युक्त-प्रधानादिरेव स्वतन्त्रतत्त्वम्'इत्यर्थनिरासार्थकत्वेन अवतरणम् ॥ ]

स्वतन्त्रतत्त्वस्य प्राधान्यात् तदेवादौ उद्दिष्टम् ।
उद्देशेनैव लक्षणं लब्धम् इति ॥

१) [1]अत एवादौ तन्निर्दिशति 'स्वतन्त्रः....'इति ।—

[ २ त. विषयः—स्वतन्त्रतत्त्वस्य सोपपत्तिकं निदर्शनम् । ]

## स्वतन्त्रो भगवान् विष्णुः ।३।

अत्र 'भगवान्'इति विष्णोः स्वातन्त्र्योपपादकम् ॥ 'अन्यत अस्वतन्त्रम्'इति शेषः ।

२) अथवा 'द्वे तत्त्वे'इत्युक्ते स्वतन्त्रमिव परतन्त्रम् एका व्यक्तिरेव प्रसज्ज्येत, [2]तथाच प्रमाणविरोधो वक्ष्यमाणविभागविरोधश्च; अतः 'द्विविधम्'इत्युक्तम्; ततश्च स्वतन्त्रमपि अनेकं स्यात्; —इत्यतः इदमुक्तम् ।

३) अथवा स्वतन्त्रास्वतन्त्रभेदेन-तत्त्वद्वैविध्यम् अङ्गीकुर्वाणा अपि साङ्ख्यादयः प्रधानादिकम् स्वतन्त्रतत्त्वम् आतिष्ठन्ते; तन्निरासाय इदम् उदितम्; इति ॥

---

१. के.,का.,भ.टिप्पणीषु 'तत एव'इति । २. वि.टि. 'ततश्च'इति पाठः ।

[ ९ स. विषयः— स्वतन्त्रत्तत्वनिरूपकटीकाग्रन्थव्याख्याने—

अ) उपोद्घातग्रन्थव्याख्याने— शङ्कात्रयनिरासकतया 'स्वतन्त्रतत्त्वस्य... लब्धमिति'इत्यस्य अवतरणम् ।

आ) तत्त्वसङ्ख्यानस्थद्वितीयवाक्यस्य त्रिविधटीकायाः व्याख्याने—
१) तत्त्वसङ्ख्यान-तत्त्वविवेक-उभयग्रन्थस्थ'भगवान्'शब्दस्य कारणान्तरेण अर्थभेदः ।
२) 'अथवा द्वे....इदमुक्तम्' इत्यस्य व्याख्याने— क) सकारणं पक्षान्तरत्वेन अवतरम् । ख) एकव्यक्तिप्रसङ्गस्य भावः । ग) वक्ष्यमाणविभागप्रदर्शनम्, घ) द्वैविध्योक्तेर्भावः । ङ) 'इदमुक्तम्'इत्यस्य अर्थः भावश्च ।
३) 'अथवा स्वतन्त्रा ... उदितमिति' इत्यस्य व्याख्याने— क) सकारणं पक्षान्तरत्वेन अवतरणम् । ख) 'आदि'पदयोः अर्थौ । ग) साङ्ख्यमीमांसकोक्तिप्रदर्शनम् । घ) एतत्साङ्ख्यादिमतनिरसनस्थलप्रदर्शनम् । ङ) 'इदमुदितम्' इत्यस्य अर्थः ॥ ]

"ननु अस्वतन्त्रतत्त्वम् अनिर्दिश्य 'स्वतन्त्रो भगवान्'इति स्वतन्त्रतत्त्वनिर्देशः अनुपपन्नः, नियामकाभावात् ।, न च 'उद्देशानुसारेण निर्देशः'इति वाच्यम्, तस्यापि अनुपपत्तेः ॥, किञ्च लक्षणम् अनुक्त्वा निर्देशे न्यूनता च स्यात् "इत्यत आह **स्वतन्त्रतत्त्वस्येति** ॥

१) अत्र 'स्वतन्त्रो भगवान्विष्णुः'इतितत्त्वविवेके इव 'भगवत्'शब्दस्य पूजार्थत्वं प्रतीयते; अत आह **अत्रेति** ॥ इदमुक्तं भवति— तत्र पूजार्थत्वं 'भगवत्'शब्दस्य युक्तम्, 'निर्दोषाखिलसद्गुणः'इत्यस्य स्वातन्त्र्योपपादकस्य सत्त्वात्; अत्र तु स्वातन्त्र्योपपादकस्य अन्यस्य अभावात् 'भगवत्'शब्द एव तदुपपादकः; इति । यस्य तु द्वयमपि असिद्धम्, तं प्रति आगमो दर्शनीयः ।

२) पक्षान्तरमाह **अथवेति** ।

**एकाव्यक्तिरेवेति** । '[२]धाल्'प्रत्ययस्य अभावात्, इति भावः ॥ **वक्ष्यमाणेति** । 'भावाभावौ द्विधेतरत्'इतिवक्ष्यमाण-इत्यर्थः ॥ **द्विविधमित्युक्तमिति** । तथाच प्रकारार्थक'धाल्'प्रत्ययेन अनेकत्वं सूचितम्, इति भावः ॥ **इदमुक्तमिति** । 'स्वतन्त्रो भगवान्विष्णुः एक एव' इत्युक्तम् इत्यर्थः । अनेन च 'विष्णुः' इत्येकवचनेन अनेकत्वभ्रान्तिः व्युदस्ता, इति भावः ॥

३) ननु तर्हि 'स्वतन्त्रः'इत्यनेनैव चारितार्थ्यात् 'भगवान्विष्णुः' इत्येतत् व्यर्थम्, इति अस्वरसात् आह **अथवेति** ॥

'साङ्ख्यादयः'इत्यत्र 'आदि'शब्देन मीमांसकादिसङ्ग्रहः । 'प्रधानादि'इति'आदि'शब्देन कर्मादिसङ्ग्रहः ॥ **आतिष्ठन्ते इति** ।—

'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥'

[३]इति साङ्ख्योक्तेः,

---

१. अत्र एकस्मिन्ग्रन्थे 'अत्र दोषभयात् पक्षान्तरमाह'इति अक्षराणि लिखित्वा 'अत्र दोषभयात्'इत्यक्षराणां प्रमोषः (अपठनीयत्वाभिप्रायः रेषाभिः) प्रदर्शितः । तथापि अधः 'अत्र दोषभयादिति'इति प्रतीकं गृहीत्वा टिप्पणम् उपलभ्यते । —तदित्थम्—

**अत्र दोषभयादिति** ॥ ''स्वतन्त्रमस्वतन्त्रञ्चेति तत्त्वं द्विविधम् । 'स्वतन्त्रतत्त्वञ्च भगवान् विष्णुः'इति ज्ञापनार्थं मूलं प्रवृत्तम् ।''इत्यङ्गीकारे अस्वतन्त्र(त्व)ादिप्रकारावच्छिन्न-अनेकत्व-वाचि'धाल्'प्रत्ययो व्यर्थः, 'स्वतन्त्रमस्वतन्त्रञ्च द्वे तत्त्वे'इत्येतावता पूर्तेः; इति भावः ॥ —इति ।

२. प्रायः सर्व-तत्त्वसङ्ख्यानटिप्पणीषु 'धाल्'प्रत्ययः उक्तः, परं न स कौमुद्यामुपलब्धः ।

३. साङ्ख्यकारिका श्लो. ५७.

'ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे ।
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ॥
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः ।
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥'[4]

इतिमीमांसकोक्तेश्च; इति भावः ।,

तन्निरासायेति । निरासप्रकारश्च 'रचनाऽनुपपत्तेश्च नानुमानम्'[5] इत्यधिकरणे–

'स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः ।
कुत इच्छा चेतनस्य सेच्छं चेत् किमचेतनम् ॥'

इत्याद्यनुव्याख्यानादौ कृतो द्रष्टव्यः ॥ इदमुदितमिति । 'भगवान्विष्णुः' इति उदितम् इत्यर्थः ॥

[ ९ के. विषयः– स्वतन्त्रतत्त्वनिरूपकटीकाग्रन्थव्याख्याने–

अ) उपोद्घाते– १) 'प्राधान्यात्'इत्यस्य प्रयोजनकथनपूर्वकम् अवतरणम् । २) लक्षणानभिधानन्यूनतापरिहारकतया 'उद्देशेनैव लक्षणं लब्धमिति'इत्यस्य– क) अवतरणम् , ख) भावश्च ।

आ) मूलस्य-त्रिविधटीकायाः व्याख्याने–

१) 'तत एवादौ....शेषः'इत्यस्य व्याख्याने– क) 'तत एव तन्निर्दिशति'इतिपदानामर्थः, ख) "मूलस्थ'भगवान्'पदस्य पूज्यार्थत्वम्"इतिप्रतीतिनिरासार्थकतया 'अत्र....उपपादकम्'इत्यस्य– १. अवतरणम् ; २. 'तत्त्वविवेकस्थप्रसङ्गापेक्षया अस्य वैलक्षण्यम्'इत्यर्थपरतया भावः; अस्वतन्त्रतत्त्वानिर्देशप्रयुक्त-न्यूनताशङ्का-निवारकतया 'अन्यत्....शेषः'इत्यस्य अवतरणम् ।

---

४. तत्त्वोद्योतस्य वेदेशतीर्थीयटिप्पण्यां ११८ पृष्ठे मीमांसाशास्त्रीयोऽयं श्लोकः उपलभ्यते ।

५. ब्रह्मसूत्र १–२–१.

२) द्वितीयपक्षत्वेन 'अथवा....इदमुक्तम्'इत्यस्य व्याख्याने– क) प्रथमपक्षास्वारस्यपूर्वकम् अवतरणम् । ख) परतन्त्रव्यक्त्यैक्यप्रसक्तौ बाधकत्वेन 'तथा च....विरोधः'इत्यस्य व्याख्याने– १. अवतरणम्, २. प्रमाणविरोधप्रदर्शनम्, ३. 'वक्ष्यमाण'इतिपदस्यार्थः । ग) तद्बाधकनिवारकत्रैविध्योक्तेर्भावः । घ) 'ततश्च...इदमुक्तम्'इत्यस्य व्याख्याने– १. 'अनेकं स्यात्'इत्यस्य अर्थः, अभिप्रायश्च; २. 'इदमुक्तम्'इत्यत्र 'इदम्'पदस्यार्थः । ङ) 'द्विविधम्'इति प्रकारद्वित्वोक्तेः 'अपवादातिरिक्तस्थले प्रकार्यैवान्तरभेदसूचकमात्रत्वम्'इत्यभिप्रायः; तत्त्वविवेकस्यापि एवमेव व्याख्येयत्वञ्च ।
३) तृतीयपक्षव्याख्याने– क) प्रथम'आदि'पदसङ्ग्राह्यम् । ख) प्रधानादीनां स्वातन्त्र्यनिरासप्रकारस्थलप्रदर्शनम् ॥ ]

ननु स्वतन्त्रतत्त्वस्य प्रथमं शृङ्गिग्राहकतया प्रदर्शनम् अनुचितम्, तत्रापि निमित्ताभावात् । न तावत् भावत्वं तत्र निमित्तम्, घटादिसाधारण्यात्; नापि नित्यत्वम्, आकाशादिसाधारण्यात् । तत्कथमेतत् ? इत्यत उक्तम् **प्राधान्यादिति** ।

ननु च 'यथोद्देशं लक्षणप्रणयनम्'इतिन्यायेन उद्देशानुसारेण लक्षणस्याप्यवश्यं वक्तव्यत्वात्, तदनभिधाने न्यूनता; इत्यत आह **उद्देशेनैवेति** । यथा उद्देशेनैव लक्षणलाभः, तथा तद्ग्रन्थव्याख्यावसरे एव उक्तम्; इति भावः ॥

१) **तत एवेति** । प्रथमोद्देशनिमित्तात् प्राधान्यादेव इत्यर्थः । **तत्** = **स्वतन्त्रम्**, **निर्दिशति**= शृङ्गिग्राहकं दर्शयति; इत्यर्थः ।

'स्वतन्त्रो भगवान्विष्णुः'इतिमूले तत्त्वविवेकोक्तरीत्या 'भगवत्'-शब्दस्य पूज्यार्थत्वप्रतीतिनिरासाय **आह अत्रेति** । तत्र निर्दोषाखिलसद्गुणत्वरूपस्वातन्त्र्योपपादक-विशेषणान्तरस्य सत्वात् 'भगवान्'इत्यस्य तदुपपादकत्वा-

१. ततः २. अत्र

नाश्रयणेऽपि प्रकृते स्वातन्त्र्योपपादकस्य अन्यस्य विशेषणस्य अभावात् 'भगवत्त्वमेव तदुपपादकम्' इत्याश्रितम्; इति भावः।

ननु निर्दिष्टयोः स्वतन्त्रास्वतन्त्रयोः मध्ये किं स्वतन्त्रम्? इतिजिज्ञासानिवृत्तये शृङ्गिग्राहकतया स्वतन्त्रतत्त्वस्य इव अस्वतन्त्रस्यापि तथा निर्देष्टव्यस्य अनिर्देशात् न्यूनत्वम् स्यात्; इत्यत आह **अन्यदिति**।

२) अस्मिन्पक्षे 'अन्यत् अस्वतन्त्रम्'इतिवाक्यशेषकल्पनम् एव अस्वरसं मनसि निधाय पक्षान्तरम् आह **अथवेति**।

'तत्त्वम् स्वतन्त्रम् अस्वतन्त्रञ्च'इति'च'शब्दस्य बलात् स्वतन्त्रास्वतन्त्ररूपे द्वे तत्त्वे इति प्राप्तौ, द्वित्वस्य औत्सर्गिकव्यक्त्यन्वयबलात् स्वतन्त्रव्यक्तिवत् अस्वतन्त्रव्यक्तिः एकैव प्रसज्येत इत्यर्थः।

किमतो यद्येवम्? इत्यत आह **तथाचेति** ॥ **प्रमाणेति**। अस्वतन्त्रव्यक्तिभेदप्रतिपादक-प्रमाणविरोधः इत्यर्थः ॥ **वक्ष्यमाणेति**। 'भावाभावौ द्विधेतरत्'इत्यादिवक्ष्यमाणेन इत्यर्थः ॥ ॥ **द्विविमिधं[३]मित्युक्तमिति**। प्रकारद्वित्वेन प्रकारिद्वित्वासिद्धावपि प्रकारिद्वित्वेन अवश्यं-प्रकारद्वित्वसिद्धेः, अनुक्त्वैव प्रकारिद्वित्वं प्रकारद्वित्वोक्तेः प्रकार्यवान्तरभेदसद्भावसूचनार्थत्वात्; तत्सूचनाय 'द्विविधम्'इत्युक्तम्; इति भावः।,

**[४]अनेकं स्यादिति**। परतन्त्रवदेव अवान्तरभेदवत् स्यात्; इत्यर्थः। तेन 'स्वतन्त्रतत्त्वस्य भगवतो मत्स्याद्यनेकरूपस्य सिद्धान्ते स्वीकारात्, इष्टापादनम् एतत्'इतिचोद्यानवकाशः; इति ध्येयम् ॥ **इदमुक्तमिति**। 'स्वतन्त्रः भगवान् विष्णुः एक एव' इत्युक्तम्; इत्यर्थः।

---

३. अयं विषयः एकत्र नास्ति।

४. अनेन स्यादिति।

ननु च 'अस्वतन्त्रमिव स्वतन्त्रमपि अवान्तरभेदवत्' इति 'द्विविधम्' इत्यनेन उक्तत्वात्, 'स्वतन्त्रो भगवान्विष्णुः' इत्यनेन स्वतन्त्रव्यक्तेः ऐकत्वोक्तौ स्ववचनव्याघातः; इति चेत्; न, भावानवबोधात्। न हि प्रकारद्वैविध्योक्तिः प्रकारिणोः अवान्तरभेदस्य वाचिका, येन तु 'द्विविधम्' इत्युक्त्या स्वातन्त्र्यस्यापि अवान्तरभेदः वचनवृत्त्या एव उक्तः स्यात्; नापि प्रकारद्वैविध्यं प्रकारिणोः अवान्तरभेदस्य व्याप्यम्, येन 'तत् द्विविधम्' इत्युक्त्या स्वतन्त्रस्यापि अवान्तरभेदः अर्थात् उक्तः स्यात्; किन्तु आश्रययोः ऐक्यप्रापकं प्रकारिद्वित्वम् अनुक्त्वा 'द्विविधम्' इतिप्रकारद्वित्वोक्तिः प्रकार्यवान्तरभेदस्य सूचिकैव।; सा च अपवादाभावे प्रकारिणः अशेषस्य अवान्तभेदं सूचयति; यथा 'भावाभावौ द्विधेतरत्' इत्यादौ।, सति तु अपवादे अपवादविषयातिरिक्ते अवान्तरभेदसूचनेनापि उपपन्ना, न अपवादविषयेऽपि अवान्तरभेदं सूचयति; यथा 'दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम्' इत्यादौ। तथाच कुतः स्वोक्तिविरोधः?।,

न चैवम्— "'द्विविधम्' इत्युक्त्या 'स्वतन्त्रपरतन्त्रयोः अवान्तभेदः अस्ति' इति सूचितम्; तत्र 'स्वतन्त्रप्रमेयम् एकमेव' इत्युक्तं भवति" इति-तत्त्वविवेकटीकोक्तिः कथम्? —इति वाच्यम्; तस्यापि 'स्वतन्त्रपरतन्त्रयोर्मध्ये अवान्तरभेदः अस्ति इति सूचितम्' इत्येव व्याख्येयत्वात्। अत एव अत्र वक्ष्यति 'द्विविधमित्युक्त्या परतन्त्रमवान्तरभेदवदिति सूचितम्' इति; इति दिक्।

३) साङ्ख्यादय इति। अत्र 'आदि' पदेन शैवसङ्ग्रहः।

तन्निरासायेति। प्राधान्यादेः स्वातन्त्र्यनिरासस्तु 'रचनाऽनुपपत्तेश्च नानुमानम्' इत्यादिना शास्त्रे एव कृतो द्रष्टव्यः।

---

५. एकत्वे स्ववचन ६. ऐक्याप्रापकं ७. प्रकारेणावान्तर
८. त.वि.टीका पृ.६३.। ९. वक्ष्यमाणद्विविध। १०. ब्र.सू.१-२-१.

[ ९. वि. विषयः– स्वतन्त्रतत्त्वनिरूपकटीकाव्याख्याने–

अ) उपोद्घातव्याख्याने– १) उद्देशक्रमनिमित्तत्वेन 'स्वतन्त्रतत्त्वस्य... उद्दिष्टम्'इत्यस्य– क) अवतरणम्, ख) पदार्थश्च । २) लक्षणानुक्तिशङ्का-निवारकत्वेन– क) 'उद्देशेनैव लक्षणं लब्धमिति'इत्यस्य –. १. अवतरणम्, २. पदार्थश्च । ख) स्वतन्त्र-परतन्त्र-शब्दयोः निरुक्ती ।

आ) 'स्वतन्त्रो भगवान्विष्णुः'इतिमूलस्य-त्रिविधटीकायाः व्याख्याने- १) 'अत एव....शेषः'इत्यस्य व्याख्याने– क) 'अतः....निर्दिशति'इत्यस्य पदार्थः । ख) 'अत्र....उपपादकम्'इत्यस्य व्याख्याने– 'भगवान्'पदवैयर्थ्य-शङ्कानिरासकतया– १. अवतरणम्, २. अर्थश्च ॥ २) 'अथवा द्वे.... इदमुक्तम्'इत्यस्य व्याख्याने– क) प्रकारान्तरेण अवतारकतया अवतरणम्, ख) 'एका व्यक्तिरेव प्रसज्ज्येत'इत्यस्यार्थः । ग) 'ततश्च....विरोधश्च'इत्यस्य व्याख्याने– १. इष्टापत्तिनिवारकतया अवतरणम्, २. विरोधे प्रमाणप्रकार-प्रदर्शनम्, ३. वक्ष्यमाणविभागवाक्यप्रदर्शनम । घ) 'अतः द्विविधमित्युक्तम्' इत्यस्य पदार्थः । ङ) 'ततश्च....इदमुक्तम्'इत्यस्य व्याख्याने– १. उक्त-विषयस्य-प्रकृतसङ्गतिप्रदर्शकतया अवतरणम्, २. पदार्थः, भावश्च ॥ ३) 'अथवा स्वतन्त्रा....उदितमिति'इत्यस्य व्याख्याने– क) प्रकारान्तरेण अवतारकतया अवतरणम् । ख) पदार्थश्च ॥ ]

स्वतन्त्रतत्त्वस्य-प्रथमोद्देशे निमित्तम् आह स्वतन्त्रतत्त्वस्येति । प्राधा-न्यात् =परानधीनत्वलक्षणस्वातन्त्र्यरूपप्राधान्यात्, तदेव= स्वतन्त्रतत्त्वमेव, आदौ= अस्वतन्त्रतत्त्वात्पूर्वम्, उद्दिष्टम्; इत्यर्थः ।

ननु उद्देशस्य लक्षणोक्त्यर्थत्वात्, उद्देशकरणानन्तरम् लक्षणानुक्तिः अनुचिता ; इत्यत आह उद्देशेनैवेति । स्वतन्त्रास्वतन्त्रतत्त्वयोः नामसङ्कीर्त-नेनैव; लक्षणम्= स्वसत्तायाम्-अन्यानधीनत्वरूपं स्वतन्त्रतत्त्वस्य लक्षणम्, स्वसत्तायाम्-अन्याधीनत्वरूपम् अस्वतन्त्रतत्त्वस्य लक्षणं च; स्वतन्त्र-अस्वतन्त्र-शब्दनिरुक्तिसिद्धम् इत्यर्थः ।,

१. लक्षणञ्च

यत्; स्वसत्तायाम्, स्वम्= स्वयमेव, तन्त्रम्= नियामकम्, नियामकान्तररहितम्; तत् स्वतन्त्रम्; इति 'स्वतन्त्र'शब्दनिरुक्तिः; ।' यत्; स्वसत्तायाम्, परम्= अन्यत्, तन्त्रम्= नियामकम्, यस्य; तत् परतन्त्रतत्त्वम्; इति 'पतन्त्र'शब्दनिरुक्तिः; इति ज्ञातव्यम् ।

१) **अत एवेति** । 'स्वतन्त्रमस्वतन्त्रञ्च'इति उद्देशे एव स्वतन्त्रा स्वतन्त्रतत्त्वयोः लक्षणस्य ज्ञातत्वात्; 'किं स्वतन्त्रतत्त्वम्? अस्वतन्त्रञ्च?' इति जिज्ञासायाम्, आदौ= अस्वतन्त्रतत्त्वात्पूर्वम्, स्वतन्त्रतत्त्वम्, निर्दिशति= 'इदम्'इतिनिरूपयति इत्यर्थः ।

ननु 'स्वतन्त्रो विष्णुः'इत्येनेनैव पूर्तौ 'भगवान्'इतिपदम् व्यर्थम्; इत्यत **आह अत्र भगवानितीति** । अत्र 'भगवान्'इतिपदं स्वातन्त्र्योपपादकम्; समग्रैश्वर्याद्युपपादकत्वात् 'उपपादकम्' इत्यर्थः ।

मूले अस्वतन्त्रप्रदर्शकपदाभावात् आह **अन्यदस्वतन्त्रमिति शेष इति** । स्वतन्त्रतत्त्वात् अन्यत् तत्त्वम् अस्वतन्त्रतत्त्वम् इत्यर्थः ।

२) प्रकारान्तरेण 'स्वतन्त्रो भगवान्विष्णुः'इतिवाक्यम् अवतारयति **अथवेति** ।

**एकैव**= भेदरहितैव, व्यक्तिः, **प्रसज्ज्येत**= आपद्येत; इत्यर्थः ।,

'अस्तु परतन्त्रतत्त्वम् एकमेव'इति इष्टापत्तिम् आशङ्क्य आह **ततश्चेति** । तथासति, **प्रमाणविरोधः**= परतन्त्रतत्त्वभेदग्राहक-प्रत्यक्षादि-प्रमाण-विरोधः; **वक्ष्यमाणविभागविरोधश्च**= ग्रन्थकृता 'भावाभावौ द्विधेतरत्'-इत्यादिना वाक्येन वक्ष्यमाणः यः परतन्त्रतत्त्वविभागः तद्विरोधश्च स्यात्; इत्यर्थः ।,

अत इति । 'द्वे तत्त्वे'इत्युक्ते 'परतन्त्रतत्त्वव्यक्तिः एकैव'इति-प्रतीतेः; इत्यर्थः। प्रकारवाचि'विधा'शब्दप्रयोगात्, 'द्विविधम्'इत्युक्ते परतन्त्रतत्त्वव्यक्तेः-एकत्वप्रतीतिः न भवति इत्यर्थः ।;

अस्त्वेवम्; तथापि किं प्रकृते? इत्यत आह ततश्चेति। 'द्विविधम्'-इत्युक्तत्वादेव, स्वतन्त्रतत्त्वमपि, परतन्त्रतत्त्ववत्, अनेकम्= भेदोपेतम्, स्यात्; इत्यतः= एतस्मात् हेतोः, इदमुक्तम्= 'स्वतन्त्रो भगवान्विष्णुः'इतीदं वाक्यम् उक्तम्; इत्यर्थः। अत्र एकवचनस्य एकत्वे तात्पर्यात् 'स्वतन्त्रो विष्णुः एक एव' इत्यर्थलाभात्, 'स्वतन्त्रो भगवान्विष्णुः' इत्यनेन उक्त-शङ्कानिरासो भवति; इति भावः ।

३) प्रकारान्तरेणापि इदं वाक्यम् अवतारयति अथवेति ।

साङ्ख्यादयः– शैवादिः 'आदि'शब्दार्थः; प्रधानादिकम्= प्रधानम्= प्रकृतिः, शिवादिः 'आदि'शब्दार्थः; आतिष्ठन्ते= अङ्गीकुर्वन्ति; इत्यर्थः। तन्निरासाय= तेषां साङ्ख्यादीनां निराकरणाय, तेषां प्रधानादीनां स्वतन्त्रतत्त्वनिराकरणाय वा; इदमुक्तम्= 'स्वतन्त्रो भगवान्विष्णुः'इति-वाक्यम् उक्तम्; इत्यर्थः।

[ ९ मु. विषयः– स्वतन्त्रतत्त्वनिरूपकटीकाव्याख्याने–

अ) उपोद्घाते– 'स्वतन्त्रतत्त्वस्य....तन्निर्दिशति स्वतन्त्र इति'इत्यस्य व्याख्याने– शङ्कात्रयनिवारकतया अवतरणम् ।

आ) मूलस्य त्रिविधटीकायाः व्याख्याने– १) द्वितीयपक्षत्वेन 'अथवा द्वे....इदमुक्तम्'इत्यस्य व्याख्यानत्वेन-अवतरणम्, ख) 'अतो.... इत्युक्तम्'इत्यस्य भावः । ग) 'तत ...इदमुक्तम्'इत्यस्य पदार्थः। २) तृतीय-पक्षत्वेन 'अथवा स्वतन्त्र....उदितमिति'इत्यस्य व्याख्याने- सप्रयोजनम् अव-तरणम् ॥ ]

ननु स्वतन्त्रतत्त्वस्य आदौ निर्देशः अयुक्तः, कारणाभावात्; आदौ उद्दिष्टत्वम् एव कारणम् इति चेत्, न तत्रापि कारणाभावात्; प्राधान्यमेव कारणम् इति चेत्, तथापि तल्लक्षणमनुक्त्वा निर्देशः अयुक्त एव; इति इमां शङ्कां परिहरन् अवतारयति **स्वतन्त्रतत्त्वस्येत्यादिना** ॥

१) अस्मिन्पक्षे अध्याहारारुच्या प्रकारान्तरेण अवतारयति **अथवेति** ।

**अत इति** । स्वतन्त्रमिव परतन्त्रव्यक्तेः एकत्वभ्रमव्युदासार्थं 'द्विविधम्'इति 'धाल्'प्रत्ययान्तं प्रयुक्तम्; तस्य च 'अनेके धाल्'इति प्रकार्यवान्तरभेदार्थकत्वेन प्रसक्तभ्रमव्युदासार्थकत्वात्; इति भावः ।,

**तत इति** । प्रकार्यवान्तरभेदक'धाल्'प्रत्ययान्तशब्दप्रयोगात् ॥ इदमुक्तम्= 'स्वतन्त्रो भगवान्'इत्युक्तम् ।

२) "ननु द्वे तत्त्वे इत्युक्ते द्वित्वस्य प्रत्येकम् एकत्वमात्राश्रयव्यक्तिद्वये एव प्रयोगात् परतन्त्रव्यक्तेः एकत्वभ्रमे तत्परिहाराय 'द्विविधम्' इत्युक्तम्; तेन च स्वतन्त्रस्यापि अनेकत्वप्रसक्ते तत्परिहाराय 'स्वतन्त्रो भगवान्'इत्युक्तम्; तदयुक्तम्, लाघवेन 'द्वे तत्त्वे'इत्येव वक्तव्यत्वात्; तत्र प्रसक्तभ्रमपरि[3]हारस्य च उत्तरमूलेनैव कर्तुं शक्यत्वात् न तत्परिहाराय 'धाल्' प्रत्ययः प्रयोक्तव्यः, नापि तत्र-प्राप्तबाधकपरिहाराय इदञ्च मूलं कर्तव्यम् गौरवात्"इति अरुचेः आह **अथवा स्वतन्त्रास्वतन्त्रभेदेनेति** ।

---

१. कारणमिति । तत्रापि
२. अनेकेधाल्विति
३. परिहारायचोत्तर

[ ९ का. विषयः– तत्त्वसामान्यविभागनिरूपणाङ्गतया स्वतन्त्र-तत्त्वनिरूपकटीकाग्रन्थव्याख्याने —

अ) उपोद्घातत्वेन 'स्वतन्त्र....लब्धमिति'इत्यस्य व्याख्याने–
१) उद्देशक्रमव्यत्यासशङ्कानिवारकतया 'स्वतन्त्र....उद्दिष्टम्'इत्यस्य– क) अवतरणम्, ख) तात्पर्यञ्च। २) लक्षणानुक्तिशङ्कानिवारकतया 'उद्देशेनैव लक्षणं लब्धमिति'इत्यस्य व्याख्याने– क) अवतरणम्, ख) पदार्थश्च। ३) परीक्षायाः अपि लब्धत्वप्रदर्शनम्।

आ) मूलस्य-त्रिविधटीकायाः व्याख्याने–
१) 'तत एवादौ....शेषः'इत्यस्य व्याख्याने– क) 'तत एव....निर्दिशति' इत्यस्य– १. अर्थः, २. मूलस्थ'भगवान्'पदस्य सकारणम् लक्षणोक्तिपरत्वाभावपरत्वम्। ख) 'अत्र....उपपादकम्' इत्यस्य व्याख्याने 'भगवत्'पदवैयर्थ्यनिरासकतया– १. अर्थः, २. भगवत्त्वस्य विष्णुस्वातन्त्र्योपपादकतया अनुमानप्रयोगश्च। ग) 'अन्यत्...शेषः' इत्यस्य व्याख्याने–
१. सप्रयोजनम् अवतरणम्, २. शेषपूरणस्य-आवश्यकत्वसमर्थनञ्च।
२) 'अथवा द्वे.... इदमुक्तम्' इत्यस्य व्याख्याने– क) सप्रयोजनम् व्याख्यानान्तरत्वेन अवतरणम्। ख) 'द्विविधम्'इत्युक्तेः आवश्यकत्वसमर्थनपूर्वक-तदुक्तिलब्ध-स्वतन्त्रतत्त्वानेकत्व– निरासार्थकतया 'द्वे तत्त्वे....इदमुक्तम्'इत्यस्य व्याख्याने– १. 'द्विविधम्'इत्युक्तेः आवश्यकत्वसमर्थने 'द्वे तत्त्वे.... इत्युक्तम्'इत्यस्य व्याख्याने– क. 'द्वैविध्यानुक्तेर्वैरत्वम्' इतिशङ्कानिवारकतया अवतरणम्; ख. 'प्रसज्ज्येत' इत्यस्य भावः; ग. द्वैविध्यानुक्तेर्वैरत्वशङ्कास्थापकत्वेन 'द्वे तत्त्वे'इत्यस्यैव वक्तव्यत्वसमर्थनार्थं तस्याप्यावश्यकत्वशङ्का, तन्निरसनञ्च; घ.'प्रमाणविरोधः'इत्यस्य भावः; २.'द्विविधम्'इत्युक्तिलब्ध-स्वतन्त्रतत्त्वानेकत्व–निरसनार्थकतया 'ततश्च......इदमुक्तम्'इत्यस्य व्याख्याने– क. 'द्वे तत्त्वे....इत्युक्तम्'इत्यस्य–प्रकृतसङ्गतिगवेषणार्थकतया अवतरणम्, ख. अनेकं स्यात्' इत्यस्य अर्थः, ग. 'इदमुक्तम्'इत्यस्य अर्थः, घ. भावश्च।
३) 'अथवा स्वतन्त्रा....उदितमिति'इत्यस्य व्याख्याने– क) सप्रयोजनम् अवतरणम्, ख) पदार्थः, ग) 'तन्निरासाय'इत्युक्त-निरास-प्रकारप्रदर्शनञ्च।

इ) मूलस्य-अनेकार्थकत्वाभिप्रायः, तदुत्सर्गश्च ।
ई) तत्त्वसामान्यविभागसमाप्तिः ॥ ]

ननु 'अस्वतन्त्रम्' एव आदौ कुतो न उद्दिष्टम्, तज्ज्ञानस्य अर्थतः स्वतन्त्रपदार्थधीहेतुत्वात् ? इत्यत आह **स्वतन्त्रतत्त्वस्येति** ।। प्राधान्यात् = उत्तमत्वात् । तज्ज्ञापनाय इति यावत् ।

उद्दिष्टस्य लक्षणं कुतो न उक्तम् ? अत आह **उद्देशेनेति** । नामकीर्तनेन इत्यर्थः ।

'इष्यते' इत्युक्त्या परीक्षाऽपि लब्धा इति चार्थः ।

१) **तत इति** । स्वतन्त्रस्य प्रथमोद्दिष्टत्वात्, लक्षणादेः लब्धत्वात् च तत्स्वरूपमात्रं दर्शयति; इत्यर्थः ॥ एतेन मूले 'भगवान्'-इतिलक्षणोक्तेः तन्निर्देशमात्रत्वं कुतः ?, इत्यपास्तम्, उद्देशेनैव लक्षणस्य लब्धत्वेन अनाकाङ्क्षितत्वात् ।

तर्हि 'भगवत्'पदं व्यर्थम्; अत आह **अत्रेति** ।। भगवत्त्वम् = समग्रैश्वर्यादिमत्त्वम् ॥ 'विष्णुः स्वतन्त्रः भगवत्त्वात् व्यतिरेकेण जीववत्'इतिप्रयोगो बोध्यः ।

न्यूनताभङ्गाय पूरयति **अन्यदिति** ।। यद्यपि एकस्य स्वातन्त्र्योक्तौ अन्यस्य अस्वातन्त्र्यम् अर्थात् लभ्यते; तथापि प्रमाणप्रमेयादिवत् एतद्विभागस्य सङ्कीर्णत्वशङ्कानिरासाय पूरणम् आवश्यकम् । न च स्वातन्त्र्या-स्वातन्त्र्ययोः विरोधात् नैतच्छङ्कावकाशः -इति वाच्यम्; राजाधीनत्व-तदनधीनत्वयोः इव कादाचित्कसमावेशस्य शङ्क्यत्वात् ।

---

१. तदधीनत्वयोरिव । 'तदभावयोः'इति बहुत्र ।

२) पूरणमन्तराऽपि मूलं व्याख्यातुमाह 'अथवेति ।

''अत्र 'द्विविधम्'इत्युक्त्या-प्रसक्तस्वतन्त्रानेकत्वशङ्का-परिहाराय तदेकत्वाभिधानापेक्षया द्वैविध्यानुक्तिः एव वरम्''इत्याशङ्काम् अपनेतुं तदावश्यकत्वं तावत् आह **द्वे इति** ।,

**प्रसज्ज्येत इति** । द्वित्वस्य व्यक्तिद्वयमात्रवृत्तित्वात्; इति भावः ।,

ननु 'द्वे'इत्यपि न वक्तव्यम्; 'इति'शब्दाध्याहारमन्तरेणैव 'स्वतन्त्रम् अस्वतन्त्रं च तत्त्वम्'इति-अन्वयोपपत्तेः । न च 'द्रव्यादयः सप्त पदार्थाः'[२]इत्यादिवत् उक्ताधिकतत्त्वव्यवच्छेदाय सङ्ख्यानिर्देशावश्यकता इति वाच्यम्; स्वातन्त्र्यास्वातन्त्र्ययोः भावाभावरूपत्वेन तदुभयानाश्रयतत्त्व-सङ्ख्याऽयोगात् । **मैवम्** नित्यानित्यवत् उभयानाश्रयतत्त्वान्तरसम्भावना-भङ्गाय तदावश्यकत्वात् ।,

**प्रमाणविरोध इति** । परतन्त्रानेकत्वग्राहकप्रत्यक्षादिविरोधः इति भावः ।

ततः किं प्रकृते ? इत्यत आह **ततश्चेति** ।,

**अनेकं स्यादिति** । 'अनेकम्' -इतिशङ्का स्यात्; इत्यर्थः ।,

इदमुक्तम्— 'स्वतन्त्रो भगवान् विष्णुः'इत्येतत् उक्तम् ।;

अनेन च स्वतन्त्रस्य एकत्वलाभात् अनेकत्वशङ्कानिरासः; इति भावः ।

३) एतत्कल्पे च 'स्वतन्त्रम् एकम्'इत्येव वक्तुम् उचितम्; इति अपरितोषात् आह **अथवेति** ।

प्रधानम्= जडप्रकृतिः । 'शैवादयः— शिवादिकम् अङ्गीकुर्वन्ति' इति 'आदि'शब्दार्थः ।

---

२. तर्कसङ्ग्रहे प्रथमवाक्यं द्रष्टव्यम्

**तन्निरासायेति** । "भगवत्त्वात्, विष्णुरेव स्वतन्त्रः; न प्रधानादिः; अन्यथा 'न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप' इत्यादि-श्रुतिविरोधः ।"इत्यादिरीत्या परपक्षनिरासेन स्वपक्षस्थापनाय इत्यर्थः ॥

अत्र मूलस्य अनेकार्थत्वम् अभिप्रेतम् ॥ एवम् अन्यत्रापि अव-धेयम् ॥

इति तत्त्वसामान्यविभागः ॥

[ ९ भ. विषयः—स्व तन्त्रतत्त्वनिरूपकटीकाग्रन्थव्याख्याने—

अ) मूलस्य त्रिविधटीकायाः व्याख्याने—

१) 'अन्यत्........शेषः'इत्यस्य व्याख्याने— सप्रयोजनम् अवतरणम् ।
२) अथवा....इदमुक्तम्'इत्यस्य व्याख्याने— क) सप्रयोजनम् अवतरणम् ।
ख) 'द्विविधम्'इत्युक्तेः आवश्यकतारूपः 'द्विविधमित्युक्तमिति'इत्यस्य भावः । ग) 'धाल्'प्रत्ययानुषङ्गेण प्राप्तायाः स्वतन्त्रतत्त्वावान्तरभेदशङ्कायाः निरासार्थकतया 'ततश्च....इदमुक्तम्'इत्यस्य १. अवतरणम्, २. भावश्च ।
घ) 'धाल्'प्रत्यय-एकत्वाभ्यांप्राप्तव्याघातस्य परिहरणम् ।
३) 'अथवा स्वतन्त्र....उदितमिति'इत्यस्य व्याख्याने— क) सप्रयोजनम् अवतरणम् ॥ ]

१) 'तत एव आदौ तन्निर्दिशति'इत्युक्त्या अस्वतन्त्रतत्त्वस्य अनन्तरं निर्देशः—' इति लब्धत्वात्, मूले च तच्छ्रवणाभावात् आह **अन्यदस्वत-न्त्रमिति** ।

२) विशेषेण अन्वयम् अस्वरसं मन्वान आह **अथवेति** ।

**द्विविधमित्युक्तमिति** । 'द्विविधम्'इतिप्रकारवाचिधाल्प्रत्ययेन स्वत-न्त्रपरतन्त्रतत्वयोः प्रकारत्वस्य उक्तत्वात्, प्रकारस्य च स्वाश्रये-व्यक्तिभेदं विना अनुपपत्तेः; 'परतन्त्रतत्त्वस्य अवान्तरभेदः अस्ति'इतिसूचितं स्यात् । तथाच न एकव्यक्तित्वप्रसक्तिः; इति भावः ।,

ननु एवं सति 'एकं सन्धित्सतोऽन्यच्च्यवते'इत्यापन्नम्, यत् परतन्त्रतत्त्वस्य एकव्यक्तित्वं त्याजयतां स्वतन्त्रतत्त्वस्य अवान्तरभेदः आयातः; इत्याशङ्क्य तत्परिहारत्वेन मूलम् अवतारयति तत्श्चेति। स्वतन्त्रतत्त्वस्य अवान्तरभेदाभावेऽपि, छत्रिन्यायेन अस्वतन्त्रसाहचर्यवशात् तन्निष्ठ-स्वतन्त्रत्व-धर्मस्य प्रकारतोक्तिः; इति भावः।

एतेन "स्वतन्त्रतत्त्वं प्रकारो न वा?— न चेत् कथं 'धाल्'-प्रत्ययप्रयोगः? आद्ये तदाश्रयव्यक्तिभेदस्य दुर्वारत्वात् पुनः एकव्यक्तित्वोक्तौ व्याघात एव भवेत्, न तु तद्भेदनिस्तारः" इत्याशङ्का निरस्ता इति ज्ञातव्यम्, व्याघातपरिहारोपायस्य प्रयोगौपचारिकत्वलक्षणस्य चिन्तितत्वात्; इति।

२) वैचित्र्यप्रदर्शनार्थम् अशेषेणैव भावान्तरपरतां वक्तुम् अवतारयति अथवेति।

---

१. अत्र एतत्प्रतीकादग्रे एकस्मिन्ग्रन्थे एवं वर्तते—

तथाच एवं व्याख्याने न शेषोक्तिः आवश्यिकी; इति भावः।

ननु 'द्विविधम्'इतिप्रकारद्वित्वोक्त्या परतन्त्रे इव स्वतन्त्रेऽपि अवान्तरभेदः उक्तः एव; पुनः तन्निषेधाय एकव्यक्तित्वोक्तौ व्याघात एव स्यात्, न तु तत्परिहारः;" इति चेत्; न। यतः प्रकारोक्तेः व्यक्तिबहुत्वसूचकत्वमेव, न तु तदनुमापकत्वं वाचकत्वं वा अस्ति; आकाशत्वचन्द्रत्वादिप्रकारेषु व्यक्तिबहुत्वाभावेऽपि प्रकारतासत्त्वात्। अतः यत्र अपवादाभावः तत्रैव प्रकारोक्तेः प्रकारिभेदसूचकत्वम्, यत्र तु अपवादो न तत्र न तत्सूचकता; इति न पुर्वोत्तरव्याघातः इति।

"ननु 'भावाभावत्वादिना विभागस्य वैयर्थ्यात् अयमेव विभागो न्यायः' इत्याद्युक्तम् अनुपपन्नम्, साङ्ख्यादिरीत्या 'प्रधानादिकमेव स्वतन्त्रम्, अन्यत् सर्वम् तदायत्तम्'इतिज्ञानस्यापि मोक्षहेतुत्वापत्त्या अस्यापि विभागस्य व्यर्थत्वात्" इत्याशङ्कापरिहाराय वा इदं मूलं प्रवृत्तम्" इतिभावेन अवतारयति अथवेति। 'साङ्ख्यादयः', 'प्रधानादिकम्'इति'आदि'पदाभ्यां पाशुपताद्याः शिवशक्त्यादयः च ग्राह्याः।

[ १० टी. विषयः– परतन्त्रतत्त्वनिरूपकस्य तत्त्वसङ्ख्यानस्थतृतीय-वाक्यस्य टीकायाम्– १) पूर्वसङ्गतिप्रदर्शनपूर्वकं परतन्त्रतत्त्वावान्तरभेद-प्रदर्शकत्वेन अवतरणम् । अन्वयार्थौ । ३) परतन्त्रावान्तरभेदभूतस्य भावस्य-प्रथमतया उद्देशे निमित्तकथनम् । ]

'द्विविधम्'इत्युक्त्या 'परतन्त्रतत्त्वम् अवान्तरभेदवत्'इति सूचितम्; तत् कथम्? तत्र आह 'भाव....'इति ।

[ ३ त. विषय :–परतन्त्रतत्त्वद्वैविध्यम् । ]

## भावाभावौ द्विधेतरत् ॥ १ ॥

**इतरत्– स्वतन्त्रात् ,= अस्वतन्त्रतत्त्वम् ; द्विधा । कथम्? – भावः अभावः च –इति ।**

**अभावप्रतीतिः भावप्रतीत्यधीना नियमेन, इति प्राधान्यात् , प्रथमं भावस्य उद्देशः ।**

[ १० स. विषयः– परतन्त्रतत्त्वावान्तरभेदनिरूपकटीकाव्याख्याने–

१) अन्वयार्थे – क) विष्णुविभागप्रतीतिनिरासार्थकतया 'इतरत् स्वतन्त्रात्'इत्यस्य अवतरणम् । ख) 'भावाभावयोर्द्वैविध्यम्'इतिप्रतीतिनिरासकतया 'अस्वतन्त्रतत्त्वम्....चेति'इत्यस्य अवतरणम् । २) भावप्रथमोद्देशे निमित्तत्वेन 'अभावप्रतीतिः....उद्देश'इत्यस्य व्याख्याने– क) अवतरणम् । ख) भावप्रतीत्यभावप्रतीत्योः परस्पराधीनत्वे वैलक्षण्यपरतया 'नियमेन'इत्यस्य –१. अवतरणम् , २. भावश्च । ]

'विष्णोः अपि परतन्त्रात् इतरत्वेन, तस्यैव अयं विभागः क्रियते' इतिनिरासाय आह **इतरदिति** ।,

'भावाभावौ'इत्यनेन वाक्येन 'प्रत्येकं भावाभावयोः द्वैविध्यम् उच्यते' इति प्रतीयते, अत आह **अस्वतन्त्रतत्त्वमिति** ।

अभावापेक्षया भावस्य प्रथमम् उद्देशे निमित्तम् आह **अभावप्रतीतिरिति** ।;

ननु अभावप्रतीतेः भावप्रतीत्यधीनत्ववत् भावप्रतीतेः अपि अभावप्रतीत्यधीनत्वम् अस्ति, घटाभावाभावत्वेन घटज्ञाने घटाभावज्ञानस्यापि कारणत्वात्; इत्यत आह **नियमेनेति** । अभावज्ञानमात्रं प्रति भावज्ञानस्य इव भावज्ञानमात्रं प्रति अभावज्ञानस्य कारणत्वाभावात्; इति भावः ।

[ १० **के.** विषयः– परतन्त्रतत्त्वावान्तरभेदनिरूपकटीकाव्याख्याने–

१) 'द्विविधमित्युक्त्या....सूचितम्'इत्यस्य अर्थः, भावश्च । २) स्वतन्त्रतत्त्वविभागशङ्कापरिहारकतया 'इतरत्... चेति'इत्यस्य व्याख्याने– क) अवतरणम् । ख) सकारणम् अध्याहारेण मूलव्याख्यायकतया 'भावोऽभावश्चेति'इत्यस्य अवतरणम् । ३) 'अभावप्रतीतिः....उद्देशः'इत्यस्य व्याख्याने– भावस्य-प्रथमोद्देशे-निमित्ताभावपरतया– क) अवतरणम् । ख) 'अभावप्रतीतेः नियमेन भावप्रतीत्यधीनत्वम्'इत्यस्य परिष्कारे- १. सप्रयोजनम् अभावप्रतीतौ अभावत्वप्रकारकत्वस्य विवक्षणम; २. सप्रयोजनम् अत्यन्ताभावस्यापि भावप्रतीत्यधीनत्वनियमप्रदर्शने– क. अत्यन्ताभावस्यापि अधिकरणरूपभावप्रतीत्यपेक्षणम्, ख. मतान्तरेण साक्षात् पारम्पर्येण वा अधीनत्वस्य विवक्षणम् । ]

**द्विविधमित्युक्त्येति** । 'स्वतन्त्रमस्वतन्त्रञ्चेति द्विविधम्'इत्युक्त्या तत्त्वस्य स्वातन्त्र्यादिना द्वैविध्यम् एव उक्तम्, न तु स्वतन्त्रपरतन्त्रयोः भावाभावत्वादिना अवान्तरभेदोऽपि; तथापि 'द्विविधम्'इत्यनेन स्वातन्त्र्यपारतन्त्र्यरूपप्रकारद्वित्वं वदता 'प्रकारयोरेव द्वित्वम्, न तु व्यक्तीनाम्

१. बहुत्र 'न तु'इति नास्ति ।

तत्रापि अनयोरेव प्रकारयोः द्वित्वम्, अन्येषाम् अवान्तरप्रकाराणां बहुत्वम् अस्त्येव' इति सूचितम्। अन्यथा 'स्वतन्त्रमस्वतन्त्रञ्चेति द्वे तत्त्वे' इत्येव ब्रूयात्। तत्र च 'स्वतन्त्रम् एकम्' इत्युक्त्या 'स्वतन्त्रावान्तरभेदो नास्ति' इति सूचितमेव। परतन्त्रस्यापि भेदाभावे तत्सूचनस्य निर्विषयत्वमेव स्यात्। -इति भावः।

'विष्णोरपि परतन्त्रात् इतरत्वेन तस्यैवायं विभागः' इति मन्दां शङ्कां परिहरति **इतरदिति**।,

'इतरत् भावाभावौ द्विधा' इत्यन्वयानुपपत्तेः 'इति' शब्दाध्याहारेण मूलं व्याचष्टे **भावोऽभावश्चेति**।

"ननु भावाभावयोर्मध्ये भावस्यैव प्रथमोद्देशः किं निमित्तम्? न च 'अभावापेक्षया प्राधान्यम्' एव निमित्तम्, तत्प्रकारानिरूपणेन तदसिद्धेः" इत्यत आह **अभावप्रतीतिरिति**।;

"ननु घटाद्यभावस्य घटादिरूपभावनिरूप्यत्वात् 'भावस्य प्राधान्यम्'-इति न युक्तम्, भावस्यापि घटादेः स्वाभावाभावत्वेन निरूपणस्य[3] अभाव-प्रतीत्यधीनत्वस्य तुल्यत्वात्; न च 'घटाभावाभावत्वेन-घटप्रतीत्यर्थं घटाभाव-प्रतीत्यपेक्षायामपि घटत्वेन तत्प्रतीतौ तदनपेक्षणात्, न भावस्य अभावनिरू-प्यत्वम्' इति वाच्यम्, अभावस्यापि प्रमेयत्वादिना-प्रतीतौ तदनपेक्षणेन अभावस्यापि भावनिरूप्यत्वनियमासिद्धेः।" इति चेत्; न, अभावत्व-प्रकारक-अभावप्रतीतेः भावप्रतीत्यधीनत्वनियमस्य विवक्षितत्वेन अनति-प्रसङ्गात्।,

न च 'एवमपि अभावस्य प्रागभावादेः प्रतियोगिरूपभावज्ञानाधीन-निरूपणत्वेन तत्प्रतीतेः भावप्रतीत्यधीनत्वेऽपि असत्प्रतियोगिक-अभावस्य अत्यन्ताभावस्य प्रतियोगिभूत-असन्निरूप्यत्वेन तस्य भावत्वाभावात्, न

---

२. इतो वाक्यद्वयम् ग्रन्थद्वये नास्ति। ३. तन्निरूपणस्य

भावत्वप्रकारकज्ञानस्यापि भावप्रतीत्यधीनत्वनियमः' इति वाच्यम् ; प्रतियोगिनः असत्त्वेऽपि अधिकरणस्य सत्त्वेन अधिकरणरूपभावज्ञानस्य तत्रापि अपेक्षणात् प्रतियोगिज्ञानस्य इव अधिकरणज्ञानस्यापि ज्ञानजनकत्वात् । अप्रसक्तस्य निषेधानुपपत्त्या प्रसक्तेः अवश्यं वाच्यत्वात्, तस्याश्च भ्रान्तितया अधिष्ठानप्रधानीभूतभावनिरूप्यत्वात् ; साक्षात् पारम्पर्येण वा अभावप्रतीतेः भावप्रतीत्यधीनत्वम् अस्त्येव, इति न दोषः; इत्यप्याहुः ।

[ १० **वि**. विषयः– परतन्त्रतत्त्वावान्तरभेदनिरूपकटीकाग्रन्थ-व्याख्याने–

१) 'द्विविध....तत्राह' इत्यस्य व्याख्याने– क) अवतरणम्, ख) अर्थः, भावश्च । २) 'इतरत् स्वतन्त्रात्...अभावश्चेति' इत्यस्य व्याख्याने– क) 'स्वतन्त्रात्' इत्यस्य अवतरणम्, ख) खण्डान्वयार्थौ च । ३) 'अभावप्र-तीतिः....उद्देशः' इत्यस्य व्याख्याने– क) अवतरणम्, ख) अर्थः, ग) एत-न्नियमपरिष्कारे – १. सप्रयोजनम् अभावप्रतीतौ 'अभावत्वेन' इतिविशेष-णम्, २. सप्रयोजनम्, 'प्रतीति' पदस्य साक्षात्कारपरत्वम्, ३. 'नियम'-पदस्य प्रयोजनम्, तद्भावश्च । ]

उत्तरवाक्यम् अवतारयति **द्विविधमित्युक्त्येति** ।[1]

द्विविधमित्युक्त्या, परतन्त्रतत्त्वम्, अवान्तरभेदवत्= स्वविभाजक-धर्मप्रयुक्तभेदवत्, इति, सूचितम्= अर्थं ज्ञापितम्, भवति; इत्यर्थः । अन्यथा 'द्वे तत्त्वे' इत्येव ब्रूयात्; इति भावः ।,

पृच्छति **तत्कथमिति**[2] । तत्– परतन्त्रतत्त्वम्, कथम्, अवान्तर-भेदवत्; इत्यर्थः । तत्र= एवं प्रश्ने कृते, उत्तरम्, आह; इत्यर्थः ।

---

१. अत्र कचित् एका पङ्क्तिः अधिका उपलभ्यते यत् 'स्वतन्त्रतत्त्वमिति स्वतन्त्रतत्त्वमेकमेवेतिप्रतीतिवारणायाह' इति । २. तत्कथमितीति

'भावाभावौ द्विधेतरत्'इत्यत्र इतरत्वस्य केवलान्वयित्वेन इतरशब्दार्था-निर्णयात् आह **स्वतन्त्रादिति** ।। इतरत्, द्विधा= द्विविधम् । कथं द्विवि-धम् ? इतिजिज्ञासायाम्, 'भावाभावौ'इत्युक्तेः, अन्वयाप्रतीतेः, 'इतर'-शब्दार्थकथनपूर्वकम् 'इति'शब्दाध्याहारेण 'भावाभावौ'इतिपदस्य विभक्ति-विपरिणामम् अभिप्रेत्य अन्वयं दर्शयति **इतरदिति** । कथम्[३]= केन प्रकारेण द्विविधम्? इतिजिज्ञासायाम्, इत्यर्थः ।। **भावोऽभावश्चेति** । 'द्विधा'इति पूर्वेण अन्वयः ।

भावस्य प्रथमोद्देशे निमित्तम् आह **अभावप्रतीतिरिति** ।;

अभावप्रतीतिः, नियमेन= अव्यभिचारेण, प्रतियोगिभूतभावप्रती-त्यधीना, इति हेतोः, भावस्य प्राधान्यात्= प्रथमोपस्थितत्वरुपप्राधान्यात्, प्रथमम्= अभावोद्देशापेक्षया आदौ, भावस्य, उद्देशः, कृतः, इत्यर्थः ।,

यद्यपि प्रमेयत्वेन-अभावप्रतीतिः न अभावप्रतियोगिभावप्रतीत्य-धीना, तथापि अभात्वेन-अभावप्रतीतिः अभावप्रतियोगिभावज्ञानाधीनैव ।,

'ननु अभावपदाज्जायमाना अभावत्वप्रकारिका अभावप्रतीतिः न अभावप्रतियोगिभावप्रतीत्यधीना' इति चेत् ; किं तावता ! प्रतीतिपदस्य साक्षात्कारपरत्वेन उक्तचोद्यानवकाशात् ।,

घटादेः भावस्य अभावप्रतियोगिक-अन्योन्याभावत्वेन, साक्षात्काररूप-प्रतीतिः अभावज्ञानाधीना; इति 'नियम'पदम् । अभावस्य स्ववाचक'अभाव'-पदप्रवृत्तिनिमित्त-अभावत्व-प्रकारक-साक्षात्कारस्य नियमेन प्रतियोगि-भाव-प्रतीत्यधीनत्व-वत् घटादेः भावस्य स्ववाचक-'घट'आदिपदप्रवृत्तिनिमित्त-घटत्व'आदिना, स्ववाचक-'भाव'पदप्रवृत्तिनिमित्त-भावत्वेन च अपरोक्षप्रतीतेः अभावज्ञाननिरपेक्षत्वात् 'नियम'पदेन घटादिभात्व्यवच्छेदो[४] भवति; इति भावः ।

३. द्विधा द्विविधं कथं केन प्रकारेण द्विधा द्विविधम्
४. 'घटादिभावव्यवच्छेदः' इति ग्रन्थद्वयपाठः ।
'घटादिपदव्यवच्छेदः' इति च एकत्र पाठः ।

[ १० मु. विषयः– अस्वतन्त्रावान्तरभेदनिरूपकटीकाग्रन्थव्याख्याने–
१) शङ्काद्वयनिवारक-अवतारकत्वेन 'द्विविधम्...तत्राह भावेति' –इत्यस्य अवतरणम् ।
२) 'इतरत् ....चेति'इत्यस्य व्याख्याने – क) स्वतन्त्रतत्त्वद्वैविध्योक्तिप्रतीति-निरासकतया 'इतरत् स्वतन्त्रात्' इत्यस्य अवतरणम् । ख) 'अस्वतन्त्रतत्त्वम्' इत्यस्य द्वेधा अवतरणम्– १. 'असतो द्वैविध्यम्' इतिप्रतीतिनिरासकतया, २. 'घटाख्यं द्विविधम्'इतिप्रतीतिनिरासकतया च । ग) 'भावाभावौ' –इत्यस्य-वैयर्थ्यनिरासपरतया 'कथम्'इत्यस्य अवतरणम् । घ) 'भावाभावौ' इत्यनेन प्रकारद्वैविध्योक्त्यलाभः'इतिशङ्कानिवारकतया 'भावोऽभावश्च' इत्यस्य अवतरणम् ।
३) 'अभावप्रतीतिः....उद्देशः'इत्यस्य व्याख्याने– क) 'अभावप्रतीति'पद-विवक्षितोऽर्थः सप्रयोजनः । ख) 'नियमेन'इत्यस्य प्रयोजनम् । ]

''ननु उत्तरमूले भावाभावयोः द्वैविध्योक्तिः अयुक्ता, अप्रस्तुतत्वात् ।, 'इतरत्' इति च व्यर्थः । न च वाच्यम् 'इतरत् इति परतन्त्रम् उद्दिश्य भावाभावभेदेन द्वैविध्यम् उच्यते' इति, अनाकाङ्क्षितत्वेन अवक्तव्यत्वात् ; न च आकाङ्क्षायामेव तदुच्यते इति, बीजाभावेन आकाङ्क्षाया एव अनुदयात् ।' इतीमां शङ्कां परिहरन् अवतारयति **द्विविधमिति** ।

'अस्वतन्त्रात् इतरत् स्वतन्त्रम्'इतिप्रतीत्या तस्य द्वैविध्योक्ति अयुक्ता, एकत्वोक्तिविरोधात्; इतिशङ्कितारं प्रति आह **इतरत्स्वतन्त्रादिति** ।,

भेदस्य धर्मिस्वरूपत्वाभावपक्षे, प्रतियोगित्वादिवत् धर्मिसत्तानिरपेक्षत्व-' पक्षे, स्वतन्त्रात् अन्यत् असत् गृहीत्वा; तस्य द्वैविध्योक्तिः अयुक्ता, बाधितत्वात्; इतिवदतः शङ्कां परिहरन्नेव अन्वयं दर्शयति **अस्वतन्त्रतत्त्वमिति** ।। यद्वा 'स्वतन्त्रात् इतरत् घटाख्यं वस्तु द्विधा'इतिभ्रान्तिं परिहरन् अन्वयं च दर्शयति **अस्वतन्त्रतत्त्वमिति** । अस्वतन्त्रतत्त्वावच्छिन्नम् इत्यर्थः; ।,

तर्हि 'भावाभावौ' इत्येतत् व्यर्थम् ; इत्यतः तदुत्थापिकां शङ्कां दर्शयति **कथमिति** ।,

"ननु 'भेदाभेदः'इतिवत् भावाभावत्वम् एकः प्रकारः ।, पदार्थद्वयं 'भावाभावौ'इतिद्विवचनेन लब्धम्, न तु प्रकारद्वयम् ।; तत्कथं 'कथं द्वैविध्यम्?'–इतिशङ्कायाः परिहारः, प्रकारद्वयस्य अलाभात्?" इत्यत आह **भावोऽभावश्चेति** ।

**अभावेति** । निषेधमुखविषयिणी प्रतीतिः । तेन 'प्रमेयत्वादिप्रकारक-अभावप्रतीतेः भावप्रतीत्यनधीनत्वचोदनम् असङ्गतम्'इत्युक्तं भवति ।,

'घटः अभावो न'इतिभावप्रतीतेः अपि अभावप्रतीत्यधीनत्वात्, तत्प्रतीतिजनकज्ञानविषयत्वं न प्राथम्यनियामकम्; इति उक्तं **नियमेनेति** । 'घटः'इतिप्रतीतेः अभावप्रतीत्यनपेक्षत्वेन, नियमेन भावप्रतीतेः अभावप्रतीतिसापेक्षत्वाभावेन; नोक्तदोषः ।

[ १० का. विषय– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने–

१) 'द्विविधम्....सूचितम्'इत्यस्य– क) सप्रयोजनम् अवतरणम्, ख) भावश्च । २) 'इतरत्....चेति'इत्यस्य व्याख्याने– क) मूलयोजकतया अवतरणम् । ख) भावकथनपूर्वकं 'भावोभावश्च'इत्यस्य अवतरणम् । ३) अभावः....उद्देशः'इत्यस्य व्याख्याने– क) सप्रयोजनम् अवतरणम् । ख) अभावप्रतीतौ 'अभावत्वेन'इति विशेषणम् सप्रयोजनम् । ग) नियमव्यभिचारशङ्कापरिहरणे– १. पदजन्य-अभावप्रतीतेः अपि पदशक्त्यादिरूपभावप्रतीत्यधीनत्वम्, २. अत्यन्ताभावप्रतीतेश्च अधिकरणादिभावप्रतीत्यधीनत्वम् । घ) 'नियमेन'इत्यस्य प्रयोजनम् । ङ) भिन्नत्वस्य भावभिन्नत्वरूपत्वाभावः । च) 'प्राधान्यात्'इत्यस्य अर्थः । ]

चतुर्थपादस्य अनाकाङ्क्षितत्वं निवारयन् आह **द्विविधमिति** ।,

प्रकारस्यैव द्वित्वोक्त्या सूचितस्यप्रकार्यर्थानेकत्वस्य, स्वतन्त्रे अपवादे सति अस्वतन्त्रे एव पर्यवसानात्; इति भावः ।

अपेक्षित-अध्याहारेण मूलं योजयति **इतरदिति** ।,

'द्विवचनार्थं द्वित्वम् अविवक्षितम्'इति भावेन आह **भावोऽभावश्चेति** ।

ननु पश्चात् निरूपयिष्यमाणस्य भावस्य कथम् आदौ उद्देशः ? इत्यत आह **अभावप्रतीतिरिति** ।;

अभावत्वेन अभावप्रतीतिः; इत्यर्थः । तेन वस्तुत्वादिना तत्प्रतीतेः भावप्रतीत्यनधीनत्वेऽपि न क्षतिः ।,

न च 'अभाव'पदजन्य-अभावप्रतीतौ, तदजन्य-अत्यन्ताभावप्रतीतौ च व्यभिचारः; तस्याः पदशक्त्यादिरूपभावप्रतीत्यधीनत्वात् ।, अत्यन्ताभावप्रतीतेः अपि अधिकरणादिभावप्रतीत्यधीनत्वात् ।,

'अभावभिन्नः भावः'इतिप्रतीतेः अभावप्रतीत्यधीनत्वात्, अभावस्यापि प्राथम्योपपत्तिः; अतः **नियमेनेति** ।,

यत्तु भावत्त्वज्ञानं विना भावभिन्नत्वरूप-अभावत्वज्ञानासम्भवात्, प्रथमं भावस्य उद्देशः, इति; तन्न, वक्ष्यमाण-अभावत्वस्य भावभिन्नत्वरूपत्वाभावात्; इति ।,

**प्राधान्यादिति** । उक्तरूपप्राधान्यम् एव प्राथम्यनियामकम्; इत्यर्थः ।

[ १० भ. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने–

१) 'इतरत्....चेति'इत्यस्य व्याख्याने– सप्रयोजनं मूलयोजकतया 'भावोऽभावश्चेति'इत्यस्य अवतरणम् । २) 'अभावः....उद्देशः'इत्यस्य व्याख्याने– क) अवतरणम् । ख) भावश्च सप्रमाणः । ३) अभावप्रतीतिकाले प्रतियोगिनः असत्त्वेऽपि तस्य भावत्वोपपादनम् । ]

'इतरत् भावाभावौ द्विधा' इति अनन्वितम् इत्याशङ्क्य 'भावाभावौ-, इत्येतत् बुद्ध्या विभज्य प्रत्येकं द्वैविध्यशङ्कावारणाय पूर्ववत् 'इति' शब्दाध्याहारेण योजयति **भावोऽभावश्चेतीति** ।

प्रथमं-भावस्य-उद्देशे निमित्तम् आह **अभावप्रतीतिरिति** । धर्मिप्रतियोगिनोः भावरुपयोः प्रतीतौ सत्याम् एव अभावप्रतीतिः, नान्यथा; इति भावः । यथोक्तम्

'सधर्मिप्रतियोगित्वमभावस्य नियामकम्' इति ।,

ननु अभावप्रतीतिकाले प्रतियोगिनः असत्त्वेन कथं तस्य भावत्वम् ? इति चेत् ; न; प्रागभावप्रतियोगिनि भाविभावापेक्षया, प्रध्वंसप्रतियोगिनि भूतपूर्वगत्या, अत्यन्ताभावप्रतियोगिनि तु तत्सजातीयवस्तुनः भावत्वेनभावत्वव्यवहारात्; इति ।

[ ११ **टी.** विषयः— अस्वतन्त्रतत्त्वविभागे—
१) भावस्य लक्षणम् । २) अभावस्य लक्षणञ्च । ]

**प्रथमप्रतीतौ 'अस्ति' इति उपलभ्यते यः सः भावः ।**

**यश्च प्रथमोपलब्धौ 'नास्ति' इति प्रतीयते सः अभावः ।**

[ **११ स.** विषयः— अस्वतन्त्रतत्त्वविभागे— भावाभावयोर्लक्षणे—
१) 'प्रथम....स भावः' इत्यस्य व्याख्याने— क) प्राथम्यनिमित्तकथनपूर्वकम् भावलक्षणत्वेन अवतरणम् । ख) 'प्रथमप्रतीतौ' इत्यस्य कृत्यम् ।
२) एतत्समानप्रयोजनवत्त्वम् अभावलक्षणेऽपि 'प्रथमप्रतीतौ' इतिपदस्य । ]

प्राधान्यात् प्रथममुद्दिष्टं भावं लक्षयति **प्रथमेति** ।

द्वितीयादिप्रतीतौ भावस्यापि नास्तित्वेन उपलभ्यमानत्वात् अव्याप्तिः, 'घटाभावः अस्ति'इति अभावस्यापि 'अस्ति'इति-उपलभ्यमानत्वात् अव्याप्तिश्च स्यात्; इत्यतः **प्रथमप्रतीतौ** इत्युक्तम् ॥

एवम् उत्तरलक्षणेऽपि अव्याप्ति-अतिव्याप्ति-निरासाय **प्रथमप्रतीतौ** इत्युक्तम्; इति द्रष्टव्यम् ।

[ ११ **के.** विषयः– अस्वतन्त्रतत्त्वविभागे भावाभावलक्षणत्वेन 'प्रथमप्रतीतौ....अभाव:'इत्यस्य व्याख्याने– १) अवतरणम् । २) उभयलक्षणे 'प्रथमप्रतीतौ'इत्यस्य कृत्यम् । ]

यथोद्देशं भावाभावलक्षणे[2] आह **प्रथमेति** ।

भावस्य पटादेः 'शुक्लो न'इति नास्तित्वेन उपलभ्यमानत्वात्, अभावस्यापि 'घटाभावः अस्ति'इति अस्तित्वेन उपलभ्यमानत्वात्; अव्याप्तिः परस्परातिव्याप्तिश्च स्याताम्; इत्यतः **प्रथमप्रतीतौ** इति विशेषणम् ।

[ ११ **वि.** विषयः– अस्वतन्त्रतत्त्वविभागे– भावाभावयोर्लक्षणे– 'प्रथम....अभाव:'इत्यस्य व्याख्याने–

अ) भावाभावयोर्लक्षणत्वेन तत्तत्पदप्रवृत्तिनिमित्तकथनपरतया– १) अवतरणम् । २) उक्तार्थे तत्त्वविवेकटीका संवादप्रदर्शनञ्च ।

आ) भावाभावलक्षणव्याख्याने– १) भावलक्षणव्याख्याने– क) पदार्थः । ख) दलकृत्ये– १. शुक्तिरूप्यादौ-अतिव्याप्तिपरिहारार्थे– क. 'प्रतीति'पदस्य प्रमापरत्वम्, ख. अथवा ज्ञानविषयत्वस्य ज्ञानजनकसन्निकर्षप्रतियोगित्वरूपत्वम्; २. अभावे-अतिव्याप्तिनिरासाय 'प्रथम'पदम् । ग) सप्रयोजनम् ज्ञानानाम् 'अस्ति'इत्याकारकत्वस्य अखण्डज्ञानधर्मत्वम् । अस्मिन्विषये प्रमाणोदाहरणे च– क. अनुभवः, ख. तत्त्वोद्योतटीकायाः

---

१. अयं 'प्रथमोपलब्धौ'इत्यस्य पाठभेदः अथवा अर्थानुवादः इति बोध्यम् ।
२. लक्षणेनाह

अंशद्वयम्, ग. मिथ्यात्वानुमानखण्डनटीका, घ. विष्णुतत्त्वनिर्णयटीका, ङ. लोकव्यवहारविरुद्धस्य अनुव्यवसायस्य भ्रमत्वनिर्णयश्च । २) 'अभाव' लक्षणव्याख्याने– क) पदार्थः । ख) दलकृत्ये– १. अन्योन्याभावे-अव्याप्ति-परिहरणम् द्विधा, २. सप्रयोजनम् 'प्रतीति'पदस्य प्रमापरत्वम्, ३. 'प्रथम'-पदकृत्यम्, ४. 'नेति प्रतीयते'इत्यस्य 'नेत्याकारप्रतीयते'इत्यर्थकत्वम् ।-

'उद्देशस्य लक्षणोक्त्यर्थत्वात् भगवत्पादैः भावाभावयोर्लक्षणानुक्तिः अनुचिता'इत्याशङ्क्य 'अत्रापि भावाभावपदाभ्यामेव तत्प्रवृत्तिनिमित्ते विधिनिषेधत्वे तयोर्लक्षणे सूचिते, अतः तयोर्लक्षणं नोक्तम्'इत्यभिप्रेत्य लक्ष-णभूतौ तद्व्यञ्जकधर्मौ तल्लक्षणे क्रमेण आह **प्रथमप्रतीताविति** ।,

अत एव तत्त्वविवेकटीकायाम् 'अत्रापि भावाभावपदाभ्यामेव विधिनिषेधा-त्मकत्वं तयोर्लक्षणं सूचितम्' इत्युक्तम्।

१) यः अर्थः, स्वस्य प्रथमप्रतीतौ, 'अस्ति'इत्युपलभ्यते= 'अस्ति'-इति भासते, सः भावः; इत्यर्थः ।;

शुक्तिरूप्यादौ अत्यन्तासति प्रथमम् -'अस्ति'इतिप्रतीतिविषयत्वम् भावलक्षणम् अस्ति; इतिचेत्; न, 'प्रतीति'पदस्य प्रमापरत्वेन उक्तचोद्यान-वकाशात् । यद्वा शुक्तिरुप्यादौ अत्यन्तासति ज्ञानजनकसन्निकर्षप्रतियोगित्व-रूपज्ञानविषयत्वस्य अभावात् न तत्र अतिव्याप्तिः ।,

अभावे-अतिव्याप्ति-निरासाय 'प्रथम'पदम् ।;

'ननु 'अस्ति'इतिप्रमाविषयत्वं नाम अस्तित्वप्रकारकज्ञानविषयत्वम्, अस्तित्वं च विधित्वापरपर्यायं भावत्वम्; इति आत्माश्रयः स्यात्;' इति

१. त. वि. टी. पृ. ६३.

चेत् ; न, 'प्रथमम् 'अस्ति'इत्याकारको यः सः भावः'इत्यङ्गीकारात् ।, ज्ञानानाम् 'अस्ति'इत्याकारकत्वं च न अस्तित्वविषयकत्वम् येन[^1] उक्त-दोषस्तदवस्थः स्यात् ; किन्तु तदतिरिक्त एव अखण्डः कश्चिज्ज्ञानधर्मः ।

न चात्र विवादः कार्यः, भ्रमस्थले प्रमास्थले च 'अत्रास्ति रजतम्'इति-ज्ञानानन्तरम् "मम 'अत्र रजतम् अस्ति'इत्याकारकं ज्ञानं जातम्'' इत्यबाधित-अनुभवस्य [२]तत्र मानत्वात् ।,

उक्तं [३]तत्त्वोद्योटीकायाम्—" रजतज्ञानस्य शुक्तिकाविषयत्वं संविद्विरुद्धम् —इति चेत्; न ।, रजतज्ञानस्य इति कोऽर्थः ? यदि रजतविषयस्य इति तदा असिद्धिः; यदि 'रजतम्'इतितज्ज्ञानस्य इति रजताकारभ्रमरूपज्ञानस्य इति सम्मतिवाक्यार्थः तदा परस्यैव संविद्विरोधः, "यत् 'इदं रजतम्'इत्यमनिषं सा शुक्तिरेव, न तु रजतम्" इत्यबाधितप्रतीतेः; 'यदाकारं यद्विज्ञानम्, तत् तद्विषम्'इति तु प्रमितिनिष्ठेयं व्यवस्था । "—इति ।,

उक्तं च तत्रैव[४] उत्तरत्र 'न हि तदाकारत्वम् तद्विषयत्वम् इति' पर्यायौ एतौ; किन्नाम सामान्यविशेषवचनौ'इति, व्यापकव्याप्यवचनात्; इति सम्मतिवाक्यार्थः ।,

उक्तं च मिथ्यात्वानुमानखण्डनटीकायाम्[५]— 'ज्ञेयभेदानवच्छिन्नस्य ज्ञानमात्रस्य अतिप्रसङ्गित्वात्, तदवच्छिन्नस्य सिद्ध्यङ्गतायाम्, तस्यापि अङ्गत्वम्; इति चेत्; दोषवशात् सत्यतद्विषयज्ञानसदृशज्ञानस्य अङ्गताङ्गी-कारात्'इति । = दोषवशात्= रजतसादृश्यादिदोषवशात्, जातम्, सत्यम् यत्, तद्विषयेण, ज्ञानेन= प्रमारूपज्ञानेन, सदृशम्= रजताकारत्वेन समानम्, ज्ञानम्= भ्रमरूपज्ञानम्, तस्य सिद्ध्यङ्गताङ्गीकारात्; इति सम्मतिवाक्यार्थः ।,

---

२. तस्य
३. त.द्यो.टी.पृ.३४७ द्रष्टव्यम् ।
४. त.द्यो.टी.पृ.४६२
५. मि.खं.टी.पृ. ४३६

उक्तं च विष्णुतत्त्वनिर्णयटीकायाम्– "यथाहि सत्यरजते 'इदं रजतम्'इत्यभिज्ञाकारम् एव ज्ञानम् उत्पद्यते, तथा भ्रान्तरजतेऽपि 'इदं रजतम्'इत्यभिज्ञाकारमेव ज्ञानम् उत्पद्यते; तत् केन प्रमाणेन तस्य अन्यत्रसत्त्वं व्यवस्थाप्यते; ?" इति[6] ।,

ननु 'मया अत्र रजतं दृष्टम्'इतिअनुव्यवसायः तस्य रजतविषयकत्वे मानम्, इति[7] चेत्; न, बाधोदयानन्तरम् 'यन्मया रजतात्मना दृष्टम् सा शुक्तिरेव न तु रजतम्'इत्यबाधितप्रतीतिविरोधात्, " 'मया अत्र रजतं दृष्टम् । त्वं शीघ्रम् आगच्छ ।' इति स्वीयं प्रति केनचित् उक्ते; 'सम्यक् परामृश्य वद'इति अनेन उक्ते; सम्यक् परामृश्य 'दोषवशात् शुक्तिरेव रजतात्मना दृष्टा; न तु रजतम्'इति प्रतिवदति ।"इत्यादिलोक व्यवहारविरोधाच्च ; अनुव्यवसायस्य भ्रमत्वेन तत्र प्रमाणत्व योगात् ।

२) यश्चेति । यः, तु, स्वस्य प्रथमोपलब्धौ 'नास्ति'इति भासते; असौ[8] अभावः; इत्यर्थः ।

न च 'अन्योन्याभावे 'नास्ति'इतिप्रतीतिविषयत्वाभावात् अव्याप्तिः'-इतिवाच्यम्, " 'नास्ति'इतिप्रतीयते" इत्यस्य विवक्षितत्वात् । 'धर्म्यतिरिक्त--अभाव-लक्षणपरत्वात् न उक्तशङ्कावकाशः'इति केचित् आहुः ।,

न च आरोपिताभावे अतिव्याप्तिः; 'प्रतीति'पदस्य प्रमापरत्वात् ।,

भावस्यापि घटपटान्योन्याभावत्वेन यदा प्रतीतिः भवति, तदा तत्र 'न'इतिप्रतीतिविषयत्वम् अस्ति; इति अतिव्याप्तिः । तद्वारणाय 'प्रथम'-पदम् ।,

६. वि.त.नि.टी.पृ. ७८० द्रष्टव्यम्   ७. विरोधमनुव्यवसायस्य
८. असाववभासत इत्यर्थः ।

ननु “ ‘न’इतिप्रतीयते”इत्यस्य “यः प्रथमप्रतीतौ, ‘न’इतिप्रतीयते= निषेधत्वेन विषयीक्रियते”इत्यर्थः, निषेधत्वं च अभावत्वम्; इति आत्माश्रयः स्यात्; इति चेत्; न, ‘यः प्रथमं ‘न’इत्याकारप्रतीतिविषयः सः अभावः’इतिविवक्षितत्वात् ।

[ ११ मु. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाव्याख्याने–भावाभावलक्षणे–

१) भावलक्षणगतपदार्थः ।
२) उभयलक्षणे ‘प्रथमप्रतीतौ’इत्यस्य कृत्यम् । ]

**प्रथमेति** । प्रथमाक्षिसन्निपातानन्तरप्रतीतौ, ‘अस्ति’इत्युपलभ्यते= ‘अस्ति’इतिविधिरूपेण विषयीक्रियते; इत्यर्थः ।

‘अस्ति’इति-उपलभ्यमानत्वस्य[1] अभावेऽपि साम्यात्, ‘नास्ति’इति-उपलभ्यमानत्वस्य भावेऽपि साम्यात्; उभयत्र ‘प्रथमप्रतीतौ’इति विशेषणम् ।

[ ११ का. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाव्याख्याने–भावाभावलक्षणे–‘प्रथम....अभावः’इत्यस्य व्याख्याने–

१) उभयलक्षणोक्तित्वेन अवतरणम् । २) अर्थः । ३) दलकृत्ये– क) विधित्वनिषेधत्वयोः अखण्डोपाधित्वम् सप्रयोजनम् । ख) विधित्वनिषेधत्वयोः लक्षणत्वानङ्गीकारः सप्रयोजनः । ग) ‘प्रथम’पदकृत्यम् । घ) प्रथमत्वस्य प्रतीत्यनुत्तरत्वार्थकत्वम् सप्रयोजनम् । ङ) प्रतीत्यनुत्तरत्वस्य स्वविषयविषयकप्रतीत्यनुत्तरत्वार्थकत्वम् । च) भावस्वरूप-अभावस्य-अलक्ष्यत्वम् । ]

उद्देशक्रमेण भावाभावयोः लक्षणम् आह **प्रथमेति** ।

विधित्वेन प्रथमप्रतीतिविषयत्वं भावत्वम्; निषेधत्वेन प्रथमप्रतीतिविषयत्वम् अभावत्वम्; इत्यर्थः ।

---

१. उपलभ्यमानस्य

विधित्वनिषेधत्वे अखण्डोपाधी, न तु उक्तप्रतीतिविषयत्वरूपे ; उक्तप्रतीतौ नियानकाभावप्रसङ्गात् ।,

न चैवम् तयोरेव भावाभावलक्षणत्वम्, अभावभावयोः अतिव्याप्तेः । द्वितीयप्रतीतौ अभावस्यापि विधित्वेन भानात् **प्रथमेति** ।,

प्रथमत्वञ्च प्रतीत्यनुत्तरत्वम् । तेन द्वितीयादिप्रतीतेः तृतीयादि-प्रतीतिप्राथम्येऽपि न क्षतिः ।,

न च अभावप्रतीतेः प्रतियोग्यादिप्रतीत्युत्तरत्वनियमात् प्राथम्यायोगः स्वविषयविषयकप्रतीत्यनुत्तरत्वस्य विवक्षितत्वात् ।,

न च 'अन्योन्याभावे अव्याप्तिः, तत्प्रतीतेः तदभिन्नधर्मिप्रतीत्युत्तर-त्वनियमात्'इति वाच्यम्, भावस्वरूप-अभावस्य अलक्ष्यत्वात्; अभावस्वरूपे च धर्मिप्रतीतिमादायैव लक्षणसङ्गतेः । अत एव "यस्तु 'नास्ति'इति प्रतीयते सः अभावः"इत्युक्तम् । अन्यथा 'यस्तु 'न'इतिप्रतीयते"इत्येव अवक्ष्यत् ।

[ ११ भ. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– भावाभावलक्षणे–

१) अनुव्याख्यानसंवादप्रदर्शनसहितम् अभिप्रायकथनपूर्वकम् 'प्रथम ....अभावः'इत्यस्य अवतरणम् । ]

'भावाभावौ'इति-उद्देशेनैव तल्लक्षणमपि लब्धम्, इति न तदनुक्तिः न्यूनताऽऽपादिनी; इति भावेन

'[2]प्रथमप्रतिपत्तिषु ।
निषेधविधिरूपत्वं भावाभावत्वमत्र हि ॥',

---

१. एतच्छब्दानन्तरम् ग्रन्थद्वये अधिकमेकं वाक्यमुपलभ्यते यत् 'एतदभि-प्रायेणैव भावत्वादिकमखण्डोपाधिरिति विजयीन्द्रतीर्थश्रीमच्चरणैरुक्तम्'इति ।
२. अनुव्याख्याने २–१–४ अधि.– ८ सू. ३७१ पृ.

'[3]तथापि प्रथमं बुद्धेर्यो निषेधस्य गोचरः ।
सोऽभावो; विधिबुद्धेस्तु गोचरः प्रथमं परः ॥'

इति-अनुव्याख्यानं मनसि निधाय आह **प्रथमप्रतीताविति** ।

[ १२ टी. विषयः–अस्वतन्त्रतत्त्वविभागनिरूपकटीकाव्याख्याने–भावाभावयोर्लक्षणे– विवक्षितप्रतीतेः प्राथम्याद्युपपादने–

१) विवक्षितप्रतीतेः प्राथम्यादौ नियामकाभावशङ्का ।

२) एतच्छङ्कानिरसने च– क) भावाभावयोः स्वरूपस्य रूपान्तरस्य च कथनम् । ख) तत्स्वरूपरूपान्तरयोः प्रतीतिभेदेन प्राथम्यादिकथनम् तन्नियामकसहितम् । ग) उक्तप्रकारानुसारेण भावाभावयोः प्रतीतीनाम् आकारप्रदर्शनम् । ]

**कुत एतत् ?**

**स्वरूपेण हि भावाभावौ विधिनिषेधात्मानौ; रूपान्तरेण तु निषेधविधिरूपौ । तत्र आपातजायां संविदि स्वरूपमेव भासते, द्वितीयादिप्रतीतौ रूपान्तरम्; कार्यगम्यत्वात् सामग्रीभेदस्य ॥ तथाच प्रतीतिः– अस्ति अत्र घटः, स न शुक्लः; इति ।, एवम्– नास्ति अत्र घटः, अस्ति घटाभावः; इति ॥**

[ १२ स.– विषयः स्वतन्त्रतत्त्वविभागनिरूपकटीकाव्याख्याने–भावाभावयोर्लक्षणे– विवक्षितप्रतीतेः प्राथम्योपपादने–

१) 'कुत एतत्'इत्यस्य व्याख्याने– 'एतत्'पदस्य अर्थः । २) 'स्वरूपेण....घटाभाव इति'इत्यस्य व्याख्याने– क) उक्तप्रतीतीन प्राथम्यादिविषये नियामकतया 'कार्यभेद...भेदस्य'इत्यस्य अवतरणम् । ख) कार्यवैचित्र्यप्रदर्शकतया 'तथाच....घटाभाव इति'इत्यस्य अवतरणम् । ]

---

३. अनुव्याख्याने २–२–६ अधि. १३ सू. ३८६ पृ.

एतत्— 'प्रथमोपलब्धौ'इतिविशेषणम् ।

'ननु एवं सामग्रीवैचित्र्यकल्पनम् अप्रामाणिकम्'इत्यत आह **कार्यभेद-गम्यत्वादिति ।,**

कार्यवैचित्र्यमेव आह **तथाचेति ।**

[ १२ **के.** विषयः— स्वतन्त्रतत्त्वविभागनिरूपकटीकाव्याख्याने - भावाभावयोर्लक्षणे—

अ) विवक्षितप्रतीतेः-प्राथम्योपपादने— १) 'कुत एतत्'इत्यस्य व्याख्याने— क) 'प्रथम'पदविशेष्याभावशङ्कात्वेन अवतरणम् । ख) 'एतत्'-पदस्यार्थश्च । २) शङ्कापरिहारकतया 'स्वरूपेण....घटाभावः इति'इत्यस्य व्याख्याने— क) अवतरणम् । ख) 'स्वरूपेण....रूपान्तरम्'इत्यस्य पदार्थः भावश्च । ग) उक्तार्थनियामकनिर्देशकतया 'कार्यभेद....भेदस्य'इत्यस्य अव-तरणम् । घ) उक्तार्थनियामकप्रदर्शकतया 'तथाच....घटाभावः इति'इत्यस्य व्याख्याने— १. अवतरणम्; २. भावविषयकप्रतीतित्वेन 'अस्त्यत्र....शुक्ल इति'इत्यस्य अवतरणम्, ३. अभावविषयकप्रतीतित्वेन 'एवं....घटाभावः इति'इत्यस्य अवतरणम् ।

आ ) उक्तार्थस्य अभावे भावलक्षणातिव्याप्तिपरिहारकतया भावः ।

इ) भाव-अभाव लक्षणपरिष्कारे— सप्रयोजनम् अभावत्वस्य विशेषतः प्रतिषेधाकारेण प्रतीयमानत्वेन विवक्षणम् ।

ई) प्रकारान्तरेण भावाभावयोर्लक्षणे— प्रतीत्यनुपाधिक भावाभाव-स्वरूपकथनम् सप्रमाणम् । ]

**''ननु १] किं 'प्रतीतौ प्रथमं योऽस्ति'इत्येवं प्रथमग्रहणं कालविशे-षणम् अभिमतम् ? २] किंवा 'प्रथमा या प्रतीतिः'इति प्रतीतिविशेषणम् ?**

**नाद्यः; बुद्धेः विरम्यव्यापाराभावात् ।**

**द्वितीयेऽपि १) किम् इह जन्मनि स्वविषयिका या प्रतीतिः सा विवक्षिता ? २) किंवा एकसामग्रीजन्यासु स्वविषयिकासु या प्रथमप्रतीतिः**

सा ? ३) अथवा यदा यदा स्वयं जायते तदा तदा स्वविषयकं ज्ञान-द्वयम् अस्ति आपातजम्, विमर्शजञ्च; तत्र आपातजा या संवित् सा ?

१) नाद्यः; गिरिदरीविवरवर्तिनः गजाभावस्य ज्ञानात् पूर्वम् एव जातायाम् 'यत्प्रमेयम् तदस्ति'इत्यस्याम् सामान्याकारेण प्रमेयमात्र-विषयिकायाम् वन्यगजाभावस्य प्रथमम्-अस्तित्वप्रतीतेः, भावाभाव-लक्षणयोः अतिव्याप्तिप्रसङ्गात्[२] ।,

२) न द्वितीयः; एकसामग्र्या अनेकज्ञानजन्यत्वायोगात्, सामग्री-भेदाभावे कार्यभेदस्य आकस्मिकत्वप्रसङ्गात् ।,

३) तृतीयेऽपि; इमे 'अस्ति','नास्ति'इतिप्रतीती १. किम् 'अस्ति', 'नास्ति'इतिव्यवहारोत्पादिके ? २. किंवा अस्ति-नास्ति-पदार्थविषयिके ? ३. किंवा अस्ति-नास्ति-त्व-प्रकारिके ?

१. नाद्यः, अव्याप्तेः । ज्ञानस्य व्यवहारजनकत्वनियमाभावेन विवक्षितस्य 'अस्ति'इत्यादिप्रतीतिविषयत्वस्य अभावात्; उत्पन्नस्यापि ज्ञानस्य व्यवहारजिहीर्षाभावे व्यवहाराजनकत्वात् ।

२. न द्वितीयः; भावाभावलक्षणयोः अतिव्याप्ति-असम्भवापातात्; अभावस्य अस्ति-पदार्थत्वात् । अन्यथा कथं पश्चादपि 'घटाभावः अस्ति'इति प्रतीतिः ?

३. तृतीयेऽपि; के इमे अस्ति-नास्ति-त्वे– १– भावा-भावत्वे ? २– सत्त्वनिषेधत्वे वा ?

१– आद्ये अन्योन्याश्रयः ।,

२– द्वितीये; सत्ताऽनङ्गीकारेण[३] स्वरूप–सत्त्व-निषेधत्व-रूपे उभे अपि प्रत्येकं भावाभावे च विद्येते इति सिद्धान्तः; एवञ्च ते १- स्वरूपप्रतीती एव प्रतीयेते ? २- उत न ? –इतिवक्तव्यम् ।

---

२. अतिव्याप्त्यव्याप्ति ३. सत्तानङ्गीकरणस्वरूपसत्त्वानिषेधत्वरूपे ।

१- आद्ये स्वरूपसत्त्वस्य भावे इव अभावेऽपि प्रत्येतव्यत्वात्, निषेधत्वस्य च अभावे इव भावेऽपि प्रत्येतव्यत्वात्, अतिव्याप्तिः[४] ।

२- द्वितीये तु अतिव्याप्तिः । न हि 'भावे एव स्वरूपसत्त्वम् एव प्रथमं प्रतीयते; अभावे एव निषेधत्वम् एव प्रथमं प्रतीयते'इत्यत्र नियामकम् अस्ति ॥''

इतिभावेन शङ्कते **कुत इति** ।,

**एतदिति** । प्रथमप्रतिपत्तौ 'अस्ति'इत्युपलभ्यमानत्वादिकम्; इत्यर्थः । परिहरति **स्वरूपेण हीति** ॥,

'हि'शब्दो हेतौ । स्वरूपेण= धर्मितया इत्यर्थः ॥ ॥ **रूपान्तरेणेति** ॥, अभावभावरूपधर्मितया इत्यर्थः ॥ **निषेधविधिरूपाविति** । धर्मधर्मिणोः ऐक्यात्; इति भावः ।;

**स्वरूपमेवेति** । तदा रूपान्तरसामग्रीविरहात्; इति भावः ॥ **द्वितीयादीति** । तदा रूपान्तरप्रतीतिसामग्रीसमावेशात्; इति भावः ।,

ननु 'आपातजायां संविदि रूपान्तरप्रतीतिसामग्रीविरहः, द्वितीयादिप्रतीतौ तत्समावेशश्च'कुतः कल्प्यते ? इत्यत आह **कार्येति** ।

तदेव दर्शयति **तथाचेति** ।,

भावविषयं प्रतीतिद्वयं क्रमेण उदाहरति **अस्त्यत्रेति** ॥ अभावविषयं प्रतीतिद्वयं तथैव उदाहरति **एवमिति** ।

'घटाभावोऽस्ति'इत्यादिवाक्यादपि यदा घटाभावः अवगम्यते, तदाऽपि अवान्तरवाक्यार्थभूतप्रतिषेधाकारप्रतीत्युत्तरकालम् एव तदस्तित्वप्रतीतेः; न

---

४. अव्याप्तिः ।

अभावे भावलक्षणस्य अतिव्याप्तिः; –इति भावः।

ननु च

'स्वरूपं वस्तुनो भेदो यन्न तस्य ग्रहेऽग्रहः'

इति सिद्धान्ते धर्मिग्रहे गृह्यमाणत्वाभिधानात् प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते प्रथमत एव सर्वविलक्षणत्वेन वस्तुप्रतीत्यङ्गीकारात् च, भावलक्षणस्य अभावे अतिव्याप्तिरेव; इति चेत्; न, प्रथमतो भेदस्य स्वरूपेण-प्रतीतौ अपि विशेषप्रतिषेधाकारेण-प्रथमप्रतीयमानत्वाभावात्। अत एव उक्तम्–

'को विरोधः स्वरूपेण गृहीतो भेद एव तु।
अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यते ॥'

इत्यादि ॥ विशेषतः प्रतिषेधाकारेण प्रतीयमानत्वम् एव च अभावलक्षणतया अभिमतम् इति न अव्याप्तिः; इति ध्येयम्।

'अथापि स्यात्; स्वरूपभेदस्य प्रतीतिभेदनियामकत्वात्, स्वरूपभेदाभावे कथं प्रतीतिभेदनियमः? प्रतीत्युपाधिकस्वरूपभेदादेव प्रतीतिभेदे च स्फुटम् इतरेतराश्रयत्वम्' इति चेत्; न; अत्र 'पदार्थस्य अर्थे यः पिण्डः विधिधर्मिकः घटादिः सः भावः, यस्तु निषेधधर्मिकः प्रागभावादिः सः अभावः' इतिसुधोक्तरीत्या प्रतीत्यनुपाधिकभावाभावस्वरूपस्यापि वक्तुं शक्यत्वात् धर्मद्वारमन्तरेण धर्मिण एव विधित्वं भावत्वम्, धर्मद्वारमन्तरेण धर्मिण एव निषेधश्च अभावः इति। तथाच घटादीनां प्रागभावादीनां भावाभावरूपत्वेऽपि;

---

५. अनुव्याख्यानम् २–२–८–२९ अस्य सुधोक्तान्वयश्च यत्=यस्मात्, वस्तुनः, ग्रहे, तस्य-भेदस्य, अग्रहः नास्ति; तस्मात् भेदः वस्तुनः स्वरूपम् इति। सुधा ४०७ पृष्ठे। ६. इति च प्रथमतो
७. ब्र.सू.२-२-८-२९ अनुव्याख्याने ८.सुधा २-१-४-८ पृ.२८६सां.९पं.

घटादीनां धर्मिरूपेण विधित्वात्[9] भावत्वमेव, प्रागभावादीनां च तद्रूपेण निषेधरूपत्वात् अभावत्वमेव; इति युक्त एव भावाभावनियमः, यत् 'घटादिः भाव एव प्रागभावादिः अभाव एव' इति ।,

प्रथमप्रतिपत्तिस्तु भावाभावनियामकत्वेन उक्ता । अत एवोक्तम्—

'प्रथमप्रतिपत्तिस्तु भावाभावनियामिका'

इत्यादि[10] । इति सर्वम् अनवद्यम् ।

[ १२ वि. विषयः— अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने— भावाभावयोर्लक्षणे—

अ) भावाभावलक्षणानुपपत्तिशङ्कात्वेन 'कुत एतत्' इत्यस्य— क) अवतरणम् । ख) अर्थः । ग) भावश्च ।

आ) शङ्कापरिहारकतया 'स्वरूपेण...घटाभाव इति' इत्यस्य व्याख्याने— १) 'स्वरूपेण....निषेधविधिरूपौ' इत्यस्य— क) अवतरणम् । ख) पदार्थः, शेषः,वाक्यार्थश्च । ग) अभिप्रायः । घ) 'अन्य' आदिपदानाम्— १. क्वचित् भेदप्रतिनिधि-विशेष-प्रवृत्तिनिमित्तकत्वम्; २. अस्मिन्नर्थे सम्मतिपरतया— क) अनुव्याख्यान-सुधा-प्रदर्शनम्, तदर्थश्च । ख) मायावादखण्डनटीका-प्रदर्शनम्, तदर्थश्च । २) उक्तार्थस्य प्रकृतसम्बन्ध-प्रदर्शकतया 'तत्र..........सामग्रीभेदस्य' इत्यस्य व्याख्याने— क) अवतरणम् । ख) 'तत्र....अवभासते' इत्यस्य पदार्थः । ग) 'द्वितीयादि....रूपान्तरम्' इत्यस्य १. अवतरणम, २. अर्थः ३. भावश्च । घ) उक्तार्थप्रमापकतया 'कार्य-गम्यत्वात्सामग्रीभेदस्य' इत्यस्य— १. अवतरणम्, २. अर्थः, भावश्च । ३) उक्तक्रमानुसारिप्रतीतिप्रदर्शकतया 'तथाच .... घटाभाव इति' इत्यस्य व्याख्याने— क) अवतरणम्, पदार्थः । ख) 'घटाभाव' पदार्थविचारे— १. 'घटाभाव'-पदस्य 'घटध्वंस' परत्वम् २. घटात्यन्ताभावपरत्वाभावः सोपपत्तिकः; ३. 'अप्रामाणिकस्यैव अत्यन्ताभावप्रतियोगित्वम्' इतिसाधने— क. देशान्तर-संसृष्टप्रतियोगिकत्वादिना घटात्यन्ताभावस्य व्यवस्था, ख. विशिष्टनिषेधस्य प्यप्रतियोगिकत्वे बाधिते विशेषणसत्सम्बन्धप्रतियोगिकत्वमिति व्यवस्था । ]

---

९. विधित्वाभाववत्त्वमेव १०. अनुव्याख्याने ३-३-२९-४८ पृ.४३८

भावाभावयोः उक्तलक्षणानुपपत्तिम् आशङ्कते **कुत एतदिति ।**

एतत्- भावाभावयोः क्रमेण प्रथमम्'अस्ति'इतिप्रतीतिविषयत्वं प्रथमं 'न'इतिप्रतीतिविषयत्वं च, कुतः= कस्मात् हेतोः ? = न कुतोऽपि इत्यर्थः। भावाभावयोः भावाभावरूपत्वस्यापि स्वरूपात्, उभयरूपे भावे अभावे च विरुद्धत्वात्, लक्षणद्वयं न सम्भवति; इति भावः ॥

परिहरति **स्वरूपेण हीति ।;**

'हि'शब्दः 'यस्मात्'इत्यर्थे वर्तते । 'तस्मात्'इति शेषः । हि= यस्मात्, स्वरूपेण भावाभावौ विधिनिषेधात्मानौ, रूपान्तरेण निषेधविधिरूपौ, तस्मात्; इति पूर्वेण अन्वयः। भावाभावौ; स्वरूपेण– स्वस्वरूपं स्वरूपम् 'भावाभाव'शब्दाभिधेयं धर्मिभूतं रूपम् इति यावत्, तेन धर्मिभूतरूपेण; निषेधविधिरूपौ= क्रमेण अभावभावरूपौ इत्यर्थः ।;

इदमुक्तं भवति ॥– घटाभावरूपपदार्थानां घटादिपदाभिधेयं घटादि-व्यक्तिरूपं यत् धर्मिभूतं स्वरूपम्, स्वस्य रूपत्वात् 'स्वरूपम्'इति उच्यते। धर्मधर्मिणोः अभेदात् धर्मभूतगुणक्रियाजात्यादिरूपं तु घटादिपदाभिधेय-व्यक्तिरूपधर्मान्यगुणादिधर्मरूपत्वात् 'रूपान्तरम्'इति उच्यते ॥ **तथाच** घटादेः भावस्य 'घट'आदिपदाभिधेयं यत् धर्मिभूतं निर्विशेषरूपं तेन भाव-रूपता, रूपान्तरेण– 'भाव'पदानभिधेय-अभावरूपधर्माणां यत् रूपं तेन रूपेण तु अभावात्मकता; एवम्– घटाद्यभावस्य स्वरूपेण 'अभाव'पदाभिधेय-अभावव्यक्तिरूपम् यत् धर्मिभूतं निर्विशेषरूपम् तेन रूपेण अभावरूपता, रूपान्तरेण 'अभाव'पदाभिधेय-अभावव्यक्त्यन्योन्याभावत्व-सत्त्वज्ञेयत्वादिरूप--भावरूपधर्माणां यत् सविशेषरूपं तेन रूपेण भावरूपता; इति ।,

ननु धर्मधर्मिणोः अभेदात् गुणक्रियाजात्यन्योन्याभावादिधर्माणां घटादिव्यक्तिरूपधर्म्यन्यत्वाभावात्, गुणक्रियाजात्यन्योन्याभावादिरूपधर्मरूपस्य

कथं धर्म्यन्यधर्मत्वरूपम् रूपान्तरत्वम् ? इति चेत्; न, 'अन्य'आदि-पदानाम् उत्सर्गतो भेदप्रवृत्तिनिमित्तकत्वेऽपि क्वचित् भेदप्रतिनिधिविशेषप्रवृत्ति-निमित्तकत्वस्यापि सत्त्वात् ।,

तदुक्तम् अनुव्याख्याने[1]—

'भेदशब्दा विशेषं तु हरावन्यत्र भिन्नताम् ।
ब्रूयुर्हरेर्जीवजडैरपि भेदं हि मुख्यतः ॥
ब्रह्मतर्कवचोऽप्येवम् ।'

इति ॥ उक्तं च सुधायाम्[2]— " 'विशेषः भेदकार्यं व्यवहारादिकं निर्वहति'इति पूर्वमेव उक्तम् । 'भिदा'निष्ठम् आगमं च आह 'भेदाशब्दा'इति । भेद-निमित्ताः 'अन्य'आदिशब्दाः भेदशब्दाः ॥ 'हरौ विशेषं ब्रूयुः'इत्यस्य अप-वादम् आह 'हरेः'इति ॥ एवम् अन्यत्रापि 'भिन्नताम्'इत्यस्य अपवादो द्रष्टव्यः ।"इति ॥ भेदनिमित्ताः= भेदप्रवृत्तिनिमित्तकाः; इति सुधा-वाक्यार्थः; ।

उक्तं च मायावादखण्डनटीकायाम्[3]— 'यतो रूपं घटाभिन्नमपि[4] तद्वि-शेषतया अङ्गीक्रियते, न तु तन्मात्रम्; इति ।' = "यतः= यस्माद्धेतोः, अस्माभिः, रूपम्, घटाभिन्नम्, अपि; तद्विशेषतया= स चासौ विशेषश्च तद्विशेषः- घटरूपविशेषः इति यावत् तस्य भावः तत्ता तया ।, यद्वा तस्मात् घटात्, विशेषः— भेदप्रतिनिधिः,. यस्य तत्, तद्विशेषणम्; तस्य भावः तत्ता, तया- सविशेषतया; इति यावत् ।; 'घटाभिन्नम्'इति अनुवर्तते ।; सविषेशतया घटाभिन्नम् अङ्गीक्रियते; इत्यर्थः । न तु तन्मात्रम् = 'घट' पदाभिधेयं यत् व्यक्तिस्वरूपं यावत् तावदेव न ।"इति मायावादखण्डनटीका-वाक्यार्थः ।

---

१. १-१-१३  २. पृ.१३१ सां.१३पृ.
३. मा.ख.टी. ४ पृष्ठे ।  ४. 'घटादिभिन्नमपि'इति ग्रन्थत्रये ।

ननु अस्तु नाम भावाभावयोः स्वरूपेण विधिनिषेधरूपता, रूपान्तरेण निषेधविधिरूपता च; तथापि किं प्रकृते ? इत्यत आह **तत्रेति** ।,

स्वरूपरूपान्तरयोः मध्ये, आपातजायां संविदि = प्रथमप्रतीतौ, स्वरूपम् एव = 'भाव','अभाव'पदाभिधेयं निर्विशेषं धर्मिभूतं स्वीयं रूपम् एव, अवभासते= स्फुरति; न तु, रूपान्तरम्= सविशेषाभिन्नं धर्मभूतं रूपम् इत्यर्थः ॥ 'तर्हि कुत्र प्रतीयते ?' इति जिज्ञासायाम् आह **द्वितीयादिप्रतीताविति** । रूपान्तरम्= अभावपदाभिधेयम् सविशेषं भावाभावयोः धर्मभूतं रूपम् अवभासते इत्यर्थः । भावाभावयोः अभावरूपत्वेऽपि धर्मिरूपेण अभावरूपत्वाभावात् उक्तलक्षणद्वयं क्रमेण तत्र सम्भवति; इति भावः ।;

ननु 'आपातजायां संविदि स्वरूपम् अवभासते, रूपान्तरं तु द्वितीयादिप्रतीतौ भासते;'इति कुतः; रूपद्वयप्रतीतिसामग्रीभेदे मानाभावात् ? इत्यत आह **कार्यगम्यत्वादिति** । क्रमेण-जायमानप्रतीतिद्वयरूपकार्यानुमेयत्वात् रूपद्वयप्रतीतिसामग्रीभेदस्य; इत्यर्थः । प्रतीतिरूपकार्यभेद एव तत्सामग्रीभेदे मानम् इति भावः ।

ननु स्वरूपरूपान्तरयोः क्रमेण-प्रतीतिः एव असिद्धा; इत्यत आह **तथा च प्रतीतिरिति** ।;

तथाच= तथैव= उक्तप्रकारेणैव; 'अत्र घटोऽस्ति'इति प्रथमं प्रतीतिः, अनन्तरम् 'स घटः शुक्लो न'इति प्रतीतिः; एवम् आदौ अभावस्य 'अत्र घटो नास्ति'इति प्रतीतिः, अनन्तरम् 'अत्र घटाभावोऽस्ति'इति प्रतीतिः, भवति; इत्यर्थः ।,

'घटाभावः'इत्यनेन घटस्य ध्वंसो गृह्यते न तदत्यन्ताभावः, 'अस्ति' इतिप्रमितस्य घटादेः कालत्रयवर्तिनिषेधरूप-अत्यन्ताभावप्रतियोगित्वाभावात् ।

अन्यथा 'नास्त्येव शशविषाणम्'इतिप्रतीतिवत्, 'कालत्रयेऽपि नास्ति शशविषाणम्'इतिप्रतीतिवच्च 'नास्त्येव घटः'इतिप्रतीतिः, कालत्रयेऽपि नास्ति घटः'इतिप्रतीतिश्च घटस्य स्यात्; 'कालत्रयेऽप्यसदस्ति'इतिवचनस्य व्याहतत्वेन 'अस्ति'इतिप्रमितस्य घटादेः कालत्रयासत्त्वरूपअत्यन्ताभावप्रतियोगित्वायोगात् । अन्यथा घटस्य स्वकाले इव स्वदेशेऽपि अत्यन्ताभावस्य सत्त्वापातात् ।,

ननु तर्हि यत्र नास्ति घटध्वंसः तत्र 'तत्र भूतले घटो नास्ति'इतिप्रतीतेः निर्विषयता स्यात्; इति चेत्; न, 'इह भूतले घटोऽस्ति'इतिप्रतीतेः एतद्भूतलसंसृष्टघटविषयकत्वेन तद्विरुद्धायाः 'इह भूतले घटो नास्ति'इतिप्रतीतेः अपि एतद्भूतलसंसृष्टघटनिषेधविषयकत्वात् ।, अन्यथा देशान्तरसंसृष्टघटनिषेधविषयकत्वे देशान्तरसंसृष्टस्य घटस्य दत्तजलाञ्जलितापातात् । 'अत्यन्ताभावः स्वदेशसंसृष्टघटविरोधी, न तु देशान्तरसंसृष्टघटविरोधी; इति नोक्तदोषः'इति चेत्; तर्हि सिद्धम् एतद्देशस्थघटात्यन्ताभावस्य स्वविरुद्धएतद्देशसंसृष्टघटप्रतियोगिकत्वम् ॥ **तथाच** एतद्देशसंयुक्तः घटः यदि प्रमितः तर्हि तस्य तत्र त्रैकालिकनिषेधरूप-अत्यन्ताभावो न युक्त एव; इति 'अप्रमित एव एतद्देशसंयुक्तो घटः तत्प्रतियोगी'इति अवश्यम् अभ्युपेयम्; इति सिद्धम् अप्रामाणिकस्यैव अत्यन्ताभावप्रतियोगित्वम् ।

किञ्च एतद्देशसंसृष्टघटनिषेधस्तु; घटस्य स्वदेशे इव स्वकालेऽपि 'अस्त्येव घटः'इतिप्रत्यक्षबाधितत्वेन घटकालीनस्यास्य अभावस्य घटप्रतियोगिकत्वाभावात्, एतद्देशघटसंसर्गप्रतियोगिक एव अभ्युपेयः; विशिष्टनिषेधस्य विशेष्यप्रतियोगिकत्वे बाधिते विशेषणसत्सम्बन्धप्रतियोगिकत्वस्य 'स्वर्गी ध्वस्तः','स्वर्गी भविष्यति'इत्यादि-प्रतीति-विषय-निषेधे व्यवस्थितत्वात् । इत्येषा दिक् ।

[ १२ मु. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने भावाभावयोर्लक्षणे–

अ) भावाभावलक्षणोक्तार्थानुपपत्तिशङ्कात्वेन 'कुत एतत्' इत्यस्य अवतरणम् ।

आ) शङ्कासमाधायकतया 'स्वरूपेण....घटाभाव इति' इत्यस्य व्याख्याने १) अवतरणम् । २) 'स्वरूपेण....निषेधविधिरूपौ' इत्यस्य– अर्थः, अभिप्रायश्च । ३) 'तत्र....सामग्रीभेदस्य' इत्यस्य व्याख्याने– क) 'विधिनिषेधरूपयोः भावाभावयोः निर्विशेषात्यन्ताभिन्नरूपत्वम्' इत्यभिप्रायेण 'तत्र.......रूपान्तरम्' इत्यस्य– अवतरणम्, अर्थः, भावश्च । ख) तयोः निर्विशेषात्यन्ताभिन्नत्वोपपादकतया 'कार्य....भेदस्य' इत्यस्य– अवतरणम्, अर्थः, भावश्च । ग) उक्तकार्यभेदप्रदर्शकतया 'तथाच....घटाभाव इति' इत्यस्य अवतरणम् । ]

'ननु उभयोः विधिनिषेधत्वम् अयुक्तम् विरुद्धत्वात्; अविरुद्धत्वे वा भावस्य विधित्वेन प्रतीयमानत्वम्, अनन्तरं निषेधत्वेन प्रतीयमानत्वम्, अभावस्य उक्तव्युत्क्रमेण प्रतीयमानत्वम् निर्बीजम्' इति आक्षिपति कुत **एतदिति** ॥

समाधानमाह **स्वरूपेणेति** ।

निर्विशेषात्यन्ताभिन्नरूपेण इत्यर्थः ॥ **रूपान्तरेणेति** । सविशेषात्यन्ताभिन्नरूपेण इत्यर्थः । रूपभेदेन एकैकस्य उभयरूपत्वात् न विरोधः; इति भावः ।;

विधिरूपस्य निषेधरूपस्य भावाभावयोः निर्विशेषात्यन्ताभिन्नरूपत्वादेव तत्तत्प्रतीतौ तयोः प्रथमप्रतीतित्वं[1] युक्त्या आह **तत्रापातजायामिति** । 'अत एव' इति उपस्कर्तव्यम् । स्वरूपमेव– विधिरूपमेव, निषेधरूपमेव;

---

१. प्रथमप्रतीत्युत्पादि

रूपान्तरम्– निषेधविधिरूपम्; इत्यर्थः ॥ भावाभावसम्बन्धिनोः विधिनिषेधरूपयोः प्रथमादिप्रतीत्या एव भावाभावाभ्यां निर्विशेषात्यन्ताभिन्नत्वादिकं कल्प्यते; इति भावः ।,

अप्रयोजकया प्रथमादिप्रतीत्या विधिनिषेधरूपयोः निर्विशेषात्यन्ताभिन्नत्वादिकं कुतः कल्प्यते ? इत्यत आह कार्येति । कार्यभेदगम्यत्वात् इत्यर्थः । अन्यथा प्रथमादिलक्षणकार्यभेदस्य आकस्मिकत्वप्रसङ्गः; इति भावः ।;

कार्यभेदमेव अभिनयेन दर्शयति **तथाचेति** ।

[ १२ का. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने– भावाभावयोर्लक्षणे–

अ) उक्तार्थे प्रमाणप्रश्नात्मकः 'कुत एतत्'इत्यस्य अर्थः ।

आ) 'कार्यवैचित्र्यमेव तत्र प्रमाणम्'इत्यर्थकतया 'स्वरूपेण....घटाभाव इति'इत्यस्य व्याख्याने– १) अवतरणम् । २) 'स्वरूपेण....विधिरूपौ'इत्यस्य अर्थः, तात्पर्यञ्च । ३) उक्तार्थस्य प्रकृतसम्बन्धप्रदर्शकतया 'तत्र..... घटाभाव इति'इत्यस्य व्याख्याने – क) अवतरणम् । ख) 'तत्र..... रूपान्तरम्'इत्यस्य भावः । ग) उक्तभावोपपादकतया 'कार्य....भेदस्य'इत्यस्य– १. अवतरणम्, २. भावः ३. अर्थोपपादनम्, ४. भावश्च । ४) उक्तार्थोपपादकतया 'तथाच....घटाभाव इति'इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'न शुक्ल इति'इत्यस्य भावः ।

इ) 'प्रतीति'घटितलक्षणस्य प्रयोजनम् । ]

**कुत एतदिति** । 'प्रथमप्रतीतौ एकस्य विधित्वेनैव भानम् अन्यस्य निषेधत्वेनैव भानम्'इत्येतत्, कुतः प्रमाणात् ? इत्यर्थः ॥

अत्र वस्तुस्वरूपवैचित्र्यमेव नियामकम् इत्याह **स्वरूपेण हीति** ।

भावः घटादिः निर्विशेषसविशेषरूपेण विधिः सविशेषरूपेण निषेधः; अभावस्तु प्रागभावादिः तद्विपरीतः; इत्यर्थः । भावस्य विधित्व-

निषेधत्वे निर्विशेषसविशेषरूपे; अभावस्य तु तद्विपरीते; इति यावत् । विशेषश्च अत्र प्रथमप्रतीतिविषयाविरोधी ग्राह्यः ।

ततः किम् ? इत्यत आह **तत्रेति ।;**

स्वरूपरूपान्तरयोः मध्ये अक्षसन्निकर्षमात्राधीनायां प्रतीतौ स्वरूपोपाधिना एव वस्तुभानम्, न तु रूपान्तरोपाधिना; तद्भासकसामग्र्यभावात्; इति भावः । एवञ्च घटादिप्रतीतौ घटत्वादेः भानम् उपपद्यते; तस्य स्वरूपोपाधित्वात् ।,

स्वरूपरूपान्तरभासकसामग्रीभेद एव कुतः ? इत्यत आह **कार्येति ।** कार्यवैचित्र्यगम्यत्वात् इत्यर्थः । अन्यथा कार्यवैचित्र्यानुपपत्तेः । स्वरूपप्रतीतिसहकृतसन्निकर्षादिकम् एव रूपान्तरभासकसामग्री; इति भावः ।

कार्यवैचित्र्यम् एव दर्शयति **तथाचेति ।। न शुक्ल इति ।** भेदस्य धर्मिस्वरूपत्वेऽपि निषेधत्वेन प्रतीतिः पश्चादेव; इति भावः ।।

यद्यपि एवं स्वरूपेण विधित्वनिषेधत्वयोः एव भावाभावलक्षणत्वं सम्भवति तथापि तयोः प्रसिद्ध्ये 'प्रतीति' घटितलक्षणम्; इत्यवधेयम् ।

**१२ भ.** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने– भावाभावलक्षणे–

अ) 'प्रथमप्रतीतौ', 'प्रथमोपलब्धौ' इतिविशेषणकृत्यप्रश्नपरतया 'कुत एतत्' इत्यस्य अवतरणम् ।

आ) तत्कृत्यप्रदर्शकतया 'स्वरूपेण....घटाभाव इति' इत्यस्य व्याख्याने १) उक्तविशेषणादाने-परस्परातिव्याप्तिप्रदर्शकतया 'स्वरूपेण....विधिरूपौ'-इत्यस्य अवतरणम्, अर्थः, भावश्च । २) उक्तविशेषणेन परस्परातिव्याप्तिप्रदर्शकतया 'तत्र....घटाभाव इति' इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'तत्र....रूपान्तरम्' इत्यस्य अर्थः । ग) 'कार्य....भेदस्य' इत्यस्य व्याख्याने

भावाभावयोः उक्तप्रकारेण उभयरूपत्वे प्रमाणोक्तिपरतया– १. अवतरणम्, २. आशयश्च । घ) उक्तप्रमाणोपपादनपरतया 'तथाच....घटाभाव इति'-इत्यस्य अवतरणम् । ३) अभिप्रायः । ४) भावाभावयोः उक्तप्रकारेण विधिनिषेधरूपत्वे अनुमानप्रयोगाः । ५) 'नास्तीति प्रतीयते'इत्यस्य परप्रतिक्षेपपूर्वकप्रतीतिविषयतामात्रे तात्पर्यम् ।

इ) 'उपलम्भ'ग्रहणकृत्यम् । ]

ननु 'भू सत्तायाम्'इतिधातोः 'भवति अस्ति'इतिव्युत्पत्त्या अस्तित्वस्य विध्यपरनामकस्य 'भाव'शब्दप्रवृत्तिनिमित्तत्वात् " 'अस्ति'इत्युपलभ्यते यः स भावः "इत्येतावदेव लक्षणम् अस्तु; 'प्रथमप्रतीतौ'इतिविशेषणं कुतः? एवम् 'भवनम्= भावः; तद्विरुद्धः= अभावः'इतिव्युत्पत्त्या, प्रतियोगिसत्ताविरोधित्वरूप'नास्तित्व'ापरनाम्नः निषेधस्य 'अभाव'शब्दार्थत्वेन " यः 'नास्ति'इत्युपलभ्यते सः अभावः''इत्येतावता एव अलम्; 'प्रथमोपलब्धौ'-इति कुतः? इतिभावेन पृच्छति **कुत एतदिति** ॥

'परस्परातिव्याप्तिपरिहारार्थम्'इतिभावेन अतिव्याप्तिप्रकारं तावत् दर्शयति **स्वरूपेण हीति** ।

स्वरूपेण= धर्मिरूपेण

'भावत्वं विधिरूपत्वं निषेधत्वमभावता ।'

इति अनुव्याख्यानात्[1]; इति भावः ।,

**रूपान्तरेणेति** । धर्मरूपेण इत्यर्थः । तथाच **भावस्यापि धर्मरूपेण निषेधात्मकत्वेन निषेधोपलम्भविषयत्वात्, अभावस्यापि** धर्मरूपेण विध्यात्मकतया विधिबुद्धिगोचरत्वात्; तावन्मात्रोक्तौ **लक्षणयोः परस्परम्** अतिव्याप्तिः स्यात्; इति भावः ।

१. ३–३–२९–४८ पृ. ४३८

एवं तर्हि 'प्रथम'इतिविशेषणदाने कथम् अतिव्याप्तिपरिहारः जातः ? इत्यतः तत्प्रकारं दर्शयितुम् आह **तत्रेति** ।;

**तथाच प्रथम**प्रतीतिः यं पदार्थं विधितया परप्रतिक्षेपरूपतां विना विषयी करोति, सः विधिरूप एव, इति असौ भाव एव; यं च निषेधतया परप्रतिक्षेपरूपत्वेन विषयीकरोति, सः निषेधस्वरूप एव, इति असौ अभाव एव इत्यर्थः ।,

स्यादेतत्; यदि भावाभावयोः स्वरूपेण विधिनिषेधात्मकत्वम्, रूपान्तरेण निषेधविधिरूपत्वम् भवेत्; तत्रैव किं प्रमाणम् ? इत्यत आह **कार्यगम्यत्वादिति** । कार्ये हि वैलक्षण्यदर्शने 'तत्सामग्र्यामपि वैलक्षण्यम् अस्ति'इत्यनुमीयते एव; यथा घटपटरूपकार्यवैलक्षण्यदर्शने तत्सामग्र्योः वैलक्षण्यम्, एवं प्रकृतेऽपि कार्यवैलक्षण्यदर्शनेन तदुपपादकसामग्र्यन्तर्भूते विषयवैलक्षण्यम् अनुमीयते; इत्याशयः ।;

कार्यवैलक्षण्यम् एव प्रपञ्चयति **तथाचेति** ।

इदमुक्तं भवति ॥– आपातजायां संविदि स्वरूपमेव भासते इति तावत् निष्टङ्कितम् ॥ 'अस्त्यत्र घटः'इति च प्रतीतिः आपातजा । घटादिस्तु भावः इति प्रसिद्धम् एव । स च विधिस्वरूपः न चेत्, कथम् उक्तप्रतीतौ 'अस्ति'इति भायात् ? एवम् 'नास्त्यत्र घटः'इतिप्रतीतिः अपि आपातजा । प्रागभावादिस्तु अभावः इति प्रसिद्धम् एव । स च निषेधस्वरूपः न चेत्, कथम् उक्तप्रतीतौ 'नास्ति'इति भायात् ? अतो ज्ञायते 'भावाभावौ स्वरूपतो विधिनिषेधरूपौ'इति ।,

एवम् द्वितीयादिप्रतीतौ एव रूपान्तरं भासते इत्यपि निष्टङ्कितम् । 'घटो न शुक्लः'इति च प्रतीतिः न आपातजा; घटरूपधर्मिणः अस्तित्वज्ञानं विना शौक्ल्याभावानवगाहनात् । शौक्ल्याभावश्च निषेधः इति प्रसिद्धम्

एव । स च घटस्य रूपान्तरं न चेत्, कथम् अनन्तरजायां संविदि भायात्? कथं वा प्रथमप्रतीतौ न भासेत्? एवम् 'अस्ति घटाभावः'इति प्रतीतिः अपि न आपातजा; 'नास्त्यत्र घटः'इति घटाभावरूपधर्मिज्ञानं विना तदस्तित्वानवगाहनात्। अस्तित्वं भावरूपम् एव इति प्रसिद्धम् एव। तच्च घटाभावस्य रूपान्तरं न चेत्, कथम् अनन्तरजायाम् एव प्रतीतौ प्रतीयेत? अतो ज्ञायते 'निषेधविधी भावाभावयोः रूपान्तरम् एव'इति।

अत्र इमे प्रयोगाः ॥– भावः विधिस्वरूपो भवितुमर्हति आपातजायां संविदि 'अस्ति'इतिभासमानत्वात् व्यतिरेकेण अभाववत्। भावः रूपान्तरेणैव निषेधरूपः न तु निषेधस्वरूपः द्वितीयादि प्रतीतौ एव परप्रतिक्षेपरूपेण भासमानत्वात् व्यतिरेकेण अभाववत् ॥ अभावः निषेधरूपः भवितुमर्हति आपातजायां संविदि 'नास्ति'इतिभासमानत्वात् व्यतिरेकेण भाववत्। अभावः रूपान्तरेणैव विधिरूपः न तु विधिस्वरूपः द्वितीयादिप्रतीतावेव 'अस्ति'इतिभासमानत्वात् व्यतिरेकेण भाववत् ॥ इति।

ननु भावे ''नास्ति'इतिनिषेधोपलम्भविषयत्वरूप-अभाव-लक्षणस्य अतिव्याप्त्युपपादनार्थम् यत् निषेधार्थकत्वं भावस्य उपपादितम् तत् अनुपपन्नम्; 'घटो न शुक्लः'इत्येतद्धि भावस्य निषेधात्मकत्वे उदाहरणम्, तत्र च शुक्लान्योन्याभाव एव प्रतीयते न प्रागभावादिः, प्रागभावादिः एव हि 'नास्ति'इत्युपलम्भविषयः न अन्योन्याभावः, अन्योन्याभावस्तु 'न भवति'इति प्रतीतिविषयः 'घटः पटो न भवति'इत्येव व्यवहारदर्शनात्; तत्कथम् अन्योन्याभावात्मके अभावे 'नास्ति'इत्युपलम्भविषयत्वम्? इति। **मैवम्** 'नास्तीति प्रतीयते'इत्यस्य परप्रतिक्षेपपूर्वकप्रतीतिविषयतामात्रे तात्पर्यात्, अन्योन्याभावस्यापि तथात्वानपायात्; इति ॥

नन्वेवम् भावाभावयोः धर्मिरूपेण विधिनिषेधात्मकत्वे 'विधिधर्मिकः भावः','निषेधधर्मिकः अभावः'इत्येव लक्षणम् अस्तु; किं तथा उपलम्भ-

पर्यन्तानुधावनेन ? तत्रापि 'प्रथमप्रतीतौ'इत्यनेन ? सति च एवं लक्षण-करणे '' 'भावाभावौ'इत्युद्देशेनैव तल्लक्षणम् अपि लब्धम् 'इत्यभिप्रायोऽपि मुख्यत एव अनुरुद्धः स्यात्; इति चेत्; सत्यम्; तथापि भावाभावयोः उक्तरीत्या मिथः उभयात्मकत्वेन 'घटादिः भाव एव; प्रागभावादिः अभाव एव'इतिनियमनिबन्धनप्रमाणाकाङ्क्षायाम् लक्षणोक्त्या एव तां निवर्तयितुम् एवम् उपलम्भादिपर्यन्तानुधावनम्; शङ्कितलक्षणकरणे तु न तदाकाङ्क्षा-निवृत्तिः, अस्य लक्षणस्य प्रमेयरूपत्वेन प्रमाणसूचकत्वाभावात्; यदा तु उक्तरूपनियमे प्रमेयरूपनिबन्धनाकाङ्क्षा तदा शङ्कितलक्षणकरणेऽपि न दोषः इत्याशयात् । अत एव सुधायाम्

' प्रथमप्रतिपत्तिषु ।
निषेधविधिरूपत्वं भावाभावत्वमत्र हि ॥'

इत्यनुव्याख्यानम्[२] उभयलक्षणपरतयाऽपि व्याख्यातम् ।

[ १३ टी. विषयः— अस्वतन्त्रतत्त्वविभागनिरूपणे— अस्वतन्त्रतत्त्व-विभागपरीक्षायाम्—

१) अस्वतन्त्रतत्त्वस्य भावाभावत्वेन विभागे अनिष्टापादने— क) स्वतन्त्रतत्त्वस्य भावत्व-अभावत्व-तदुभयान्यत्वानाम् विकल्पः । ख) तत्त्र-याणामपि अनुपपत्तिः । २) अनिष्टापत्तिनिरासः । ३) तदनिष्टापादनानव-काशपरतया अध्याहृत'एव'कारस्य अन्वयश्च । ]

**ननु स्वतन्त्रतत्त्वम् भावः ? अभावः ? अन्यद्वा ? नाद्य-द्वितीयौ, भावाभावयोः परतन्त्रप्रभेदत्वात्; न तृतीयः, व्याघातात् ॥ मैवम्; भावलक्षणाऽऽक्रान्तत्वात् । 'परतन्त्रम् भावाभावतया द्विधा एव, न पुनः एकविधम्, नापि त्रिविधम्'इत्येवंपरो विभागः; न पुनः 'परतन्त्रमेव भावाभावात्मकम्'इति ।**

---

२. अनुव्याख्यानम् २–१–४–८ पृ.३७१.

[ १३ ख. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– अस्वतन्त्रतत्त्वविभागपरीक्षायाम्–

१) 'ननु....व्याघातात्'इत्यस्य शङ्काग्रन्थस्य व्याख्याने– क) 'भावाभावयोः....प्रभेदत्वात्'इत्यस्य भावः । ख) 'व्याघातात्'इत्यस्य भावः ।

२) 'मैवम्....भावाभावात्मकमिति'इत्यस्य शङ्कासमाधानग्रन्थस्य व्याख्याने– क) प्रथमविकल्पाङ्गीकरणपूर्वकम् शङ्कासमाधायकतया अवतरणम् । ख) शेषपूरणम् । ग) प्रथमविकल्पाङ्गीकरणपक्षे विरोधपरिहारकतया 'परतन्त्र....भावाभावात्मकमिति'इत्यस्य अवतरणम् । ]

**भावाभावयोरिति ।** अन्यथा स्वतन्त्रतत्त्वस्य परतन्त्रविभागापत्तेः; इति भावः ।

**व्याघातादिति ।** भावान्यत्वे अभावत्वप्राप्त्या, पुनः तन्निषेधे व्याघातात्; इति भावः ॥

प्रथमपक्षम् अङ्गीकृत्य समाधत्ते **मैवमिति ।**

'भावलक्षणाक्रान्तत्वात्'इत्यनन्तरम् 'स्वतन्त्रतत्त्वं भाव एव'इति शेषः । ननु तस्य भावत्वे परतन्त्रविभागविरोधः स्यात्; इत्यत आह **परतन्त्रमिति ।**

[ १३ के. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– तद्विभागपरीक्षायाम्–

१) 'ननु....व्याघातात्'इतिशङ्काग्रन्थव्याख्याने– क) अध्याहृत'एव'-कारस्य सोदाहरणम् सम्बन्धभेदेनार्थभेदप्रदर्शनपूर्वकम् 'स्वतन्त्रतत्त्वस्य भावत्वाद्यसम्भवात् उक्तास्वतन्त्रतत्त्वविभागोऽयुक्तः'इतिभावार्थकशङ्कात्वेन अवतरणम् । ख) 'व्याघातात्'इत्यस्य अर्थरूपेण व्याघातप्रदर्शनम् । २) 'मैवम्....भावाभावात्मकमिति'इत्यस्य व्याख्याने– क) 'स्वतन्त्रतत्त्वस्य भावत्वसम्भवात् न उक्तविभागानुपपत्तिः'इत्याशयकसमाधायकतया अवतरणम् । ख) 'भावलक्षणाऽऽक्रान्तत्वात्'इत्यस्य व्याख्याने– १. शेषः, २. अनुवृत्तिः,

३. विपक्षे-बाधकरूपो भावश्च । ग) 'परतन्त्र....भावाभावात्मकमिति' इत्यस्य उदाहरण-नियमादिपुरःसर-आशयकथनपूर्वकम् अवतरणम् । ]

"ननु च तत्त्वस्यैव च 'तत्त्वं द्विविधम्; भावोऽभावश्च' इतिभावाभावतया विभागः युक्तः, स्वतन्त्रतया अभिमतस्य विष्णोः तथात्वे एव भावत्वादिसिद्धिसम्भवात्; न तु परतन्त्रस्य तथा विभागः, तथा सति विष्णोः भावत्वाद्यसिद्धिप्रसङ्गात् ।, 'भावाभावौ द्विधेतरत्' इतिन्यूनाधिकसङ्ख्याव्यवच्छेदकविभागस्य 'परतन्त्रमेव भावाभावतया द्विविधम्' इत्येवंपरत्वावश्यंभावेन, 'पार्थ एव धनुर्धरः' इत्यादौ विशेष्यसङ्गत'एव'कारेण पार्थान्यस्य धनुर्धरत्वरूपविशेषणयोगव्यवच्छेददर्शनात् विशेष्यसङ्गतेन 'परतन्त्रमेव'-इत्येवकारेण परतन्त्रान्यस्मिन् भावत्वादिविशेषणयोगव्यवच्छेदप्रतिपादनेन, भावत्वस्य परतन्त्रत्वव्याप्यत्वलाभात्; स्वतन्त्रतत्त्वस्य च भावत्वे व्याप्यवर्ति व्यापकावश्यंभावनियमेन भावत्वव्यापकस्य परतन्त्रत्वस्य प्रसङ्गात्[1] । न च स्वतन्त्रस्य तत् सम्भवति; इति व्यापकनिवृत्त्या तद्व्याप्य-भावत्व-निवृत्तिः एव स्वतन्त्रस्य स्यात् ।, अतः स्वतन्त्रतत्त्वस्य भावत्वादिविज्ञानं यथा सिध्यति तथा विभागे कर्तव्ये कथं भावाभावभेदेन पारतन्त्र्यविभागनिरूपणम् ?"-इतिभावेन गूढाभिसन्धिः शङ्कते **नन्विति** ।

**व्याघातादिति** । स्वतन्त्रतत्त्वस्य भावान्यत्वे अभावत्वम् एव प्राप्तम्, पुनरभावान्यत्वोक्तौ व्याघातः; एवम् अभावान्यत्वेऽपि भावत्वस्यैव प्राप्तेः पुनः तदन्यत्वोक्तो व्याघातः; इत्यर्थः ॥

'परतन्त्रतत्त्वस्य भावतया विभागोक्तावपि, स्वतन्त्रतत्त्वस्य भावत्वादिविज्ञानसम्भवात्; न उक्तविभागः अनुपपन्नः' इत्याशयेन गूढाभिसन्धिरेव सिद्धान्ती समाधत्ते **मैवमिति** ।

---

१. विशेष

**भावलक्षणाऽऽक्रान्तत्वादिति** । 'भाव:'इति शेष: । 'स्वतन्त्र-तत्त्वम्'इह अनुवर्तते ॥ अन्यथा भावलक्षणस्य तत्र अतिव्याप्ति: स्यात्; इति भाव: ।

" नन्वेवम् व्याप्यवति व्याप्यकावश्यंभावनियमात्, स्वतन्त्रतत्त्वस्य भावत्वे तद्व्यापकीभूतपरतन्त्रत्वम् अपि तत्र स्यात्, तत्कथम् भावत्वाङ्गीकार: ? इत्यत: न्यूनाधिकसङ्ख्याव्यवच्छेदकस्य विभागस्य सावधारणत्वेऽपि[2] 'परतन्त्रमेव द्विवि-धम्'इत्येवंपरत्वाभावात्, 'परतन्त्रं भावाभावतया द्विविधमेव'[3]इत्येवंपरत्वस्यैव आश्रयणात्; 'शङ्ख: पाण्डुर एव'इत्यादौ विशेषणसङ्गत 'एव'कारस्य[4] विशेष्ये विशेषणायोगव्यवच्छेद-कत्वदर्शनात्, परतन्त्रे भावत्वाद्ययोगव्यवच्छेद-मात्र-सिद्धौ अपि भावत्वादौ तद्व्याप्यत्वालाभात्; अव्यापकव्यावृत्त्या च अव्याप्य-व्यावृत्तौ अतिप्रसङ्गात्, न परतन्त्रतत्त्वव्यावृत्त्या स्वतन्त्रतत्त्वस्य भावत्व-व्यावृत्तिप्रसङ्ग: येन उक्तविभागस्य अकर्तव्यता स्यात् "इत्याशयेन आह **परतन्त्रमिति** ।

[ १३ **वि.** विषय:– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने – विभागपरीक्षायाम्–

१) 'ननु....व्याघातात्'इत्यस्य व्याख्याने– क) 'उक्तप्रकारेण विभागे कृते स्वतन्त्रतत्त्वस्य भावत्वालाभ:'इतिशङ्कात्वेन आशयपूर्वकम् अवतरणम् । ख) पदार्थ: । ग) 'व्याघातात्'इत्यस्य व्याख्याने– १. व्याघातप्रदर्शनम्; २. एतद्व्याघातस्य प्रकारद्वयेन उपपादने– क. भावाभावोभयान्यत्वस्य शश-विषाणादौ अभावेऽपि शशविषाणाद्यन्यत्वस्य भावाभावयो: विद्यमानत्वम्, ख. तत्त्वत्वेसति भावाभावान्यत्वस्य विवक्षणम् ।

२) 'मैवम् ...भावाभावात्मकमिति'इत्यस्य व्याख्याने– क) तच्छङ्का-परिहारकत्वेन अवतरणम् । ख) मैवम् भावलक्षणाऽऽक्रान्तत्वात्'इत्यस्य व्याख्याने– १. 'मैवम्'इत्यस्य पदार्थ:, २. 'भावलक्षणाऽऽक्रान्तत्वात्'इत्यस्य

---

२. सावधानत्वे ३. द्विविधमित्येवं ४. स्यैव ५. तद्व्यापकत्वा

अवतरणम्; अर्थः, तात्पर्यञ्च । ग) 'परतन्त्रम्....भावाभावात्मकमिति'इत्यस्य व्याख्याने– १. 'स्वतन्त्रस्य भावत्वे भावाभावत्वेन-अस्वतन्त्रद्वैविध्यम् अयुक्तम्' इतिशङ्कानिवारकतया अवतरणम्; २. 'इत्येवंपरो विभागः'इत्यस्य द्विधा अर्थः; ३. 'न पुनः....भावाभावात्मकमिति'इत्यस्य व्याख्याने– क. अनुवृत्तिः, ख. अर्थश्च; ४. भावश्च । ]

ननु 'अस्वतन्त्रं भावाभावभेदात् द्विविधम्'इत्यङ्गीकारे स्वतन्त्रं भावो न स्यात् इत्याशयेन शङ्कते **नन्विति** ।

अन्यद्वा= भावाभावाभ्याम् अन्यद्वा इत्यर्थः । परतन्त्रप्रभेदत्वात्= भावाभावयोः परतन्त्रविशेषत्वात् इत्यर्थः ।;

**व्याघातादिति** । भावान्यत्वस्य अभावनियतत्वात्; अभावान्यत्वस्य भावनियतत्वात्; उभयान्यत्वं व्याहतम्; इति भावः ।,

'ननु अत्यन्तासति शशविषाणादौ भावान्यत्वे-सति-अभावत्वस्य अभावात् अभावान्यत्वे-सत्यपि-भावत्वस्य अभावाच्च उभयान्यत्वं न व्याहतम्'इति चेत्; न,

'भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक्'

इतिवचनात् धर्म्यतिरिक्त-अन्योन्याभावाभावेन अत्यन्तासति भावाभावान्यत्वाभावात् । न च 'तर्हि भावाभावयोः अत्यन्तासत्त्वापत्तिः'इति वाच्यम्, तयोः अत्यन्तासत्प्रतियोगिकभेदसत्त्वेन अत्यन्तासत्त्वापत्तिरूप विशेषाभावात् ॥ 'तत्त्वेषु भावान्यत्वस्य अभावान्यत्वनियमः अभावान्यत्वस्य च भावत्वनियमः'इत्यङ्गीकारात् व्याघात्; इत्यपि केचिदाहुः ॥

परिहरति **मैवमिति** ।

एवम्– 'स्वतन्त्रे भावो न'इत्येतत्, मा= न; इत्यर्थः ॥ कुतो नैवम्? इत्यत आह **भावलक्षणाऽऽक्रान्तत्वादिति** । भावस्य-लक्षणेन सङ्गृहीतत्वात्, = भावलक्षणोपेतत्वात् इति यावत् ।

ननु अस्वतन्त्रान्यस्य भावत्वे 'भावाभावभेदात् अस्वतन्त्रं द्विविधम्'-इतिविभागो न युक्तः; इतरव्यवच्छेदफलकत्वात् विभागकथनस्य, अन्यथा विभागकथनवैयर्थ्यात्; इत्यत आह **परतन्त्रमिति ।;**

इत्येवंपरः = इत्येवम्= एतादृशः, यः न्यूनाधिकसङ्ख्याव्यवच्छेदः, परः= उद्देशः, यस्य स तथा;= तत्प्रयोजनकः इति यावत्; विभागः– 'भावाभावौ द्विधेतरत्'इत्यनेन उक्तः विभागः; इत्यर्थः । यद्वा इत्येवम्= एतादृशः, यः न्यूनाधिकसङ्ख्याव्यवच्छेदपरः= तत्तात्पर्यकः, विभागः= विभाग-प्रतिपादकः 'भावाभावौ द्विधेतरत्'इतिग्रन्थः इत्यर्थः ।,

**न पुनः परतन्त्रमेव भावाभावात्मकमिति ।** 'इत्येवं परो विभागः'-इत्यनुवर्तते । इत्येवम् एतादृशो यः इतरव्यवच्छेदः तत्परो न भवति; इत्यर्थः ।;

न्यूनाधिकसङ्ख्याव्यवच्छेदप्रतीतिप्रयोजनकम् एव विभागकथनम्, न तु इतरव्यवच्छेदप्रतीतिफलकम्; इति भावः ।

[ १३ मु. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने– तद्विभागपरीक्षायाम्–

१) 'ननु....व्याघातात्'इतिशङ्काग्रन्थस्य व्याख्याने– क) 'अन्यद्वा'-इत्यस्य अर्थः । ख) 'नाद्यः....प्रभेदत्वात्'इत्यस्य व्याख्याने– १. एतद्दू-षणमूलभ्रमप्रदर्शनपूर्वकम् अवतरणम्, २. पदार्थश्च । ग) 'न तृतीयः व्याघातात्'इत्यस्य व्याख्याने– व्याघातविवेचनम् । २) 'नैवम्....भावा-भावात्मकमिति'इतिसमाधानग्रन्थस्य व्याख्याने– क) 'नैवम्'इत्यतः परं 'भाव-त्वात्'इतिशेषपूरणम् । ख) स्वतन्त्रतत्त्वस्य भावत्त्वे-कारणोक्तिपरतया 'भाव-...त्वात्'इत्यस्य अवतरणम् । ग) स्वतन्त्रतत्त्वस्य भावत्त्वेऽपि तत्पक्षोक्तदोषाप्र-भावोक्तिपरतया 'परतन्त्रम्....भावाभावात्मकमिति'इत्यस्य अवतरणम् । ]

**अन्यद्वेति ।** भावाभावात्मकं वा, भावाभावात् अन्यद्वा; इत्यर्थः ।-

'परतन्त्रमेव भावाभावात्मकम्'इतिभ्रान्तो दूषयति **नाद्यद्वितीयाविति।** परतन्त्रभेदत्वात्[1]= परतन्त्रस्यैव प्रभेदत्वात्; इत्यर्थः ।;

**न तृतीय इति।** व्याघातात्= एतस्यैव वस्तुनः तदानीमेव तत्रैव तेनैव पुरुषेण अस्तित्वेन नास्तित्वेन च विरुद्धत्वात्। तृतीये आद्यः कल्पो न सम्भवति, तथा व्याघातात्; भावाभावयोः परस्परविरहात्मकत्वेन 'भावान्यत्'इत्युक्ते अभावत्वस्य प्राप्त्या पुनः 'अभावान्यत्'इत्युक्ते स्ववचनविरोधात् 'अभावान्यत्'इत्युक्ते भावत्वस्य प्राप्त्या पुनः 'भावान्यत्'इत्युक्ते स्ववचनविरोधात्, तृतीये द्वितीयः कल्पो न सम्भवति। इत्यर्थः ॥

**मैवमिति।** 'भावत्वात्'इतिशेषः ॥ तत्कुतः ? इत्यत आह **भावलक्षणेति।**

न च तत्र उक्तदोष, भावानवबोधात्; इत्यभिप्रेत्य मूलाभिप्रायम् आह **परतन्त्रमिति।**

[ १३ का. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने– विभागपरीक्षायाम्–

ननु....व्याघातात्'इतिशङ्काग्रन्थस्य व्याख्याने– क) 'स्वतन्त्रतत्त्वस्य भावत्वानुपपत्तिः'इत्यभिप्रायकशङ्कात्वेन अवतरणम्। ख) 'अन्यद्वा'इत्यतः परं शेषपूरणम्। ग) 'नाद्य....प्रभेदत्वात्'इत्यस्य व्याख्याने– १. 'परतन्त्रप्रभेदत्वात्'इत्यस्य अर्थः तात्पर्यञ्च; २. भावाभावयोः परतन्त्रप्रभेदत्वानङ्गीकारे-बाधकरूपो भावः। घ) 'व्याघातात्'इत्यस्य व्याख्याने– १. अर्थः, २. शशशृङ्गादौ भावत्वाभावन्ययोः सामानाधिकरण्यशङ्कानिरासः। ङ) एवमेव नित्यत्वानित्यत्वविकल्पनिरास।

२) 'मैवम्....भावाभावात्मकमिति'इतिसमाधायकग्रन्थव्याख्याने– क) 'भाव'लक्षणाऽऽक्रान्तत्वात्'इत्यत्र 'लक्षणाक्रान्त'पदकृत्यम्। ख) 'परतन्त्रम्....भावाभावात्मकमिति'इत्यस्य व्याख्याने– १. उक्तविभागानु-

---

१. 'परतन्त्रप्रभेदत्वात्'इति टीकापाठ उपलभ्यते।

पपत्तिनिवारकतया अवतरणम्, २. विशेषणांशे अवधारणम्, द्वित्वोपलक्षितस्य अयोगव्यवच्छिन्नत्वञ्च; इति भावः । ग) एवमेव नित्यत्वादिसिद्धिरपि । ]

'स्यादेतत् । भावत्वाभावत्वाभ्याम् अस्वतन्त्रविभागो न युक्तः; शब्दतः सावधारणा प्रतीतिः औत्सर्गिकतया, 'भावाभावौ द्विधेतरत्'इत्यतः 'परतन्त्रमेव भावात्मकम्'इतिलाभेन स्वतन्त्रस्य भावत्वानुपपत्तिः; इतिभावेन शङ्कते **नन्विति** ।

अन्यद्वा 'अभिमतम्'इतिशेषः ।;

परतन्त्रप्रभेदत्वात्= परतन्त्रविशेषत्वात्; भावत्वाभावत्वयोः परतन्त्रत्वव्याप्यत्वात्; इति यावत् ॥ अन्यथा उक्तावधारणानुपपत्तेः; इति भावः ।,

**व्याघातादिति** । भावभिन्नत्वाभावभिन्नत्वयोः अभावभावमात्रवृत्तित्वेन तदुभयसामानाधिकरण्यस्य व्याहतत्वात्; इत्यर्थः । न च शशशृङ्गादौ तदुभयसामानाधिकरण्यसम्भवः, आश्रयस्यैव असत्त्वेन तदनुपपत्तेः ।

अत्र स्वतन्त्रस्य नित्यत्वानित्यत्वादिविकल्पनिरासो द्रष्टव्यः ॥

अत्र यद्यपि 'स्वतन्त्रस्य भावत्वात्'इत्येव वक्तव्यम्, तथापि 'उक्तलक्षणत्वेनैव भावत्वसिद्धेः न विकल्पावकाशः'इतिसूचनाय **भावलक्षणाऽऽक्रान्तत्वादित्युक्तम्** ।

नन्वेवम् उक्तविभागानुपपत्तिः; इत्यत आह **परतन्त्रमिति** ।। अयं भावः ॥— 'शङ्खः पाण्डुरः'इत्यादौ इव विशेषणांशे एव अवधारणप्रतीतिः, बाधकाभावात्; न तु 'गौः सास्नाशृङ्गवती'इत्यादौ इव विशेष्यांशे अपि, स्वतन्त्रस्य भावत्वग्राहकप्रमाणबाधात् । न च विशेषणावधारणस्य अयोगव्यवच्छेदरूपतया, भावत्वादेश्च अभावादौ अयोगात्, कथं तत्प्रतीतिः? इतिवाच्यम्; प्रत्येकम् अयोगेऽपि द्वित्वोपलक्षितस्य अयोगव्यवच्छिन्नत्वात् इति ॥

एवम् नित्यत्वादिविशेषणांशे अवधारणत्वात् स्वतन्त्रस्य नित्यत्वादिसिद्धिरपि द्रष्टव्या ।

[ १४ **टी.** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपणे– उक्तविभाग-परीक्षायाम्– भावस्य-स्वतन्त्रादिविभागनिरसने–

अ) तत्त्वसामान्यविभागस्यैव उक्तक्रमवैपरीत्येन-कर्तव्यत्वशङ्का । आ) तन्निरसने– १) स्वतन्त्रतत्त्वस्य प्राधान्येन-ज्ञातव्यप्रकारप्रदर्शनम् । २) विपक्षे– , क) उक्तविभागक्रमवैपरीत्यादपि अधिकवैपरीत्यस्यापि शङ्कनम् । ख) इष्टयोर्हानी च । ३) उक्तविभागे विपक्षोक्तदूषणसदृशदूषणशङ्का;तन्निरसनञ्च । ४) उक्तविभागे कृते वक्तव्यस्याप्यनुक्तेः विपक्षेऽपि समानता । ५) उक्तस्य तत्त्वसामान्यविभागक्रमस्यैव युक्तत्वोपसंहारः । ]

**यथा भावेषु[1] स्वतन्त्रतत्त्वं प्रविशति तथा विभागः क्रियताम्, इति चेत्;**

**नैवं शङ्क्यम्[2] । तद्धि प्रधानतया सर्वविविक्तमेव वेदितव्यम् ।, अन्यथा 'द्विविधं तत्त्वम् भावोऽभावश्च; भावोऽपि द्विविधः नित्योऽनित्यश्च; नित्योऽपि द्विविधः चेतनोऽचेतनश्च; चेतनोऽपि द्विविधः स्वतन्त्रोऽस्वतन्त्रश्च'इति कर्तव्यम् । एवं सति न प्राधान्येन प्रतिपत्तिः स्यात्, भगवद्व्यतिरिक्तस्य सर्वस्यापि अस्वातन्त्र्यप्रतीतिः न स्यात् ।**

**'अस्मिन्पक्षे स्वतन्त्रस्य भावत्वं न विदितम् स्यात्; इति सममेव'इति चेत्; न, पुरुषार्थोपयोगानुपयोगाभ्यां विशेषात् ।**

**अभावादीनां नित्यत्वाद्यनुक्तिश्च समैव ॥**

**तस्मात् यथान्यासमेव[3] अस्तु ।**

---

१. के.टि. अनुसारेण क्वचित् 'भावे'इत्येव पाठः ।
२. वि.टि. अनुसारेण 'शक्यम्'इतिपाठः ।
३. वि.टि. अनुसारेण 'यथोपन्यासमेव'इति पाठः ।

[ १४ स. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– तद्विभागपरीक्षायाम् – भावस्य स्वतन्त्रादिविभागशङ्कानिरसने–

अ) 'यथा....चेत्'इतिशङ्काग्रन्थव्याख्याने– शङ्कितविभागकथनपुरः-सरं शङ्कात्वेन अवतरणम् ।

आ) शङ्कानिरासकतया 'नैवं....अस्तु'इतिग्रन्थस्य व्याख्याने– १) 'एवं सति'इत्यस्य अर्थः । २) 'अस्मिन्पक्षे....विशेषात्'इत्यस्य व्याख्याने– क) अवान्तरशङ्कास्पष्टीकरण-पूर्वकम् अवान्तरशङ्कात्वेन 'अस्मिन्....चेत्'इत्यस्य अवतरणम् । ख) तच्छङ्कासमाधायकतया 'न पुरुषार्थो....विशेषात्'इत्यस्य भावः । ३) 'अभावादीनां....समैव'इत्यस्य व्याख्याने– क) स्वोक्तविभागे अभावादीनां नित्यत्वाद्यनुक्तिरूपदोषनिरसकतया अवतरणम् । ख) एतद्दोषस्य स्वपरोभयपक्षतुल्यता । ]

'तत्त्वं द्विविधम् भावोऽभावश्च; भावोऽपि द्विविधः स्वतन्त्रोऽस्वतन्त्रश्च'इतिविभागः कुतो न कृतः ? इति शङ्कते **यथेति** ।

**एवं सतीति** । भावत्वाभावत्वाभ्यां तत्त्वविभागकरणे; इत्यर्थः ।

"ननु यथा तत्त्वस्य भावत्वाभावत्वाभ्यां विभागे 'भगवतः प्राधान्येन प्रतिपत्तिः, तद्व्यतिरिक्तस्य सर्वस्यापि अस्वातन्त्र्यप्रतीतिश्च, न स्यात्' इति दोषः; तथा स्वातन्त्र्यास्वातन्त्र्याभ्यां विभागेऽपि 'भगवतो भावत्वप्रतिपत्तिः, न स्यात्'इति दोषः समानः"इति शङ्कते **अस्मिन्पक्ष इति** ।

**पुरुषार्थेति** । भगवत्स्वातन्त्र्यज्ञानस्यैव मोक्षहेतुत्वेन, भावत्वज्ञानस्य तु अहेतुत्वेन; स्वातन्त्र्यास्वातन्त्र्याभ्याम् एव विभागो न्याय्यः; न तु भावत्वाभावत्वाभ्याम्; इति भावः ।

"ननु तथापि अयं विभागः अनुपपन्नः; अभावचेतनस्वतन्त्राणां यथायोग्यं नित्यत्वानित्यत्वाचेतनत्वानाम् अनुक्तेः; नित्यानित्ययोः तत्त्वावान्तर-विभाजकपरतन्त्रत्वोपाध्यवच्छिन्न–परतन्त्रावान्तरविभाजकभावत्वरूपोपाध्य-वच्छिन्न–भावावान्तरविभाजकाचेतनत्वरूपोपाध्यवच्छिन्न – अचेतनावान्तर-

विभाजकनित्यत्वानित्यत्वरूपोपाध्यवच्छिन्नत्वात्, एवम् अचेतनस्यापि परम्परया तत्त्वावान्तरविभाजक-अचेतनत्वावच्छेदकावच्छिन्नत्वात्;" इत्यत आह अभावादीनामिति ।। इदमुक्तं भवति— नैवं दूषणं वक्तुं शक्यम्; त्वत्पक्षेऽपि तुल्यत्वात् त्वयाऽपि तत्त्वावान्तरविभाजकभावत्वरूपोपाध्यवच्छिन्न-भावावान्तर-विभाजकनित्यत्वरूपोपाध्यवच्छिन्नत्वेन नित्यत्वस्य उक्ततया अभावस्य नित्यत्वानुक्तेः; इति ।

[ १४ के. विषयः— अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने— तद्विभागपरीक्षायाम्— भावस्य-स्वतन्त्रादिविभागशङ्कानिरसने—

अ) 'यथा....चेत्'इत्यस्य शङ्काग्रन्थस्य व्याख्याने— १) पूर्वपक्षाभिप्रायकतया अवतरणम् । २) 'भावेषु'इत्यस्य व्याख्याने— क) बहुवचनार्थस्य स्पष्टीकरणम् । ख) पाठभेदप्रदर्शनम् । पाठभेदेऽपि उक्तार्थलाभप्रदर्शनञ्च । ३) यत्नगौरवरूपो भावश्च ।

आ) 'नैवम्....अस्तु'इत्यस्य समाधानग्रन्थस्य व्याख्याने— १) 'प्रयोजने सति यत्नगौरवस्य अयुक्तत्वाभावः'इत्याशयपूर्वकम् अवतरणम् । २) 'नैवम्....न स्यात्' इत्यस्य आशयः । ३) 'अस्मिन् ..विशेषात्'इत्यस्य व्याख्याने— क) स्वपरोभयपक्षसाम्यशङ्कात्वेन— १. 'अस्मिन....चेत्'इत्यस्य अवतरणम्; २) साम्यपरिहरणप्रयत्नः तद्वैफल्यञ्च । ख) आवश्यकसिध्द्यसिद्धिभ्यां साम्यशङ्कानिरासकतया 'पुरुषार्थो....विशेषात्'इत्यस्य अवतरणम् । ४) 'अभावादीनां....सम्भव'इत्यस्य अर्थः । ५) 'तस्मात्....अस्तु'इत्यस्य च अर्थः । ]

पूर्ववादी स्वाभिप्रायम् उद्घाटयति यथेति ।

'भावेषु'इतिबहुवचनम् 'आदि'अर्थे । 'भावादिषु'इत्यर्थः । 'आदि'-पदेन च नित्यचेतनयोः परिस्पर्शः ।। क्वचित् 'भावे'इत्येव पाठः । तत्र 'भाव'पदं नित्यादेः उपलक्षणम् । अत एव सिद्धान्ते 'अन्यथा'इत्यादिना तदेव विभावयिष्यति; इति ध्येयम् ।

तत्त्वं द्विविधम् भावोऽभावश्च, भावोऽपि द्विविधः नित्योनित्यश्च, नित्योपि द्विविधः चेतनोचेतनश्चेति, चेतनोऽपि द्विविधः स्वतन्त्रः परतन्त्रश्च' इत्येव विभागः कर्तव्यः; तथा सति हि स्वतन्त्रतत्त्वस्य भावत्वादिकं सम्यगुक्तं भवति ।; 'द्विविधं तत्त्वं स्वतन्त्रं परतन्त्रञ्च, परतन्त्रञ्च भावाभावतया-द्विविधम्'इतिविभागे तु, स्वतन्त्रतत्त्वस्य भावत्वप्राप्तिशङ्कायाम् उक्तरीत्या विभागमात्रस्य अभिप्रायान्तरकल्पनायां तु यन्तगौरवमेव ।, न च प्रयोजन-विशेषाभावे तदाश्रयणम् उपपत्तिमत् ।; इति भावः ॥

'सति प्रयोजनविशेषे यत्नगौरवाश्रयणं न दोषाय'इत्याशयेन आह **नैवमित्यादिना** ।

'तत्त्वं द्विविधम् स्वतन्त्रमस्वतन्त्रञ्च'इति विभज्य अस्वतन्त्रकाटौ भगवदितरस्य अन्तर्भावे भगवतः प्राधान्येन प्रतीतिः भवति, पराभिप्रेत-विभागे तु नैवम्; इत्यतः अयमेव विभागः कर्तुं युक्तः; इत्याशयः ।,

पराभिप्रेतविभागे भगवतः स्वातन्त्र्यप्रतीतिरपि; इति भिन्नक्रमः ।

'ननु यथा तत्त्वस्य भावत्वाभावत्वादिना विभागकरणे भगवतः स्वातन्त्र्यं तद्व्यतिरिक्तस्य च अस्वातन्त्र्यं न सिद्ध्यति इति तथाविभागस्य अकर्तव्यता त्वया उच्यते; तथा तत्त्वस्य स्वातन्त्र्यपारतन्त्र्याभ्यां विभागे स्वतन्त्रतत्त्वस्य भावत्वाद्यप्रतीतिप्रसक्तेः, तथाविभागस्य अकर्तव्यत्वं मयाऽपि अभिधातुं शक्यत एव; इति पक्षद्वयमपि सममेव'इतिशङ्कते **अस्मिन्निति** ।,

न च " 'अस्वतन्त्रं भावाभावतया द्विधैव'इत्यादिना-विभागस्य अभिप्रायान्तरकथनेन भगवतो भावत्वस्य व्युत्पादितत्वात् न साम्यम्' 'इति वाच्यम्; परेणापि 'चेतनः स्वतन्त्रोऽस्वतन्त्रश्चेति द्विविध एव'इत्येवंपरत्वस्य व्युत्पादयितुं शक्यत्वात्, अन्यस्य अस्वातन्त्र्याद्यनिरासेन भगवद्व्यतिरिक्तस्य सर्वस्य अस्वातन्त्र्यप्रतीतिसौलभ्यस्य वक्तुं शक्यत्वेन तौल्यापरिहारात् ।;

भगवदायत्तत्वेन-प्रपञ्चज्ञानस्य पुरुषार्थसाधनत्वेन आवश्यकत्वात्, तस्य सिद्धान्त्यभिप्रेतविभागपक्ष एव सम्भवात्, तथैव विभागः कर्तव्यः; न तु भावत्वादिना, भगवतो भावत्वादिज्ञानस्यापुरुषार्थसाधनत्वेन तज्ज्ञास्य अनावश्यकत्वात् । ततश्च विभागद्वयेऽपि यत्किञ्चिदसिद्धेः तौल्येऽपि; आवश्यकासिद्धिः भावत्वादि विभागे, स्वातन्त्र्यादि विभागे तु न आवश्यकासिद्धिः; इतिविशेषात् न पक्षद्वयतौल्यम्; इत्याह **पुरुषार्थेति** ।

**अभावादीनामिति** । यथा अस्मत्पक्षे 'अभावस्य नित्यत्वाद्यनुक्तिः, 'अभावादीनाम्'इति 'आदि'पदसूचितस्वतन्त्रतत्त्वस्य नित्यत्वाद्यनुक्तिः, नित्यस्य चेतनत्वानुक्तिः' भवति; तथा तत्पक्षे 'अभावस्य नित्यत्वाद्यनुक्तिः, अनित्यस्य अचेतनत्वानुक्तिः'भवति समैव इत्यर्थः ॥ 'च'शब्देन 'न केवलं साम्यम् अपि तु भगवतः प्राधान्याप्रतीतिः, भगवद्व्यतिरिक्तस्य पारतन्त्र्याप्रतीतिश्च'इतिपूर्वोक्तं समुच्चिनोति ।

**तस्मादिति** । यस्मात् परकीयविभागे परोक्तानुपपत्तिसाम्यम्, अस्मदुक्तानुपपत्त्याधिक्यं च; तस्मात्; इत्यर्थः ।

[ १४ **वि.** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने– तद्विभागपरीक्षायाम्– भावस्य-स्वतन्त्रादिविभागकर्तव्यत्वशङ्कानिरसने–

अ) 'यथा....चेत्'इत्यस्य शङ्काग्रन्थस्य व्याख्याने– भावावान्तरस्वतन्त्रादिप्रभेदकर्तव्यत्वशङ्कात्वेन अवतरणम् ।

आ) 'नैवं....अस्तु'इत्यस्य उपर्युक्तशङ्काग्रन्थस्य व्याख्याने– १) तच्छङ्कापरिहारकतया अवतरणम् । २) 'नैवं शक्यम्'इत्यस्य अर्थः । ३) उक्तार्थोपपादकतया– 'तद्वि....अस्तु'इत्यस्य व्याख्याने– क) उक्तशङ्काऽनवकाशकारणपरतया 'तद्वि...वेदितव्यम्'इत्यस्य १. अवतरणम्, २. अर्थःशेषः, अन्वयश्च । ख) 'अन्यथा....न स्यात्'इत्यस्य व्याख्याने– १. विपक्षेबाधकोक्तित्वेन अवतरणम्, २. 'अन्यथा....इतिकर्तव्यम्'इतिपदार्थः ।

३. बाधकपरतया 'एवं....न स्यात्'इत्यस्य व्याख्याने– क. अवतरणम्, ख. प्रथमबाधकतया 'एवं....प्रतिपत्तिः स्यात्'इत्यस्य अर्थः, ग. दूषणान्तरतया– 'भगवत्...न स्यात्'इत्यस्य अवतरणम्, अर्थश्च। ग) 'अस्मिन्........विशेषात्'इत्यस्य व्याख्याने १. उभयपक्षतौल्यशङ्कात्वेन अवतरणम्, २. 'अस्मिन्....चेत्'इत्यस्य अर्थः, ३. 'न....विशेषात्'इत्यस्य व्याख्याने तच्छङ्कानिवारकतया– क. 'न'इत्यस्य अवतरणम्, अर्थश्च, ख. 'पुरु.......विशेषात्'इत्यस्य अवतरणम्, अर्थः, भावश्च। घ) 'अभावा....समैव'इत्यस्य अवतरणम्, अर्थश्च। ङ) उपसंहारकतया 'तस्मात्...अस्तु'इत्यस्य अवतरणम्, अर्थश्च।]

'ननु भावलक्षणाऽऽक्रान्तत्वेन स्वतन्त्रस्य भावत्वं कुतो वक्तव्यम्? भावान्तरप्रभेदत्वेनैव भावत्वम् उच्यताम्; इत्याशयेन शङ्कते **यथेति**॥

परिहरति **नैवं शक्यमिति**।

एवम्= यथा स्वतन्त्रतत्त्वं भावेषु प्रविष्टं भवति तथा विभागकरणम्, न शक्यम्; इत्यर्थः॥,

कुतो न शक्यम्? इत्यत आह **तद्धीति**। 'हि'शब्दो 'यस्मात्'-इत्यर्थे वर्तते; 'तस्मात्'इति शेषः। यस्मात्, स्वतन्त्रतत्त्वम्, प्रधानतया= अनन्याधीनत्वलक्षणप्राधान्येन, सर्वेभ्यः परतन्त्रेभ्यः विविक्तमेव= पृथग्भूतमेव= अस्वतन्त्राप्रविष्टमेव, ज्ञातव्यम्; तस्मात्; 'नैवं शक्यम्'इति पूर्वेण अन्वयः।;

विपक्षे बाधकमाह **अन्यथेति**। यथा भावेषु स्वतन्त्रतत्त्वस्य प्रवेशो भवति तथैव विभागकथने इत्यर्थः॥ इति कर्तव्यम्= इत्यनेन प्रकारेण स्वतन्त्रतत्त्वस्य भावेषु प्रवेशनं कार्यम्; इत्यर्थः।,

अस्त्वेवम्; तथापि का हानिः? इत्यत आह **एवं सतीति**। उक्तरीत्या तत्त्वविभागकथनाङ्गीकारे, प्राधान्येन= भगवतः इतरासाधारण्येन, प्रतीतिः, न स्यात्; इत्यर्थः॥ दूषणान्तरं च आह **भगवद्व्यतिरिक्तस्य**

**सर्वस्यापीति ।** परपक्षे अस्वतन्त्रस्य चेतनप्रभेदत्वात्, भगवद्व्यतिरिक्तस्य सर्वस्य अस्वतन्त्रतत्त्वस्य अस्वातन्त्र्यप्रतीतिः न स्यात्; इत्यर्थः ।

पक्षद्वयस्य अविशेषम् आशङ्कते **अस्मिन्पक्ष इति** ।; 'तत्त्वं द्विविधम् स्वतन्त्रं परतन्त्रं च'इत्यादिप्रकारेण तत्त्वविभागकथनपक्षे; भावस्य अस्वतन्त्रत्वेन भगवतो भावत्वेन अप्रतीतिः स्यात्; इति हेतोः, सममेव= पक्षद्वयं समानम् एव; न तु अनयोः पक्षयोः कश्चित् विशेषः अस्ति; इत्यर्थः ।,

भगवतः केनचित् रूपेण भावत्वाप्रतीत्या पक्षद्वयस्य समत्वेऽपि प्रकारान्तरेण अस्ति विशेषः इत्याशयेन परिहरति **नेति** । 'पक्षद्वयं सममेव' इत्येतत् न; इत्यर्थः ॥ तत्र हेतुजिज्ञासायाम् आह **पुरुषार्थोपयोगानुपयोगाभ्यामिति** । अनयोः पक्षयोः मोक्षरूपपुरुषार्थोपयोगानुपयोगाभ्याम्, विशेषात्; = सफलत्वनिष्फलत्वविशेषात्; इत्यर्थः । स्वतन्त्रास्वतन्त्रत्वादिना तत्त्वविभागकथनस्य मोक्षसाधनं यत् स्वतन्त्रत्वेन भगवज्ज्ञानम् स्वतन्त्रतत्त्वायत्ततया तदितरतत्त्वज्ञानं च तद्धेतुभूतज्ञान-साधनत्वात् मोक्षपुरुषार्थोपयोगि; अत एव सफलत्वं भवति ।. 'तत्त्वं द्विविधम् भावोभावश्च' इत्यादिप्रकारेण तत्त्वविभागकथनस्य तु मोक्षसाधनज्ञानहेतुज्ञानजनकत्वाभावात् गङ्गावालुकापरिगणनवत् निष्फलत्वम्; इति भावः ।

'ननु अस्तु अनयोः पक्षयोः सफलत्वनिष्फलत्वरूपविशेषः, तथापि स्वतन्त्रपरतन्त्रत्वादिना तत्त्वविभागकथनपक्षे अभावस्य नित्यत्वाचेतनत्वानुक्तिः चेतनस्य नित्यत्वानुक्तिश्च अनुपपत्तिः अस्ति'इत्याशङ्क्य आह **अभावादीनामिति** । अभावानां मध्ये अत्यन्ताभावस्य नित्यत्वानुक्तिः, सर्वेषाम् अभावानाम् 'आदि'पदोक्त-अचेतनत्वानुक्तिः, समैव; अनित्यस्य अचेतनस्य च परपक्षेऽपि भावप्रभेदत्वात् ।, प्रथम'आदि'पदोक्त-अनित्यघटादिभावानाम् अचेतनत्वानुक्तिश्च समैव; अचेतनस्य नित्यभावप्रभेदत्वात् ।; तथाच परपक्षेऽपि एवंविधानुपपत्तिः समैव इत्यर्थः ।

उपपादितमर्थम् उपसंहरति **तस्मादिति** । स्वपरपक्षयोः सफलत्व-निष्फलत्वरूपविशेषात्, इतरानुपपत्तेः; पक्षद्वयेऽपि समत्वात् च; इत्यर्थः ।, यथोपन्यासमेव= भगवत्पादोपन्यासम् अनतिक्रम्य एव = भगवत्पादोक्त्य-नुसारेण; इति यावत् ।, अस्तु– तत्त्वविभागः अस्तु; न तु प्रकारान्तरेण; इत्यर्थः ।

[ १४ **मु.** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– तद्विभागपरीक्षायाम्– भावस्य-स्वतन्त्रादिविभागकर्तव्यत्वशङ्का-निरसने–

अ) सप्रयोजनम् अस्वतन्त्रतत्त्वविभागस्य प्रकारान्तरेण कर्तव्यत्वशङ्का-त्वेन 'यथा....चेत्'इत्यस्य अवतरणम् ।

आ) तच्छङ्कानिवारकतया 'नैवं....अस्तु'इत्यस्य व्याख्याने– १) अभि-प्रायपूर्वकम् पूर्वपक्षनिषेधकतया 'नैवं शक्यम्'इत्यस्य अवतरणम्, वाक्यशेष-पूरणञ्च । २) तन्निषेधकारणपरतया 'तद्वि....न स्यात्'इत्यस्य व्याख्याने– क) तत्कारणोपोद्घातत्वेन 'तद्वि....वेदितव्यम्'इत्यस्य अवतरणम्, अर्थश्च । ख) उपोद्घातोक्तार्थाद्विपक्षे आवश्यकानुक्तिपरतया 'अन्यथा....न स्यात्'इत्यस्य व्याख्याने– १. अवतरणम्, अन्वयः, अर्थश्च; २. विपक्षे स्वतन्त्रतत्त्वस्य परम्परया भावे प्रवेशे निमित्तम्; ३) विपक्षोक्तविभागप्रकारान्तरस्यापि उप-लक्षणया ग्राह्यत्वम् । ३) विपक्षसाम्यनिरासकतया 'अस्मिन्...विशेषात्'इत्यस्य व्याख्याने– क) 'अस्मिन्....चेत्'इत्यस्य आशयपूर्वकं शङ्कात्वेन अवतरणम्; ख) शङ्कानिरासकतया 'न....विशेषात्'इत्यस्य अवतरणम्, शेषपूरणञ्च । ४) 'अन्यथाविभागापेक्षया उक्तविभागस्यैव वरत्वम्'इत्यभिप्रायकतया'अभावा-....समेव'इत्यस्य अवतरणम्, शेषपूरणञ्च । ]

'यथा स्वतन्त्रतत्त्वस्य भावाभावत्वादिभ्रमो न स्यात् तथा विभागः क्रियताम्, न तु उक्तविधो विभागः; प्रयोजनाभावात्, भ्रमहेतुत्वाच्च'इति शङ्कते **यथा भावेति** । 'न तु उक्तविधो विभागः'इति शेषः ॥

१. उपलब्धग्रन्थे प्रतीकमेव नास्ति ।

'उक्तविधविभाग एव कर्तव्यः; विशिष्टप्रयोजनस्य विद्यमानत्वात्; उक्तभ्रमपरिहारस्य— अभावादीनां नित्यानित्यत्वादिभ्रमपरिहारस्य त्वया इव मयाऽपि कर्तुं शक्यत्वात्, प्रकरणाद्यनुसंहितनिष्कर्षेणैव जायमानत्वाच्च ।, न तु अन्यथा विभागः, प्रयोजनविशेषशून्यत्वात्' इत्यभिप्रेत्य पूर्वपक्षं निषेधति **नैवं शक्यमिति** । 'इतरत् च अस्वतन्त्रतया वेदनीयम्' इति वाक्यशेषः ॥;

'कुतः ?' इत्यतः हेतुं वक्तुं किञ्चित् उपोद्घातम् आह **तद्धीति** । स्वतन्त्रतत्त्वम् इत्यर्थः ।, हि= यस्मात्, स्वतन्त्रं प्रधानतया सर्वविविक्तम् एव वेदनीयम्, इतरत् च अस्वतन्त्रतया वेदनीयम्, यस्मात् च, स्वतन्त्रस्य प्रधानतया सर्वविविक्तवेदनम् इतरस्य तदधीनत्वेन च, उक्तविभागे भवति; तस्मात्, नैवं शक्यम्; इत्यर्थः ।

अन्यथाविभागेऽपि एतदुभयस्य साम्यात् कुतोयं निर्बन्धः ? इत्यतः अन्यथाविभागस्वरूपनिर्धारणपूर्वकं तत्र उभयस्यापि अभावम् आह **अन्यथेत्यादिना** । 'द्विविधं तत्त्वम्' इत्यारभ्य 'अस्वतन्त्रश्च' इत्यन्तस्य 'अन्यथा' शब्देन अन्वयः । इत्यन्यथा कर्तव्यम् इत्यर्थः ॥,

ननु भावे स्वतन्त्रतत्त्वस्य प्रवेशो यथा स्यात् तथा विभागः क्रियताम्' इति शङ्कितत्वात्, परिहाराय 'तत्त्वं द्विविधम् भावोऽभावश्चेति, भावोऽपि द्विविधः स्वतन्त्रोऽस्वतन्त्रश्च' इति अन्यथाविभागस्वरूपे निर्धारणीये कुतः परम्पराऽनुसरणम् ? इति चेत्; सत्यम्; तथापि स्वतन्त्रतत्त्वे 'भावोऽभावोऽन्यद्वा ? इतिविकल्पादेः इव तत्रैव नित्यत्वानित्यत्वादिविकल्पादेः अपि सत्त्वात्, तद्भ्रमपरिहारस्य इव एतद्भ्रमपरिहारे कर्तव्ये, 'यथा स्वतन्त्रतत्त्वं नित्ये चेतने प्रविशेत् तथा विभागः क्रियताम्' इति शङ्कायाम् तत्परिहाराय अन्यथा विभागस्वरूपनिरूपणस्य एव कर्तव्यत्वात् ।;

"ननु 'नित्यो द्विविधः चेतनोऽचेतनश्च'इत्यनन्तरं 'चेतनो द्विविधः मुक्तोऽमुक्तश्च, मुक्तो द्विविधः दुःखास्पृष्टः दुःखस्पृष्टश्च, दुःखास्पृष्टोऽपि द्विविधः स्वतन्त्रोऽस्वतन्त्रश्च'इत्यपि अन्यथास्वरूपनिरूपणं कर्तव्यम्" इति चेत्; सत्यम्; उपलक्षणया तस्यापि ग्राह्यत्वात् । सर्वस्य स्वतन्त्राधीनत्वज्ञानाहेतुत्वात् अन्यथाविभागो न कर्तव्यः ।

'तर्हि स्वतन्त्रस्य भावत्वज्ञानाहेतुत्वात् उक्तविधो विभागोऽपि न कर्तव्यः, अविशेषात्'इत्याशयेन शङ्कते **अस्मिन्पक्ष इति ।**,

मोक्षप्राप्तौ अन्तरङ्गज्ञानहेतुत्वाहेतुत्वाभ्यां विशेषात् नायं विभागः युक्तः'इत्याह **न पुरुषार्थोपयोगानुपयोगाभ्यामिति** । 'उक्तयोः ज्ञानयोः'-इति शेषः ।

'उक्तविभागे भावत्वज्ञानाहेतुत्वसमकक्षतया अन्यथाविभागे अभावादीनाम् अनित्यत्वादिज्ञानाहेतुत्वस्य विद्यमानत्वेऽपि; सर्वस्य-स्वतन्त्राधीनत्वज्ञानहेतुत्वस्य अधिकस्य विद्यमानत्वात्, अन्यथाविभागपरित्यागेन उक्तविभाग एव वरः'इत्यभिप्रेत्य आह **अभावादीनामिति** । 'सर्वस्य स्वतन्त्राधीनत्वाद्यनुक्तिश्च अधिका'इति शेषः ।

[ १४ **का.** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने– तद्विभागपरीक्षायाम्– 'भावे स्वतन्त्रादिविभाग'कर्तव्यत्वशङ्कानिरसने–

अ) शङ्काभिप्रायकथनपूर्वकं शङ्कात्वेन 'यथा....चेत्'इत्यस्य अवतरणम्, पदार्थः, तात्पर्यञ्च ।

आ) तच्छङ्कासमाधायकतया 'नैवं....अस्तु'इत्यस्य व्याख्याने– १) आशयपूर्वकं शङ्कासमाधायकतया अवतरणम् । २) 'तद्वि....न स्यात्' इत्यस्य व्याख्याने– क) 'तद्वि....वेदितव्यम्'इत्यस्य पदार्थः । ख) 'अन्यथा ....कर्तव्यम्'इत्यस्य अवतरणम्, सम्बन्धप्रदर्शनञ्च । ग) 'एवं सति....न स्यात्'इत्यस्य व्याख्याने– १. 'प्राधान्येन प्रतीतिः'इतिपदस्यार्थः, २. दोषा-

न्तरोक्तित्वेन 'भगव....न स्यात्'इत्यस्य अवतरणम्, भावः, 'अपि'पदस्य अन्वयश्च । ३) 'अस्मिन्....विशेषात्'इत्यस्य व्याख्याने– क) प्रतिबन्दि-शङ्कात्वेन 'अस्मिन्....चेत्'इत्यस्य १. अवतरणम्, अर्थः, शेषश्च; २. साम्य-विघटकत्रिविधोपशङ्कानिवारणञ्च; ख) तत्साम्यशङ्कानिवारकतया 'न पुरुषार्थो ....विशेषात्'इत्यस्य व्याख्याने पदार्थः । ४) 'अभावादीनां....समैव'-इत्यस्य व्याख्याने– क) 'अभावस्य नित्यत्वालाभ'रूपदोषनिवारकतया अव-तरणम्, ख) अर्थः, ५) 'नैवं....समैव'इत्यस्य भावः । ६) 'तस्मात्... अस्तु'इत्यस्य अर्थश्च ।]

''नन्वेवम् 'तत्त्वं द्विविधम् भावोऽभावश्च, भावो द्विविधः नित्यो-ऽनित्यश्च, नित्योऽपि द्विविधः चेतनोऽचेतनश्चेति'इत्येवं विभागो युक्तः, स्वत-न्त्रस्य साक्षादेव भावत्वादिलाभात्; न च तस्य स्वातन्त्र्यालाभः, स्वतन्त्रा-स्वतन्त्रभेदेन-चेतनविभागेनापि तल्लाभात्; अत एव न पूर्वोक्तविभाग-वैयर्थ्यम्, स्वातन्त्र्यास्वातन्त्र्याभ्याम् अविभागे एव तद्दोषदानात्''इति आशङ्कते **यथेति** । भावेषु= भावप्रदेषु; भावत्वावान्तरविभाजकं स्वतन्त्र-त्वम् यथा भवति, इति यावत् ॥

'उक्तरीत्या विभागे पैरतत्त्वापरतत्त्वयोः अविशेषेण भावत्वादि-प्रतीतिः स्यात्; सा विफला'इत्याशयेन समाधत्ते **नैवमिति** ।

तत्– स्वतन्त्रतत्त्वम्, प्रधानतया= अनन्याधीनतया, सर्वविविक्तम् = सर्वतो विलक्षणधर्मवत्, प्रतिपत्तव्यम्; इत्यादि श्रुतिसिद्धम्; इत्यर्थः ।,

ततः किम् ? इत्यत आह **अन्यथेति** । स्वतन्त्रतत्त्वस्य भावत्वा-वान्तरविभाजकत्त्वे, इति विभजनं कर्तव्यम्; इति सम्बन्धः ।;

प्राधान्येन प्रतीतिः– अनन्याधीन-भगवत्त्वादिमत्त्वेन भगवत्प्रतीतिः ।,

---

१. परत्वापरत्वयोः

दोषान्तरं च आह **भगवद्व्यतिरिक्तस्येति** । अभावादेः अस्वातन्त्र्यालाभात्; इति भावः । 'अपि'शब्दः 'प्रतीतिरपि'इति योज्यः ।

अत्रैव प्रतिबन्दिम् आशङ्कते **अस्मिन्पक्ष इति** । सिद्धान्ते इत्यर्थः ॥ **सममेवेति** । 'दूषणम्'इति शेषः ।;

**यद्यपि** । 'सिद्धान्ते स्वतन्त्रस्य भावत्वनित्यत्वचेतनत्वानां बहूनाम् अलाभः, पूर्वपक्षे तु अचेतनेषु अस्वातन्त्र्यालाभः'इति वैषम्यम्; न च 'एकत्र बहुधर्मालाभस्य बहुषु एकधर्मालाभस्य च साम्यमेव'इति वाच्यम्, तथा सति अनन्तानाम् अचेतनानाम् अस्वातन्त्र्यालाभस्यैव गरीयस्त्वापत्त्या पूर्वपक्षानुत्थितेः; **तथापि** 'सिद्धान्ते स्वतन्त्रत्वरूप-एकविभाजक-उपाध्यवच्छेदेन भावत्वादिधर्मत्रयालाभः, पूर्वपक्षे तु अभावत्व-अनित्यत्व-अचेतनत्व-रूप-विभाजक उपाधित्रयावच्छेदेन अस्वातन्त्र्यरूप-एकधर्मालाभः'इत्येवं साम्यस्य विवक्षितत्वात् न दोषः ।,

न च 'पूर्वपक्षे अनित्यस्य अचेतनत्वालाभः अधिकः'इति वाच्यम्; सिद्धान्ते चेतनस्य नित्यत्वालाभेन साम्यात् ।,

न च पूर्वपक्षे धर्मानन्त्यात्[२] वैषम्यम्; सिद्धान्ते धर्मिप्राधान्येन समीकरणात् इति विभावनीयम् ।;

**पुरुषार्थेति** । भगवदितरस्य सर्वस्यापि अस्वातन्त्र्यज्ञानं मोक्षोपयोगि; न तु भगवतः सर्वसाधारण भावत्वादिज्ञानम्; इत्यर्थः ।

नन्वेवम् अभावस्य नित्यत्वालाभो दोषः, नित्यानित्यवस्तुविवेकस्य आवश्यकत्वात्; इत्यत आह **अभावादीनामिति** ॥ अभावस्य नित्यत्वाद्यनुक्तिः मतद्वयेऽपि समैव ।, 'आदि'पदात् चेतनस्य नित्यत्वानुक्तिश्च अचेतनस्य अनित्यत्वानुक्त्या समा; इत्यर्थः ।

---

२- 'धर्म्यानन्त्यात्'इत्येकत्र

तथाच प्रमाणान्तरात् एव तदवगमः, उक्तविभागस्य अयोगव्यव-च्छेदकत्वात्; इति भावः ।

**तस्मादिति** । अत्यन्तोपयोगित्वात् यथोक्तविभागः युक्तः; इत्यर्थः ।

[ १४ भ. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– तद्विभागपरीक्षायाम्– भावे-स्वतन्त्रादिविभागकर्तव्यत्वशङ्का-निरसने–

१) 'एवं सति....न स्यात्'इत्यस्य व्याख्याने– 'प्राधान्येन'इत्यस्य अर्थः । २) 'अस्मिन्....विशेषात्'इत्यस्य अर्थः । ३) 'अभावादीनां....समैव'इत्यस्य व्याख्याने– क) 'आदि'पदयोः परिग्राह्यप्रदर्शनम् । ख) अभि-प्रायश्च । ]

**प्राधान्येनेति** । स्वेतरसर्वप्राधान्येन इत्यर्थः ।

**पुरुषार्थेति** । भगवदितरस्य सर्वस्यापि भगवत्तन्त्रत्वज्ञानपूर्वकं भगवतः स्वातन्त्र्यज्ञानमेव हि मोक्षोपयोगि, न भगवतो भावत्वादिज्ञानम् इत्यर्थः ।

'अभावादीनाम्'इति'आदि'पदेन चेतनानित्यपरिग्रहः; 'नित्यत्वादि'-इति 'आदि'पदेन नित्यानित्यत्व-अनित्यत्व-चेतनत्व-अचेतनत्व-परिग्रहः[1] ।,

अयमर्थः ॥ – 'तत्त्वं द्विविधम् स्वतन्त्रमस्वतन्त्रञ्च, अस्वतन्त्रं द्विविधम् भावोऽभावश्च, भावो द्विविधः चेतनोऽचेतनश्च, अचेतनस्त्रिविधः नित्यो नित्यानित्योऽनित्यश्च'इतिविभागे 'अत्यन्ताभावस्य नित्यत्वम्, प्राग-भावस्य अनित्यत्वम्, प्रध्वंसाभावस्य नित्यानित्यत्वम्, अभावत्रयस्यापि अचे-तनत्वम्, चेतनस्य नित्यत्वं च न उक्तं स्यात्'इति न शङ्कितुं शक्यम्;

१. नित्यानित्यत्वनित्यत्वाचेतनत्वपरिग्रहः ।

अस्मिन्पक्षेऽपि प्रध्वंसात्यन्ताभावयोः नित्यत्वम्, प्रागभावस्य अनित्यत्वम्, अभावत्रयस्यापि अचेतनत्वम्, अनित्यस्य अचेतनत्वं च अनुक्तम्' इतिशङ्काऽवकाशसाम्यात्; इति ।

[ १५ **टी.** विषयः— अस्वतन्त्रतत्त्वविभागनिरूपणे— तद्विभागपरीक्षायाम्— अस्वतन्त्रस्य-चेतनत्वादिविभागकर्तव्यत्वशङ्कानिरसने—

अ) अस्वतन्त्रस्य चेतनत्वादिविभागकर्तव्यत्वशङ्का ।

आ) तन्निरसने— १) शङ्कितविभागं द्वेधा विकल्प्य— क) प्रथमविकल्पनिरासकतया—१. हेतुप्रदर्शनम्; २. स्वपरोभयपक्षयोः अपि किञ्चिदनुक्तेः साम्यम्; ३. स्वोक्तविभागस्यैव प्राधान्ये निमित्तप्रदर्शनम् । ख) उक्तकारणेनैव द्वितीयविकल्पस्यापि निरसनम् । ]

**अथ अस्वतन्त्रं चेतनत्वादिना एव विभज्यताम् ।**

**[1]किं चेतनत्वादिना विभज्य भावाभावतया विभागः १) कर्तव्यः ? उत अयं २) न कर्तव्य एव ?**

**१) नाद्यः विशेषा[2]भावात् ।**

**अभावस्य अचेतनत्वम् एवं सति न उक्तं स्यात्, इति चेत्; तथा सति चेतनस्य भावत्वम् अपि न उक्तं स्यात्, इति समम् ।**

**तर्हि केन विशेषेण अस्य प्राधान्यम् ? इति चेत्; वादिविप्रतिपत्तिभावाभावाभ्यां विशेषात् ।**

**२) अत एव न द्वितीयोऽपि । इति ।**

---

१. मु.टि. अनुसारेण 'तत्किं' इतिपाठः ।
२. बहुत्र 'अविशेषात्' इति पाठभेदः अपि प्रदर्शितः ।

[ १५ स. विषय:– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– तद्विभागपरीक्षायाम्– अस्वतन्त्रस्य-चेतनत्वादिविभागकर्तव्यत्व-शङ्कानिरासने–

अ) प्रकारान्तरेण अस्वतन्त्रविभागकर्तव्यत्वशङ्कात्वेन 'अथ...विभज्यताम्' इत्यस्य अवतरणम् ।

आ) एतच्छङ्कासमाधायकतया– 'किं...द्वितीयोऽपि' इत्यस्य व्याख्याने – १) अवतरणम् । २) प्रथमविकल्पनिरासकतया 'नाद्यः...विशेषात्' इत्यस्य व्याख्याने– क) प्रथमविकल्पनिरासकहेतोः असिद्धिशङ्कात्वेन 'अभावस्य... ...स्यादिति चेत्' इत्यस्य अवतरणम्, भावश्च । ख) तदसिद्धिशङ्कानिवारकतया, 'तथा सति....समम्' इत्यस्य अवतरणम् । ३) द्वितीयविकल्पनिरासकतया 'अतः...इति' इत्यस्य अर्थश्च । ]

ननु तथापि मूलोक्तविभागः न युक्तः, 'अस्वतन्त्रं द्विविधम् चेतनोऽचेतनश्च' इत्यादिरूपेणापि विभागस्य कर्तुं शक्यत्वात्; इति शङ्कते **अथ अस्वतन्त्रमिति** ॥

समाधत्ते **किं चेतनत्वादिनेति** ।

विशेषं शङ्कते **अभावस्याचेतनत्वमिति** । तत्त्वावान्तरविभाजक-परतन्त्रत्वरूपोपाध्यवच्छिन्न-परतन्त्रावान्तरविभाजकभावत्वरूपोपाध्यवच्छिन्न-भावावान्तरविभाजकाचेतनत्वरूपोपाध्यवच्छिन्नत्वात् अचेतनस्य; इति भावः ।,

ननु तर्हि 'अस्वतन्त्रं द्विविधम् चेतनमचेतनञ्च' इत्यपि विभागः न सङ्गच्छते; तत्त्वावान्तरविभाजक-अस्वतन्त्रत्वरूपोपाध्यवच्छिन्न-अस्वतन्त्रावान्तरविभाजक-अचेतनत्वरूपोपाध्यवच्छिन्न-अचेतनावान्तरविभाजकभावत्व-रूपोपाध्यवच्छिन्नत्वेन भावस्य उक्तेः चेतनस्य भावत्वं न ज्ञापितं स्यात्; इत्याह **तथा सतीति** ।

**अत एवेति** । वादिविप्रतिपत्त्यभावेन 'न कर्तव्य एव' इतिद्वितीयोऽपि न; इत्यर्थः ।

[ १५ के. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने– तद्विभागपरीक्षायाम्अस्वतन्त्रस्य-चेतनत्वादिविभागकर्तव्यत्वशङ्कानिरसने–

अ) 'अथ...विभज्यताम्'इत्यस्य व्याख्याने– उक्तविभागे-अनुपपत्ति-शङ्कात्वेन अवतरणम्, प्रकारद्वयेन वाक्ययोजना च ।

आ) अनुपपत्तिशङ्कानिवारकत्वेन 'किं...द्वितीयोऽपीति'इत्यस्य व्याख्याने– १) उक्तशङ्कायाः द्वेधा-विकल्पाभिप्रायपूर्वकम् 'किं...न कर्तव्य एव'इत्यस्य अवतरणम् । २) प्रथमविकल्पनिरासकतया 'नाद्यः...विशेषात्'इत्यस्य व्याख्याने– क) 'विशेषाभावात्'इत्यस्य अर्थः । ख) एतद्वि-शेषाभावस्य असिद्धिनिवारणपरतया 'अभावस्य...समम्'इत्यस्य व्याख्याने– १. तदसिद्धिशङ्कात्वेन 'अभावस्य...चेत्'इत्यस्य अवतरणम्, पदार्थः, भावश्च; २. तदसिद्धिशङ्कानिवारकतया 'तथा सति...समम्'इत्यस्य अर्थः, भावश्च । ग) उक्तविभागस्य प्राधान्योपपादकतया 'तर्हि...'विशेषात्-इत्यस्य व्याख्याने– १. प्राधान्यनिमित्तप्रश्नत्वेन 'तर्हि...चेत्'इत्यस्य अर्थः, शेषश्च; २. प्राधान्यनिमित्तकथनपरतया 'वादि...विशेषात्'इत्यस्य व्याख्याने – क. अर्थः, ख. उक्तनिमित्तस्य शङ्कितविभागपक्षेसाम्यशङ्का. तन्निरासश्च । ३) द्वितीयविकल्पनिरासकतया 'अतः...द्वितीयोऽपि'इत्यस्य अर्थः । ]

'अस्वतन्त्रं भावोऽभावश्चेति द्विविधम्'इतिविभागम् उपपादयितुम् तत्र अनुपपत्तिम् आशङ्कते **अथेति** ।। अत्र 'अस्वतन्त्रम्'इत्यनन्तरम् 'एव'-शब्दो योज्यः । यद्वा 'प्रथमम्'इति शेषः; तेन विकल्पावकाशः, इति ज्ञेयम् ।।

" 'चेतनत्वादिनैव'[1]इति'एव'कारेण भावाभावविभागस्य प्राथम्य-निषेधे तात्पर्यम् ? उत अकर्तव्यत्वे एव ? "इत्यभिप्रायेण विकल्पयति **किमिति** ।

**विशेषाभावादिति** । अस्मदुक्तरीत्या चेतनाचेतनयोः भावावान्तर-भेदत्वपरित्यागेन भावाभावयोः अचेतनावान्तरभेदत्वस्वीकारे फलविशेषा भावात्; इत्यर्थः ।;

---

१. चेतनत्वादिनेत्येवकारेण

फलविशेषं शङ्कते **अभावस्येति** । एवं सति= चेतनाचेतनयोः भावावान्तरभेदत्वे सति इत्यर्थः । स्वपक्षे तु अचेतनावान्तरभेदत्वेन अभावस्य अचेतनत्वं सुलभम्; इति भावः ॥ **तथा सतीति** । अभावस्य अचेतनावान्तरभेदत्वे सति; इत्यर्थः । स्वपक्षे तु भावान्तरभेदत्वात् चेतनस्य भावत्वं सुलभम् इति । ततश्च कुत्र चित् कस्य चित् किञ्चित् असिद्धेः तौल्यमेव इति विशेषाभाव एव; इति भावः ।

**तर्हीति** । एवं विभागद्वयस्य साम्ये; इत्यर्थः । अस्य-भावाभावविभागस्य । 'चेतनाचेतनविभागापेक्षया' इति शेषः ।,

**वादीति** । भावाभावविभागे वादिविप्रतिपत्तिभावात् चेतनाचेतनविभागे च तदभावात्, तद्विभागापेक्षया भावाभावविभागस्य प्राधान्यम्; इत्यर्थः ॥ यद्यपि चेतनाचेतनविभागेऽपि अस्त्येव वादिविप्रतिपत्तिः, यद्वक्ष्यति " 'मृदब्रवीत्'[२] इत्यादिवाक्यात् सर्वं चेतनमेव" इत्यादि; तथापि यथा भावाभावविभागे वादिनः विप्रतिपद्यन्ते न तथा अन्यत्र इतितात्पर्यात् अदोषः; इति द्रष्टव्यम् ।

**अत एवेति** । वादिविप्रतिपत्तेः विद्यमानत्वेन 'न कर्तव्यः' इति-द्वितीयोऽपि न; इत्यर्थः ।

[ १५ **वि.** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने– तद्विभागपरीक्षायाम्– अस्वतन्त्रस्यचेतनत्वादिविभागकर्तव्यशङ्कानिरसने–

अ) 'अथ---विभज्यताम्' इत्यस्य व्याख्याने– अस्वतन्त्रतत्त्वस्यभावाभावतया-विभागकर्तव्यत्वशङ्कात्वेन अवतरणम्, **अर्थः**, भावश्च ।

आ) तच्छङ्कापरिहारकत्वेन 'किं...द्वितीयोऽपीति' इत्यस्य व्याख्याने– १) उक्तशङ्कापरिहरणार्थं प्रश्नत्वेन 'किं...न कर्तव्य एव' इत्यस्य अवतरणम्; अर्थश्च । २) प्रश्नोक्तप्रथमपक्ष-

२. श.ब्रा. ६-१-३.

निवारकतया 'नाद्यः...विशेषात्'इत्यस्य व्याख्याने– क) 'नाद्यः विशेषाभावात्'इत्यस्य अवतरणम्, अर्थश्च। ख) चेतनादिविभागस्य भावादि-विभागतो-वैशिष्ट्यशङ्कानिवारकत्वेन 'अभावस्य...समम्'इत्यस्य व्याख्याने– १. शङ्कात्वेन 'अभावस्य---चेत्'इत्यस्य अवतरणम्, अर्थः, भावश्च। २) शङ्कानिवारकत्वेन 'तथा सति...समम्'इत्यस्य अर्थः। ग) चेतनादि-विभागात् भावादिविभागप्राधान्ये निमित्तकथनपरतया– 'तर्हि---विशेषात्'-इत्यस्य व्याख्याने – १. तन्निमित्तप्रश्नत्वेन 'तर्हि...चेत'इत्यस्य अवतरणम्, अर्थश्च; २. तदुत्तरत्वेन 'वादि...विशेषात्'इत्यस्य अवतरणम्, अर्थः, भावश्च। ३) प्रश्नोक्तद्वितीयपक्षनिवारकतया 'अतः...इति'इत्यस्य भावः। ]

ननु तत्त्वस्य स्वतन्त्रास्वतन्त्रतयैव विभागः क्रियताम्, तथापि अस्वतन्त्रतत्त्वस्य भावाभावतया विभागः न कर्तव्यः'इत्याशङ्कते **अथेति**। चेतनत्वादिनैव= चेतनत्वाचेतनत्वाभ्याम् एव, अस्वतन्त्रम्, विभज्यताम्; न तु भावाभावतया; इत्यर्थः। भावाभावतया स्वतन्त्रविभागकरणे नियामका-भावात्; इति भावः॥

उक्तां शङ्कां परिहर्तुं पृच्छति **किं चेतनत्वादिना विभज्येति**। चेतनत्वाचेतनत्वाभ्याम्, अस्वतन्त्रम्, विभज्य= अस्वतन्त्रविभागं कृत्वा इत्यर्थः; भावाभावतया= भावत्वाभावत्वाभ्याम् इत्यर्थः; अयम्– भावा-भावतया विभागः इत्यर्थः।

आद्यं पक्षम् अपाकरोति **नाद्य इति**। विशेषाभावात्= चेतना-चेतनतया विभागस्य भावाभावतया विभागतः अतिशयाभावात्; इत्यर्थः।

चेतनाचेतनतया विभागस्य भावाभावतया विभागतः विशेषम् **आशङ्कते अभावस्येति**। एवं सति = भावाभावतया अस्वतन्त्रविभाग-करणे, अभावस्य अचेतनत्वम् अनुक्तं स्यात्; इत्यर्थः। अस्मिन्पक्षे अचे-

तनम्य भावप्रभेदत्वात्; इति भावः ॥ **तथा सतीति ।** चेतनाचेतनतयैव अस्वतन्त्रविभागकरणे, चेतनस्य भावप्रभेदत्वाभावात्, भावत्वम् अनुक्तम् स्यात्; इति= हेतोः, समम्= पक्षद्वयं समानम्; इत्यर्थः ।;

पृच्छति **तर्हीति ।** तर्हि= पक्षद्वयस्य अविशेषे, केन विशेषेण = केन अतिशयेन, अस्य – भावाभावतया विभागकथनस्य, प्राधान्यम्= प्राथम्यम्; इत्यर्थः ॥ तत्र उत्तरम् आह **वादीति ।** वादिनाम्, विप्रतिपत्तेः= विवादस्य, भावातिरिक्त-अभावे चेतनातिरिक्त-अचेतने सत्त्वासत्त्वरूप-वैलक्षण्यात्; इत्यर्थः । 'भावातिरिक्त-अभावः अस्ति' इत्यत्र वादिविप्रतिपत्तिसद्भावात्, तन्निरासाय अविप्रतिपन्न-चेतनाचेतनविभागकथनात्, अस्य प्राथम्यं युक्तम्; इति भावः ।

**अत एवेति ।** भावातिरिक्ताभावे विवादरूपविशेषसद्भावात्, तन्निरासाय भावाभावविभागः कार्य एव; इति भावः ।

[ १५ **मु-** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– तद्विभागपरीक्षायाम्– अस्वतन्त्रस्य-चेतनत्वादिविभागकर्तव्यत्व-शङ्कानिरसने–

अ) पूर्वपक्षत्वेन 'अथ...विभज्यताम्' इत्यस्य व्याख्याने– अवतरणम्, शेषश्च ।

आ ) उत्तरपक्षत्वेन 'किं...अपीति' इत्यस्य व्याख्याने– १) 'तत्किं ...न कर्तव्य एव' इत्यस्य व्याख्याने– क) तत्रस्थ विकल्पद्वयस्य उपपादनम् । ख) पुनश्च प्रकारद्वयेन विकल्पद्वित्वोपपादनम् । २) प्रथमविकल्पनिरासक-'नाद्यः...विशेषात्' इत्यत्रस्थ 'तर्हि...विशेषात्' इत्यस्य व्याख्याने– क) अभिप्रायकथनपूर्वकम् अवतरणम् । ख) 'केन' इतिपदस्यार्थश्च । ३) द्वितीय-विकल्पनिरासक 'अतः...अपीति' इत्यस्य अर्थः । ]

---

१. न तन्निरासायविप्रतिपन्न

स्वतन्त्रास्वतन्त्रत्वेन तत्त्वविभागस्य आदित्वं परीक्षया निर्धार्य भावाभावत्वेन विभागस्य तदनन्तरत्वं परीक्षया निर्धारयितुं पूर्वपक्षयति **अथेति** । 'प्रथमतः' इति शेषः ॥

**तत्किमिति** । 'प्रथमतः चेतनत्वादिनैव विभज्यताम्' इत्यत्र 'प्रथमतः'- इत्यस्य व्यावृत्तिपरत्वस्वरूपपरत्वयोः सम्भवात् इदं विकल्पद्वयम् ।,

'ननु भावाभावविभागस्य सर्वथा अकर्तव्यत्वे द्वितीयस्यैव अभावेन तन्निरूप्यप्रथमत्वं स्वरूपं न सम्भवत्येव; अतः 'प्रथमतः' इत्यस्य स्वरूपकथनपरत्वविकल्पनेन द्वितीयपक्षावतरणम् असम्भवि' इति चेत्; न, द्वितीयशून्यत्वेऽपि एकस्यैव 'आद्यन्तवदेकस्मिन्' इतिन्यायेन प्रथमत्वोपपत्तेः । अथवा पूर्वपक्षिणः 'प्रथमतः' इति अध्याहाराभिप्रायपक्षे आद्यः कल्पः; तदभावपक्षे द्वितीयः; इति ।;

'यदि विशेषाभावात् चेतनत्वादिना विभागो न कर्तव्यः, तर्हि तस्मादेव भावत्वादिना विभागोऽपि आदौ न कर्तव्यः ।, यदि वा विनिगमनाविरहात् कृतः, तर्हि अत्र तत्त्वविवेके च नियमेन तथाकरणम् अनुपपन्नम् एव; नियमेन प्राथम्यस्य विशेषसापेक्षत्वात्; तस्य च अत्र अभावात्' इत्यभिप्रेत्य शङ्कते **तर्हीति** ॥ **केनेति** । 'किं' शब्दः आक्षेपार्थः ।

**अत एवेति** । वादिविप्रतिपत्तेः विद्यमानत्वात् एव, 'न कर्तव्य एव' इति द्वितीयोऽपि विकल्पः न युज्यते; इत्यर्थः ।

[ १५ **का.** विषयः— अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने— तद्विभागपरीक्षायाम्— अस्वतन्त्रस्य चेतनत्वादिविभागकर्तव्यत्वशङ्कानिराकरणे—

---

१. पा.सू. १-१-२१/ सि.कौ.सू. ४७३

अ) 'अथ... विभज्यताम्'इत्यस्य व्याख्याने– १) उक्तविभागं समर्थयितुम् आक्षेपत्वेन– अवतरणम्, अर्थः, अभिसन्धिश्च । २) नित्यत्वादिविभागस्य आक्षेपाभावे कारणम् ।

आ) समाधायकतया 'किं...अपीति'इत्यस्य व्याख्याने– १) प्रश्नत्वेन 'किं...न कर्तव्य एव'इत्यस्य अवतरणम् । २) प्रथमपक्षनिवारकतया 'नाद्यः ..विशेषात्'इत्यस्य व्याख्याने– क) 'विशेषाभावात्'इत्यस्य अर्थः । ख) अभावस्य...समम्'इत्यस्य व्याख्याने– १. शङ्कात्वेन 'अभावस्य...चेत्'इत्यस्य अवतरणम्, पदार्थश्च; २. शङ्कापरिहारकतया 'तथा सति...समम्'इत्यस्य पदार्थः । ग) 'तर्हि...विशेषात्'इत्यस्य व्याख्याने– १. उक्तविभागे नियामकाभावशङ्कात्वेन 'तर्हि....चेत्'इत्यस्य अवतरणम्, पदार्थश्च; २. शङ्कानिवारकतया 'वादि...विशेषात्'इत्यस्य भावः, द्विविध आशयश्च । ३) द्वितीयपक्षनिवारकतया 'अतः...अपीति'इत्यस्य पदार्थः । ]

एवम् उक्ततत्त्वविभागं समर्थ्य **यथोक्तम्** अस्वतन्त्रविभागं समर्थयितुम् आक्षिपति **अथेति** । 'अस्वतन्त्रं द्विविधम् चेतनमचेतनञ्च'इत्येवं विभज्यताम्; इत्यर्थः । **अन्यथा** भावस्य अचेतनत्वालाभः; इत्यभिसन्धिः ।

अथ अस्वतन्त्रं नित्यत्वादिना एव विभज्यताम् इति कुतो न शङ्कितम् ? इति चेत्; भावाभावतया नित्यादिविभागायोगात्, प्रागभावादेः नित्यत्वाद्यभावात्; इति ॥

समाधातुं पृच्छति **किमिति** ।

**विशेषाभावादिति** । परोक्तविभागे लाघवरूपनियामकाभावात्; इत्यर्थः ।

अभावस्य अचेतनत्वलाभरूपं नियामकं शङ्कते **अभावस्येति** । एवं सति = मूलोक्तविभागे सति; ॥ **तथा सतीति** । अस्वतन्त्रं द्विविधम् चेतनमचेतनञ्च, अचेतनं द्विविधम् भावोऽभावश्च'इतिविभागे सति; इत्यर्थः ।,

मूलोक्तविभागेऽपि नियामकाभावम् आशङ्कते तर्हीति । साम्ये सति इत्यर्थः । प्राधान्यम्= अवश्यकर्तव्यत्वम् ॥ वादीति । भावाभावविभागे एव विप्रतिपत्तेः सद्भावात्, विप्रतिपन्नस्य च अभ्यर्हितत्वेन आदौ वक्तव्यत्वात्, उक्तविभागस्यैव आवश्यकत्वम्; इति भावः । यद्यपि 'मृदब्रवीत्'[1]-इत्यादिना चेतनविभागे विप्रतिपत्तिः वक्ष्यते; तथापि न बहूनाम्; इत्याशयः ।. यद्वा मृदादिषु चेतनत्वरूपधर्मविप्रतिपत्त्यपेक्षयाऽपि अभावरूपधर्मिविषयविप्रतिपत्तेः प्राधान्येन आदौ निरसनीयत्वम्, इत्याशयः; अत एव तत्र प्रमाणसूचनाय मूले 'मतः'इत्युक्तम्, इत्यवगन्तव्यम् ।, [2]यद्वा सर्वचेतनमतस्य [3]अभिमान्यधिकरणे निरस्तत्वात् अद्यापि सा नास्त्येव, इत्याशयः ।

अत एवेति । विप्रतिपत्तिसद्भावेन अवश्यकर्तव्यत्वादेव; इत्यर्थः ।

[ १५ भ. विषयः- अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने- तद्विभागपरीक्षायाम्- अस्वतन्त्रस्य-चेतनत्वादिविभागकर्तव्यत्वशङ्कानिरसने-

अ) शङ्कानिवारकतया 'किं...अपीति'इत्यस्य व्याख्याने- प्रश्नत्वेन 'किं...न कर्तव्य एव'इत्यस्य व्याख्याने- १) 'किं...विभागः कर्तव्यः'इत्यस्य अर्थः । २) प्रश्नगतप्रथमविकल्पनिरासकतया 'नाद्यः..समम्'इत्यस्य व्याख्याने - क) तन्निरासोपपादने- १. तन्निरासकहेतोः असिद्धिशङ्कात्वेन 'अभावस्य....चेत्'इत्यस्य अवतरणम्, अर्थः, अभिप्रायश्च; २. असिद्धिशङ्कानिवारकत्वेन 'तथा सति...समम्'इत्यस्य अवतरणम्. अर्थश्च । ख) स्वोक्तविभागप्राथम्यनिमित्तपरतया 'तर्हि...विशेषात्'इत्यस्य व्याख्याने- १. निमित्तप्रश्नत्वेन 'तर्हि...चेत्'इत्यस्य अवतरणम्; २. निमित्तकथनपरतया 'वादि...विशेषात्'इत्यस्य व्याख्याने- क. अवतरणम्, ख. 'वादि'पदस्य अर्थनिर्णयश्च । ३) द्वितीयविकल्पनिरासकतया 'अतः...अपीति'इत्यस्य व्याख्याने- 'अत एव'इत्यस्य अर्थः । ४) विप्रतिपत्तेः प्राथम्यप्रयोजकत्वोपपादनम् । ]

---

१. श.ब्रा. ६-१-३. २. इदं वाक्यं बहुत्र नास्ति ।
३. ब्र.सू. १-१-३-६.

**किं चेतनत्वादिना विभज्येति** । 'अस्वतन्त्रं द्विविधम् चेतनो-ऽचेतनश्च; अचेतनो द्विविधः भावोऽभावश्च'इतिविभागः कर्तव्यः; इत्यर्थः ।

विशेषसद्भावं शङ्कते **अभावस्येति** । भावाभावतया प्रथमं विभज्य-'भावो द्विविधः चेतनोऽचेतनश्च'इति विभागे अचेतनस्य भावप्रभेदत्वेन, अभावस्य अचेतनत्वं न उक्तं स्यात्; इत्यर्थः । उक्तरीत्या[1] विभागे तु भावाभावयोः अचेतनप्रभेदत्वेन अभावस्य अचेतनत्वं ज्ञायते; इति हृदयम् ॥ अत्रापि साम्यमेव उपपादयति **तथा सतीति** ॥ भावाभावयोः अचेतनत्वेन विभागे चेतनस्य भावत्वं न ज्ञायते; इत्यर्थः ।;

अस्तु अनयोः विभागयोः विशेषाभावः; तथापि शङ्कितविभागं परित्यज्य एवमेव विभागकरणे न अस्य विभागस्य शङ्कितविभागापेक्षया प्राधान्यम् अभिमतं स्यात्; प्राधान्यं च विनैव विशेषं न उपपद्यते. स च कः प्रकृते ? इति पृच्छति **तर्हीति** । 'अस्वतन्त्रं द्विविधम् भावोऽभावश्च' इतिविभागे अभावानभ्युपगमवादिनो विप्रतिपद्यन्ते; 'चेतनोऽचेतनश्च'इति-विभागे तु न इयं विप्रतिपत्तिः, अभावप्रसक्तेरेव अभावेन तत्र विप्रतिपत्त्य-वकाशाभावात्; इत्याशयेन उत्तरम् आह **वादिविप्रतिपत्तीति** ।,

ननु अभावविषये यथा वादिनां विप्रतिपत्तिः अस्ति एवम् अचेतन-विषयेऽपि सा अस्त्येव, 'मृदब्रवीत्, आपो ब्रुवन्'[2]इत्यादिना सर्वस्यापि चैतन्या-ङ्गीकारेण प्रत्यवस्थानस्य अभिमान्यधिकरणे प्रदर्शितत्वात्; एवञ्च उभयपक्षेऽपि पुनः निर्विशेषता एव; इति चेत्; न, अत्र 'वादि'पदेन स्वाभिप्रायप्रकटक-ग्रन्थविशेषकर्तॄणाम् एव विवक्षितत्वात् ।, सर्वचैतन्यमतं तु श्रुत्यर्थनिर्णयाय उत्प्रेक्षारूपेण स्वयम् एव सूत्रकारेण पूर्वपक्षीकृतम्; इति न स पूर्वपक्षी साङ्ख्यगौतमादिवत् पृथग्वादी भवितुम् अर्हति; अभावानभ्युपगमवादी तु प्रभाकरः प्रसिद्ध एव; इति ॥

---

१. शङ्कितरीत्या

२. श.ब्रा.६-१-३

अत[3] एवेति । चेतनाचेतनविभागस्य सर्वैः अभ्युपगतत्वेन तत्र विप्रतिपत्त्यभावादेव; इत्यर्थः । यद्वा एवं वादिविप्रतिपत्तिलक्षणविशेष-सद्भावेन अस्य विभागस्य प्राधान्यसद्भावादेव इत्यर्थः ॥

ननु[4] विप्रतिपत्तिसद्भावमात्रेण कथं प्राधान्यम् ? इति चेत्; उच्यते – अज्ञातार्थज्ञापनापेक्षया सन्देहच्छेदनं गरीयः, अज्ञानापेक्षया सन्देहस्य आधिक्येन क्लेशापादकत्वात्; यथोक्तं भागवते[5]–

'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥'

इति ।, विप्रतिपत्तिश्च सन्देहजननी; सा च यत्र नास्ति तत्र सन्देहस्यैव अनुदयात् तत्परिहारोऽपि नास्ति । –इति विप्रतिपन्नपक्षस्यैव गरीयस्त्वम् अज्ञातपक्षापेक्षया ॥ प्रकृते च सन्देहजनिका विप्रतिपत्तिः उत्तरत्र निरसि-ष्यते; इति सन्देहच्छेदनलक्षणफलाधिक्यात्, भावाभावविभागस्यैव प्राधा-न्यम्; इति ।

[ १६ **टी.** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपणे– तद्विभाग-परीक्षायाम्– अभावनिषेधपक्षखण्डने–

अ) अभावनिषेधपक्षः

आ) तत्खण्डने– १) हेतूक्तिः । २) उक्तहेतोः अभावसाधकत्वोप-पादने– अभावप्रतीतेः अभावान्तरमात्रविषयत्वनिरसने– भूतलमात्रविषयत्वस्य प्रकारद्वयेन निरसने– क) प्रथमप्रकारकतया– १. भूतलमात्रविषयत्वशङ्का, २. तच्छङ्कानिरसने– 'मात्र'पदस्य अर्थद्वयं विकल्प्य– क. प्रथमार्थे दोषः,

---

३. अत्र एकत्र प्रतीकमेव नास्ति । अन्यत्र च 'चेतना...यद्वा' इति नास्ति ।
४. अयं विषय एव ग्रन्थान्तरे नास्ति ।
५. भागवते ३–८–१७ श्लोकः

ख. द्वितीयार्थस्यापि द्वैविध्यानुसारेण क्रमेण उभयपक्षनिरासश्च। ख) द्वितीय-प्रकारकथया– १. भूतलमात्रविषयत्वशङ्का, २. तच्छङ्कानिरसने– क. एत-च्छङ्कायाः विवेकेन त्रैविध्यं कृत्वा प्रतिविधायां भिन्नभिन्नविषयकत्वस्य प्रदर्शनम्, ख. विपक्षे अनिष्टापादनञ्च।

इ) अभावनिषेधखण्डननिराकरणोपसंहारश्च॥ ]

**'अभाव एव नास्ति' इति केचित्॥**

**तदसत्; 'नास्ति' इतिप्रतीतेः दुरपह्नवत्वात्।**

**" 'घटो नास्ति' इतिप्रतीतिः भूतलमात्रविषया" इति चेत्; 'मात्र' इति किम् १) भूतलम् एव उच्यते? उत २) अतिरिक्तं किञ्चित्? १) आद्ये घटवत्यपि प्रसङ्गः। २) अतिरिक्तोऽपि क) घटः चेत् उक्तो दोषः; ख) भावान्तरं चेत् रूपवति घटे 'गन्धो नास्ति' इतिप्रतीतिप्रसङ्गः।;**

**"ननु घटाभावः १) घटाभाववति भूतले सम्बध्यते? उत २) घटवति? १) नाद्यः, आत्माश्रयादिदोषप्रसङ्गात्, २) न द्वितीयः, विरोधात्; अतो वक्तव्यं 'भूतलमात्र' इति।, तदेव अस्तु 'नास्ति' इतिप्रतीतिविषयः।" इति चेत्; न।,**

**प्रश्न एव अयं विविच्यताम्; – '१) यदि अभावसम्बन्धात् प्राक् कीदृशं भूतलम्? इति। यदिवा २) सम्बन्धसमये कीदृशं भूतलम्? इति। यद्वा ३) यदि अभावात् इदं विविच्येत तदा कीदृशं नाम स्यात्? इति।' १) आद्ये 'सघटम्' इत्येव उत्तरम्; २) द्वितीये 'घटाभाववत्' इति; ३) तृतीये यदि विवेको वस्तु-कृतः तदा अभावस्य नष्टत्वात् क) 'घटवत्' इति; यदि बुद्धिकृतः तदा ख) 'बुद्ध्या एव घटप्रसक्तिमत्' इति।,**

१. का. टिप्पण्यां 'घटाभाववदित्येवोत्तरमिति' इति प्रतीकमुपलभ्यते।

**अन्यथा एवम् भावप्रतिक्षेपोऽपि स्यात् ।;**

**इति आस्तां विस्तरः ॥**

[ १६ **स. विषयः–** अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– तद्विभागपरीक्षायाम्– अभावनिषेधपक्षखण्डने–

अ) वादिविप्रतिपत्तिदर्शकतया 'अभावः...केचित्'इत्यस्य अवतरणम् ।

आ) अभावनिषेधपक्षनिराकरणे 'तदसत्...विस्तरः'इत्यस्य व्याख्याने– १) 'दुरपह्नवत्वात्'इत्यस्य लभ्यार्थः । २) 'घटो नास्तीति...प्रतीतिप्रसङ्गः'-इत्यस्य व्याख्याने– क) 'आद्ये घटवत्यपि प्रसङ्गः' इत्यस्योपपादकहेतूक्तिः । ख) 'अतिरिक्तः...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने– अतिरिक्तमपि द्वेधा विकल्प्य– १. प्रथमविकल्पनिरासकतया 'अतिरिक्तः...दोषः'इत्यस्य अवतरणम्, अर्थश्च; २. द्वितीयविकल्पनिरासकतया 'भावान्तरं...प्रतीतिप्रसङ्गः' इत्यस्य अवतरणम्, अर्थश्च । ३) 'ननु...अपि स्यात्'इत्यस्य व्याख्याने– क) विकल्पानवकाशशङ्कात्वेन 'ननु...चेत्'इत्यस्य व्याख्याने– १. अवतरणम्; २. 'आत्माश्रयादिप्रसङ्गात्'इत्यस्य अर्थः, 'यद्विशिष्टे वर्तते तद्विशेषणेऽपि वर्तते'इतिन्यायस्य परिष्कारः; ३. 'विरोधात्'इत्यस्य अर्थः । ख) शङ्कानिवारकतया 'प्रश्नः...अपि स्यात्'इत्यस्य व्याख्याने– १. शङ्काग्रन्थस्थ'सम्बध्यते'-इतिपदार्थनिर्णयपूर्वकं तत्र-कृतविकल्पस्य युक्तत्वरूपो भावश्च; २. पदार्थे– क. 'वस्तुकृतः'इत्यस्य विग्रहः, भावश्च; ख. 'बुद्धिकृतः'इत्यस्य विग्रहः; ३. दूषणान्तरत्वेन 'अन्यथा...अपि स्यात्'इत्यस्य अवतरणम्, भावश्च । ]

वादिविप्रतिपत्तिम् एव दर्शयति **अभाव एवेति** ॥

**दुरपह्नवत्वादिति** । एतेन अभावानङ्गीकारे प्रतीतिविरोधः स्यात्; इत्युक्तं भवति ॥

**आद्य इति** । भूतलमात्रसद्भावात् इत्यर्थः ।,

'अतिरिक्तम्'इतिद्वितीयेऽपि पक्षे– किम् अतिरिक्तः १) घट एव ?, उत २) धर्मान्तरम् ? १) 'नाद्यः'इत्याह **अतिरिक्तोऽपीति** । उक्तो दोषः = घटवति भूतले 'घटो नास्ति'इतिप्रतीतिप्रसङ्गरूपः इत्यर्थः ॥ २) 'न द्वितीयः'इत्याह **भावान्तरं चेदिति** । प्रतियोगिभिन्नधर्मान्तरं चेत्; इत्यर्थः ॥

'भूतलमात्रस्य भवद्भिरपि अवश्यम् अङ्गीकर्तव्यत्वेन तत्र विकल्पानवकाशः'इत्यभिप्रेत्य शङ्कते **नन्विति** ।;

**आत्माश्रयादिप्रसङ्गादिति** । घटाभावविशिष्टे 'स एव अभावः वर्तते'इत्युक्ते आत्माश्रयः, अभावान्तरविशिष्टे अभावो वर्तते'इत्युक्ते एतद्विशिष्टे अभावान्तरसत्त्वेन अन्योन्याश्रयता, एवम् अभावत्रित्वे चक्रकापत्तिः, अनेक अभावाङ्गीकारे अनवस्था स्यात्; इत्यर्थः ।.

''ननु घटाभावविशिष्टे 'घटाभावः अस्ति'इत्युक्ते कथम् आत्माश्रयप्रसङ्गः ? न च 'यत् विशिष्टे वर्तते तत् विशेषणेऽपि वर्तते'इतिन्यायात् घटाभावस्य घटाभावे सत्त्वापातेन आत्माश्रयः इति वाच्यम्, दण्डविशिष्टे कुण्डलसत्त्वेऽपि कुण्डलस्य' दण्डे-विद्यमानत्वनियमाभावात्; अन्यथा तत्रापि तथाऽऽपत्तेः''इति चेत्; अत्र ब्रमः– 'यद्विशेषणाभावावच्छिन्नस्य यस्य यद्विशेषणाधारत्वम् तद्विशेषणे तद्विशेषणसत्त्व'नियमाभावेऽपि, 'यद्विशेषणाभावावच्छिन्नस्य यस्य यद्विशेषणाधारत्वं न सम्भवति तद्विशेषणावच्छिन्ने सत्त्वे विशेषणस्य तद्विशेषणेऽपि सत्त्वं नियतम् एव; व्यभिचारभावात् । प्रकृते च 'घटाभाव'रूपविशेषणाभावावच्छिन्नस्य घटाभावाधारत्वासम्भवेन घटाभावसत्त्वे स्वस्मिन्नेव स्वसत्त्वप्राप्त्या आत्माश्रयः स्यादेव ।, दण्डाभावावच्छिन्ने च कुण्डलसत्त्वविरोधासम्भवेन, दण्डिनि कुण्डलसत्त्वेऽपि दण्डे कुण्डलसत्त्वप्रसङ्गाभावेन प्रतिबन्ध्यनुपपन्नैव इति ।;

**विरोधादिति ।** घटवत् भूतले घटाभावो न सम्भवति, भावाभावयोः एकावच्छेदेन विरुद्धत्वात्; इत्यर्थः ॥,

**प्रश्न एवायं विविच्यतामिति ।** "ननु 'अभावः किं १) घटाभावति वर्तते ? २) घटवति वा ?'इति पृष्टे, कथं वक्ष्यमाणविकल्पावकाशः सम्बध्यते, वर्तमानार्थक'लट्'प्रयोगेण 'घटाभावसम्बन्धकालीनं भूतलं कीदृशम् ?'इत्यस्यैव लब्धत्वात् ? इति चेत्; न, अत्र हि 'यत्र भूतले अभावः सम्बध्यते, तत् भूतलं कीदृशम्?'इतिप्रश्नाभिप्रायः, तत्र च 'सम्बध्यते'इत्यत्र लटो वर्तमानत्वं न विवक्षितम्; एवञ्च 'सम्बध्यते'-इत्यस्य 'सम्बन्धवत्'इत्यर्थः पर्यवस्यति, इति विकल्पस्य युक्तत्वात् इति भावः ।,

वस्तुकृतः= वस्तुना कृतः । भूतले अभावसत्त्वदशायाम् प्रतियोगिनि आनीते अभावात् भूतलं विभज्यते इति; भावः ॥ बुद्धिकृतः= बुद्ध्या कृतः ।

ननु अभावसम्बन्धसमये 'भूतलम् अभाववत्'इत्युक्ते आत्माश्रयः स्यात्, इति अस्वरसात् दूषणान्तरम् आह **अन्यथेति ।** तथाहि 'घटलक्षण भावः किं १) घटवति वर्तते ? उत २) घटाभाववति ? ' १) आद्ये आत्माश्रयः; २) द्वितीये विरोधः'इतियुक्तेः तत्रापि तुल्यत्वात्; इति भावः ।

[ १६ के. विषयः— अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने— तद्विभागपरीक्षायाम्— अभावनिषेधनिराकरणे—

अ) विप्रतिपत्तिप्रदर्शकत्वेन 'अभावः...केचित्'इत्यस्य व्याख्याने— १) अवतरणम्, अर्थः । २) अधिकरणज्ञानस्य घटाभावगोचरत्वेऽपि घटाभावादिसंशयावकाशराहित्यनिराकरणात्मको भावश्च ।

आ) 'तदसत्...स्यात्'इत्यस्य व्याख्याने–

१) अभावनिषेधानुपपत्तिदर्शकतया 'तदसत्...दुरपह्नवत्वात्'इत्यस्य अवतरणम्, अभिप्रायश्च ।

२) उक्तार्थानुपपत्तेः प्रकारद्वयेन-समर्थकतया 'घटो नास्तीति...अपि स्यात्'-इत्यस्य व्याख्याने– क) प्रथमप्रकारकतया– 'घटो नास्तीति...प्रतीतिप्रसङ्गः' इत्यस्य व्याख्याने– १. उक्तानुपपत्तिशङ्कात्वेन 'घटो नास्तीति...चेत्'इत्यस्य अवतरणम्; २. तच्छङ्कानिरासकत्वेन– 'मात्रेति किं...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने– क. 'मात्र'पदार्थप्रश्नस्य भावकथनपूर्वकम् तत्'मात्र'पदार्थविकल्प-प्रश्नत्वेन 'किं...किञ्चित्'इत्यस्य व्याख्याने– अवतरणम्; प्रथमविकल्पस्य भावः; 'उत...किञ्चित्'इतिद्वितीयविकल्पस्य भावश्च; ख. तदुभयविकल्प-निरासक'आद्ये...प्रतीतिप्रसङ्ग इति'इत्यस्य व्याख्याने– १- प्रथमविकल्प-निरासक'आद्ये घटवत्यपि प्रसङ्गः'इत्यस्य सोपपत्तिः अर्थः, २- द्वितीयविकल्पस्य प्रकारद्वयेन निरासक'अतिरिक्तः...प्रतीतिप्रसङ्गः'इतिग्रन्थस्य व्याख्याने– क- 'उक्तो दोषः'इत्यस्य अर्थः, ख- 'भावान्तरं चेत्'इत्यस्य अभिप्रायश्च । ख) द्वितीयप्रकारकतया 'ननु....अपि स्यात्'इत्यस्य व्याख्याने– १. उक्ता-नुपपत्तेः प्रकारान्तरेण-विघटकशङ्कात्वेन 'ननु...चेत्'इत्यस्य व्याख्याने– क. अवतरणम्; ख. 'आत्माश्रयादिप्रसङ्गात्'इत्यस्य व्याख्याने– १- अर्थः, २- 'यद्विशिष्टे यद्वर्तते तद्विशेषणेऽपि तदस्ति'इतिन्यायस्य परिष्कारः, ३- मतान्तरेण सोपपत्तिकम् 'आत्माश्रयः'इत्यस्य अतद्गुणसंविज्ञानबहुव्रीहौ तात्प-र्यञ्च; ग. 'विरोधात्'इत्यस्य– १- स्वमतेन अर्थः, भावश्च; २- मतान्तरेण अत्र अभिप्रेतार्थप्रदर्शनञ्च; २. एतच्छङ्कानिवारकत्वेन 'न प्रश्न एवायं... अपि स्यात्'इत्यस्य व्याख्याने– क. एतत्प्रश्नार्थविकल्पस्य युक्तत्वसमर्थने– १- एतत्प्रश्नाभिप्रायः, २- शङ्काग्रन्थस्थ'सम्बध्यते'इत्यस्य तात्पर्यम्, ३- अभा-वसम्बन्धस्य प्रागभावादिरूपत्वम्; ख. 'वस्तुकृतः'इत्यस्य विग्रहः, भावश्च; ग. 'बुद्धिकृतः'इत्यस्य अर्थश्च; घ. 'अन्यथा...अपि स्यात्'इत्यस्य व्याख्याने– १- 'अन्य'पदार्थः, २- भावश्च ।

३) उक्तानुपपत्तिविघटकशङ्कानिवारणोपसंहारकतया 'इत्यास्तां विस्तरः'इत्यस्य व्याख्याने– क) 'इति'पदार्थः । ख) 'आस्तां विस्तरः'इत्यस्य प्रयोजनरूपेण अवतरणञ्च । ]

**विरोधादिति** । घटवत् भूतले घटाभावो न सम्भवति, भावाभावयोः एकावच्छेदेन विरुद्धत्वात्; इत्यर्थः ॥,

**प्रश्न एवायं विविच्यतामिति** । ''ननु 'अभावः किं १) घटाभावति वर्तते ? २) घटवति वा ?'इति पृष्टे, कथं वक्ष्यमाणविकल्पावकाशः सम्बध्यते, वर्तमानार्थक'लट्'प्रयोगेण 'घटाभावसम्बन्धकालीनं भूतलं कीदृशम् ?'इत्यस्यैव लब्धत्वात् ? इति चेत्; न, अत्र हि 'यत्र भूतले अभावः सम्बध्यते, तत् भूतलं कीदृशम्?'इतिप्रश्नाभिप्रायः, तत्र च 'सम्बध्यते'इत्यत्र लटो वर्तमानत्वं न विवक्षितम्; एवञ्च 'सम्बध्यते'-इत्यस्य 'सम्बन्धवत्'इत्यर्थः पर्यवस्यति, इति विकल्पस्य युक्तत्वात् इति भावः ।,

वस्तुकृतः= वस्तुना कृतः । भूतले अभावसत्त्वदशायाम् प्रतियोगिनि आनीते अभावात् भूतलं विभज्यते इति; भावः ॥ बुद्धिकृतः= बुद्ध्या कृतः ।

ननु अभावसम्बन्धसमये 'भूतलम् अभाववत्'इत्युक्ते आत्माश्रयः स्यात्, इति अस्वरसात् दूषणान्तरम् आह **अन्यथेति** । तथाहि 'घटलक्षण भावः किं १) घटवति वर्तते ? उत २) घटाभाववति ? ' १) आद्ये आत्माश्रयः; २) द्वितीये विरोधः'इतियुक्तेः तत्रापि तुल्यत्वात्; इति भावः ।

[ १६ के. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– तद्विभागपरीक्षायाम्– अभावनिषेधनिराकरणे–

अ) विप्रतिपत्तिप्रदर्शकत्वेन 'अभावः...केचित्'इत्यस्य व्याख्याने– १) अवतरणम्, अर्थः । २) अधिकरणज्ञानस्य घटाभावगोचरत्वेऽपि घटाभावादिसंशयावकाशराहित्यनिराकरणात्मको भावश्च ।

आ) 'तदसत्...स्यात्'इत्यस्य व्याख्याने–

१) अभावनिषेधानुपपत्तिदर्शकतया 'तदसत्...दुरपह्नवत्वात्'इत्यस्य अवतरणम्, अभिप्रायश्च ।

२) उक्तार्थानुपपत्तेः प्रकारद्वयेन-समर्थकतया 'घटो नास्तीति...अपि स्यात्'-इत्यस्य व्याख्याने– क) प्रथमप्रकारकतया– 'घटो नास्तीति...प्रतीतिप्रसङ्गः' इत्यस्य व्याख्याने– १. उक्तानुपपत्तिशङ्कात्वेन 'घटो नास्तीति...चेत्'इत्यस्य अवतरणम्; २. तच्छङ्कानिरासकत्वेन– 'मात्रेति किं...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने– क. 'मात्र'पदार्थप्रश्नस्य भावकथनपूर्वकम् तत्'मात्र'पदार्थविकल्प-प्रश्नत्वेन 'किं...किञ्चित्'इत्यस्य व्याख्याने– अवतरणम्; प्रथमविकल्पस्य भावः; 'उत...किञ्चित्'इतिद्वितीयविकल्पस्य भावश्च; ख. तदुभयविकल्प-निरासक'आद्ये...प्रतीतिप्रसङ्ग इति'इत्यस्य व्याख्याने– १- प्रथमविकल्प-निरासक'आद्ये घटवत्यपि प्रसङ्गः'इत्यस्य सोपपत्तिः अर्थः, २- द्वितीयविकल्पस्य प्रकारद्वयेन निरासक'अतिरिक्तः...प्रतीतिप्रसङ्गः'इतिग्रन्थस्य व्याख्याने– क- 'उक्तो दोषः'इत्यस्य अर्थः, ख- 'भावान्तरं चेत्'इत्यस्य अभिप्रायश्च । ख) द्वितीयप्रकारकतया 'ननु....अपि स्यात्'इत्यस्य व्याख्याने– १. उक्ता-नुपपत्तेः प्रकारान्तरेण-विघटकशङ्कात्वेन 'ननु...चेत्'इत्यस्य व्याख्याने– क. अवतरणम्; ख. 'आत्माश्रयादिप्रसङ्गात्'इत्यस्य व्याख्याने– १- अर्थः, २- 'यद्विशिष्टे यद्वर्तते तद्विशेषणेऽपि तदस्ति'इतिन्यायस्य परिष्कारः, ३- मतान्तरेण सोपपत्तिकम् 'आत्माश्रयः'इत्यस्य अतद्गुणसंविज्ञानबहुव्रीहौ तात्प-र्यञ्च; ग. 'विरोधात्'इत्यस्य– १- स्वमतेन अर्थः, भावश्च; २- मतान्तरेण अत्र अभिप्रेतार्थप्रदर्शनञ्च; २. एतच्छङ्कानिवारकत्वेन 'न प्रश्न एवायं... अपि स्यात्'इत्यस्य व्याख्याने– क. एतत्प्रश्नार्थविकल्पस्य युक्तत्वसमर्थने– १- एतत्प्रश्नाभिप्रायः, २- शङ्काग्रन्थस्थ'सम्बध्यते'इत्यस्य तात्पर्यम्, ३- अभा-वसम्बन्धस्य प्रागभावादिरूपत्वम्; ख. 'वस्तुकृतः'इत्यस्य विग्रहः, भावश्च; ग. 'बुद्धिकृतः'इत्यस्य अर्थश्च; घ. 'अन्यथा...अपि स्यात्'इत्यस्य व्याख्याने– १- 'अन्य'पदार्थः, २- भावश्च ।

३) उक्तानुपपत्तिविघटकशङ्कानिवारणोपसंहारकतया 'इत्यास्तां विस्तरः'इत्यस्य व्याख्याने– क) 'इति'पदार्थः । ख) 'आस्तां विस्तरः'इत्यस्य प्रयोजनरूपेण अवतरणञ्च । ]

तामेव विप्रतिपत्तिं दर्शयति **अभाव एवेति** । अभाववादिनाऽपि अधिकरणसापेक्षत्वम् अभ्युपगतम् एव; तथाच आवश्यकाधिकरणस्वरूपादेव अभावप्रतीतिव्यवहारयोः अन्यथासिद्धेः न अतिरिक्ताभावकल्पकम् अस्ति; इत्यर्थः ।

न चैवम् 'अधिकरणज्ञानस्यैव अभावगोचरत्वापत्त्या कथं घटाभावादिसंशयावकाशः ?' इति वाच्यम्; अधिकरणज्ञानस्य वस्तुतो घटाभावगोचरत्वेऽपि तदप्रकारकत्वात् न तदभावसंशयविरोधित्वम्, समानप्रकारकनिश्चयस्यैव संशयविरोधित्वस्य सर्वसम्मतत्वात्; इति भावः ॥

'नास्ति'इतिप्रतीतिरेव अभावं विना अनुपपद्यमानत्वात् तत्कल्पिका, इति तत्कल्पकसद्भावात् अभावोऽपि अङ्गीकार्यः;'इत्याशयानुपपत्तिं दर्शयति **तदिति** । एतेन 'अभावानङ्गीकारे प्रतीतिविरोधः स्यात्'इत्युक्तं भवति ।

'ननु न प्रतीतिविरोधः, प्रतीतेः अधिकरणमात्रविषयत्वेन उपपत्तेः' इति शङ्कते **घटो नास्तीति** ।;

" 'भूतलमात्रम्'इत्यस्य हि 'घटवद्भूतलं वा अर्थः'इति न परेण वक्तुं शक्यम्, घटरहितत्व-घटवदन्यत्वयोः अभावगर्भतया तत्स्वीकारप्रसङ्गात्; किन्तु अन्य एव"इति भावेन विकल्पं पृच्छति **किमित्यादिना** ॥ ॥ तथाच अत्र पक्षे भूतलमात्रशब्दे 'भूतल'शब्दसमानार्थ एव; इति भावः ॥ **उतेति** । 'मात्र'शब्दस्य निरर्थकत्वभीत्या 'भूतलमात्रम्'इत्यस्य स्वातिरिक्तवस्तुविशिष्टभूतलम् इत्यर्थः; इति भावः ।,

**आद्य इति** । घटवद्भूतलस्यापि भूतलमात्रत्वात्, घटवत्यपि भूतले घटाभावधीः स्यात्; इत्यर्थः ॥ **उक्तोदोष इति** । घटवति भूतले 'घटो नास्ति'इतिप्रतीतिप्रसङ्गरूपः; इत्यर्थः । **भावान्तरं चेदिति** ।" 'भावविशिष्टे वस्तुनि अभावप्रतीतिः'इति न परेण अङ्गीकर्तुं शक्यम्, अभाव-

स्वीकारप्रसङ्गात्; अतः 'मात्र'शब्देन भावान्तरवैशिष्ट्यम् एव वक्तव्यम्'' इत्यभिप्रायेण 'भावान्तरं चेत्'इत्युक्तम् ।

ननु '' 'मात्र'इति किं भूतलम् एव उच्यते ?''इत्यादिदूषणम् अयुक्तम्, स्वव्याहतत्वात्; अतिरिक्ताभाववादिनाऽपि त्वया अभावाधिकरणत्वेन भूतलमात्रस्य अवश्यं वाच्यत्वेन, तत्रापि उक्तदूषणप्रसरात्; ततश्च परमते अभावस्य अधिकरणं न सिद्ध्येत् ।, तस्मात् परेणाऽपि 'भूतलमात्रम् अभावाधिकरणं'वदता 'मात्र'शब्दार्थः कश्चित् अङ्गीकर्तव्य एव; इति तस्यैव मयाऽपि अङ्गीकारेण 'नास्ति'इतिप्रतीतेः भूतलमात्रविषयत्वसम्भवात् न दोषः''इत्याशयेन स्वाभिमतम् अर्थम् परेण अङ्गीकारयितुम् आशङ्कते **नन्विति** ।।,

**आत्माश्रयादीति** । 'घटाभाववति'इत्यत्र १] तेनैव अभावेन तद्वत्त्वं विवक्षितम् ? २] अभावान्तरेण वा ? १] आद्ये आत्माश्रयः । २] द्वितीये अभावान्तरम् अपि १) स्वेनैव तद्वति ? २) अभावान्तरेण वा ? इति । १) आद्ये तु आत्माश्रय एव । २) द्वितीयेऽपि किं १. प्रथमेन ? उत २. अपरेण ? १. आद्ये अन्योन्याश्रयः । २. द्वितीये– अपरोऽपि प्रथमेन तद्वति चेत् तदा चक्रकम्; चतुर्थादिना चेत् तदा अनवस्था; इत्यर्थः ।,

''ननु कथं घटाभाववद्भूतलस्य घटाभावाधिकरणत्वे आत्माश्रयादिप्रसङ्गः ? न च– 'यद्विशिष्टे यद्वर्तते, तद्विशेषणेऽपि तदस्ति'इतिन्यायेन घटाभावेऽपि घटाभावसत्त्वापातेन आत्माश्रयः –इति वाच्यम्, दण्डविशिष्टे कुण्डलसत्तायाम् अपि दण्डे कुण्डलस्य असत्त्वेन नियमासिद्धेः; अन्यथा तदपि स्यात्''इति चेत्; न, भावानवबोधात्; यद्विशेषणाभावावच्छिन्नस्य यस्य यद्विशेषणाधारत्वम् उपपद्यते तद्विशेषणे तद्विशेषणसत्तानियमाभावेऽपि'

यद्विशेषणाभावाच्छिन्नस्य यद्विशेषणाधारत्वं न सम्भवति तत्र तद्विशेषणे तद्विशेषणस्य सत्त्वं नियतम् एव; व्यभिचाराभावात् । अस्ति च एतत् प्रकृते, घटाभावरूपविशेषणाभावावच्छिन्नघटवत्तया घटाभावरूपविशेषणवत्त्वासम्भवात् । **ततश्च** घटाभावरूपविशेषणे घटाभावरूपविशेषणसत्त्वे, अस्मिन् स्ववृत्त्या आत्माश्रयत्वं स्यादेव; इति द्रष्टव्यम् ।,

केचित्तु "न वृत्तित्वमात्रम् आत्माश्रयः, प्रमेयत्वस्यापि तथात्वेन केवलान्वयित्वाभावापत्तेः; किन्तु स्वमात्रवृत्तित्वम् एव ।, घटाभावस्य स्ववृत्तित्वे सति भूतलवृत्तित्वाङ्गीकारात् न स्वमात्रवृत्तित्वम्, इति आत्माश्रयोऽत्र दुर्निरूप एव । अतद्गुणसंविज्ञानबहुव्रीहिणा 'आदि'पदोपात्तअन्योन्याश्रये एव च अस्य तात्पर्यम्"इत्याहुः ।;

**विरोधादिति** । घटवद्भूतलस्य घटाभावाधिकरणत्वं न सम्भवति, विरुद्धत्वात्; इत्यर्थः । यद्यपि प्रागभावध्वंसाभावयोः अस्ति प्रतियोगिसामानाधिकरण्यम्, तथापि न एककालिकं तत्; इति एककालिकं सामानाधिकरण्यं विरुद्धम् एव; इति भावः ॥ अत्यन्ताभावम् अभिप्रेत्य इदमुक्तम् इत्याहुः ॥;

**प्रश्न एवायमिति** । "ननु 'अभावः किं १) घटाभाववति सम्बध्यते ? २) घटवति वा ?' इति परेण प्रश्ने कृते कथं वक्ष्यमाणो विकल्पावकाशः ?, 'सम्बध्यते'इति वर्तमानप्रयोगात् 'घटाभावसम्बन्धकालीनं भूतलं कीदृशम् ?'इत्यर्थस्यैव पर्यवसन्नत्वात्;"इति चेत्; न, भावानाकलनात् । अत्र हि 'यत्र भूतले अभावः सम्बध्यते तद्भूतलं कीदृशम् ?' इति प्रश्नाभिप्रायः ।, तत्र 'सम्बध्यते'इति वर्तमानत्वविवक्षणात् 'सम्बध्यते'इत्यस्य 'सम्बन्धवत्'इत्येव अर्थः पर्यवसितो भवति ।, अभावसम्बन्धश्च तत्सत्तादशायाम् इव अभावसत्त्वदशायाम् अपि प्रागभावादिरूपः सम्भवति इति युक्त एव विकल्पावसरः; इति ध्येयम् ।,

**वस्तुकृत इति** । वस्तुना कृतः; इत्यर्थः । घटाभाववति भूतले घटानयनानन्तरम् आनीतेन घटाभावेन भूतलस्य अभावसम्बन्धसम्पादनात्; इति भावः ॥ **बुद्धिकृत इति** । बुद्ध्या तर्कितः[१]; इत्यर्थः ।;

**अन्यथेति** । अतिरिक्ताभावानङ्गीकारे; इत्यर्थः ॥ **भावेति** । 'तत्र घटोऽस्ति'इतिबुद्धेः 'घटो नास्ति'इतिबुद्धेरिव भूतलमात्रविषयत्वस्य, 'घटवति घटः सम्बध्यते ? तदभाववति वा ?'इतिप्रश्नस्य आत्माश्रयापत्त्यादिरूपतद्दूषणस्य च साम्यात्; इति भावः ।

उपसंहरति **इतीति** । 'घटो नास्ति'इतिप्रतीतिविषयनिरूपणात्, अभावप्रतिक्षेपो न; इत्यर्थः ॥ 'नेतिविस्तरम्'[२]इतिप्रतिज्ञाविरोधपरिहाराय आह **आस्तां विस्तर इति** ॥

[ १६ **वि.** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ व्याख्याने– तद्विभागपरीक्षायाम्– अभावनिषेधनिराकरणे–

अ) उक्तविभागस्य प्रकारान्तरेण अनुपपत्तिशङ्कात्वेन 'अभावः... केचित्'इत्यस्य व्याख्याने– १) अवतरणम्, अर्थः, 'एव'कारसूचितार्थश्च ।

आ) तच्छङ्कानिरासकतया 'तदसत्...विस्तरः'इत्यस्य व्याख्याने—

१) एतच्छङ्कायाः सहेतुकदूषणे 'तदसत्...दुरपह्नवत्वात्'इत्यस्य व्याख्याने– क) 'तदसत्'इत्यस्य पदार्थः । ख) तदसत्त्वे हेतुत्वेन 'नास्तीतिप्रतीतेर्दुरपह्नवत्वात्'इत्यस्य व्याख्याने– अवतरणम्, 'प्रतीति'-पदार्थश्च ।

२) उक्तहेतोः प्रकारद्वयेन-उपपादने 'घटो...अपि स्यात्'इत्यस्य व्याख्याने–

क) प्रथमप्रकारकतया 'घटो नास्तिति...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने– १. घटाभावप्रतीतेः भूतलस्वरूपमात्रविषयत्वशङ्कात्वेन 'घटो...चेत्'इत्यस्य– क. अवतरणम्; ख. तत्प्रतीत्याकारस्पष्टीकरणञ्च; २. एतच्छङ्कापरिहारकतया

---

१. 'कृतः'इत्युभयत्र । २. टीकामङ्गलाचरणपद्ये

— 'मात्रेति..प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने— क. 'भूतलमात्र'शब्दार्थविकल्प-द्वयप्रश्नत्वेन 'मात्रेति...किञ्चित्'इत्यस्य व्याख्याने— अवतरणम्, पदार्थश्च; ख. तदुभयविकल्पनिरासकतया 'आद्ये...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने— १— प्रथमविकल्पनिरासकतया 'आद्ये घटवत्यपि प्रसङ्गः'इत्यस्य व्याख्याने— पदार्थः, भावश्च, २— द्वितीयविकल्पनिरासकतया 'अतिरिक्तोऽपि...प्रतीति-प्रसङ्गः'इत्यस्य व्याख्याने— अस्मिन्पक्षे विकल्पद्वयविवेकेन तत्रस्थद्वितीय-विकल्पेऽपि पुनः विकल्पद्वयं कृत्वा तदुभयपक्षनिवारणे— क— तत्प्रथमपक्ष-निरासकतया 'अतिरिक्तोऽपि...दोषः'इत्यस्य— अवतरणम्, अर्थश्च, ख— द्वितीयपक्षनिरासकतया 'भावान्तरं..प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने— अर्थश्च ।

ख) द्वितीयप्रकारकतया— 'ननु...अपि स्यात्'इत्यस्य व्याख्याने— १. उक्तदोषपरिहारकशङ्कात्वेन 'ननु...चेत्'इत्यस्य व्याख्याने— क. अवत-रणम्; ख. 'ननु...उत घटवति'इत्यस्य व्याख्याने— १— 'ननु...सम्बध्यते'-इतिप्रथमविकल्पस्य व्याख्याने— क— पदार्थः, ख— 'घटाभाव'पदस्य प्रकार-त्रयेण अर्थे— १- घटप्रध्वंसः, २- संसर्गाभावः, ३-मतान्तरेण च 'सिद्धान्ते प्रामाणिकस्य अत्यन्ताभावप्रतियोगित्वात् अस्य परोक्तानुवादत्वम्', २— 'उत घटवति'इतिद्वितीयविकल्पव्याख्याने— अनुवृत्तिप्रदर्शनम्; ग. तद्विकल्प-निवारकतया— 'नाद्यः...विरोधात्'इत्यस्य व्याख्याने— १— प्रथमविकल्प-निरासकतया 'नाद्यः...प्रसङ्गात्'इत्यस्य व्याख्याने— क— अवतरणम्, ख— निरसने-हेतूक्तित्वेन 'आत्माश्रयादिप्रसङ्गात्'इत्यस्य— अवतरणम्, पदार्थः, अभिप्रायश्च, २— द्वितीयविकल्पनिरासकतया 'न द्वितीयः विरोधात्'-इत्यस्य व्याख्याने— 'विरोधात्'इत्यस्य अर्थः; घ. एतावद्विकल्पपरिहार लब्धार्थनिरूपणपरतया 'अतो...इति'इत्यस्य अर्थः; ङ. एतल्लब्धार्थस्य प्रकृत-शङ्कायां योगश्च; २. एतच्छङ्कापरिहारकतया 'प्रश्न एव...अपि स्यात्'इत्यस्य व्याख्याने— क. एतच्छङ्कागतप्रश्नविवेचकतया 'प्रश्न एव...स्यादिति'इत्यस्य व्याख्याने— १— प्रश्नार्थविचारणपरतया अवतरणम्, २— 'प्रश्न...विविच्य-ताम्'इत्यस्य पदार्थः, ३— प्रश्नार्थविवरणप्रकारोक्तित्वेन 'यदि..स्यादिति'-इत्यस्य व्याख्याने— क— अवतरणम्, प्रश्नार्थत्रैविध्यपरतया च ख— 'यदि अभाव...भूतलमिति'इतिप्रथमविकल्पस्य अर्थः, ग— 'यदिवा...कीदृशमिति' इतिद्वितीयविकल्पस्य अर्थः, घ— 'यद्वा...स्यादिति'इतितृतीयविकल्पस्य अर्थः;

ख. एतत्प्रश्नार्थविवरणस्य प्रकृतोपयोगित्वोक्तिरूपतदुत्तरोक्तिपरतया 'आद्ये... प्रसक्तिमदिति' इत्यस्य व्याख्याने– १– अवतरणम्, २– 'आद्ये... उत्तरम्' इत्यस्य अर्थः, ३– 'द्वितीये घटाभाववदिति' इत्यस्य अर्थः, ४– 'तृतीये... प्रसक्तिमदिति' इत्यस्य अर्थः; ग. अतिरिक्ताभाववादानङ्गीकारिणां विपक्षे बाधकोक्तित्वेन 'अन्यथा...अपि स्यात्' इत्यस्य व्याख्याने– अवतरणम्, अर्थः भावश्च ।

३) अभावनिषेधनिराकरणोपसंहारकतया 'इति आस्तां विस्तरः' इत्यस्य अवतरणम्, अर्थः, भावश्च । ]

प्रकारान्तरेण भावाभावविभागकथनानुपपत्तिम् आशङ्कते **अभाव एव नास्तीति** । 'भावातिरिक्तः अभावः एव नास्ति' इति, प्राभाकरादयः, आहुः; इत्यर्थः ॥ 'एव'कारेण 'भावाभावविभागकथनं दूरे निरस्तम्' इति सूचयति ॥

**तदसदिति** । तत्– 'अभावः नास्ति' इतिमतम्, असत्= दुष्टम्; इत्यर्थः ॥ तत्र हेतुम् आह **नास्तीतिप्रतीतेरिति** । 'प्रतीति' पदेन तद्विषयः अभावः उपलक्ष्यते, 'अत्र घटो नास्ति' इतिप्रतीतिविषयस्य अभावस्य अपलापत्वात्; इत्यर्थः ।

'अत्र घटो नास्ति' इतिप्रतीतिः न घटाभावविषया, किन्नाम भूतलस्वरूपमात्रविषया; इति शङ्कते **घटो नास्तीति** ॥ 'इह भूतले घटो नास्ति' इतिप्रतीतिः; इत्यर्थः ।;

उक्तशङ्कां परिहर्तुं 'भूतलमात्र' शब्दार्थं पृच्छति **भूतलमात्रेति** ॥ 'भूतलमात्र' इत्यनेन 'भूतल' शब्दवाच्यं यत् तदेव उच्यते, न तु अन्यत्; इत्यर्थः । अतिरिक्तम्= 'भूतल' पदवाच्यातिरिक्तं भूतले विद्यमानं किञ्चित्; इत्यर्थः ।,

१. टीकायां केवलं 'मात्रेति किं' इति 'भूतल' पदरहितमेव दृश्यते ।

**घटवत्यपीति** । घटवत्यपि भूतले, प्रसङ्गः= 'अत्र घटो नास्ति' इति प्रतीतिः स्यात्; इत्यर्थः । तत्प्रतीतिविषयस्य सत्त्वात्; इति भावः ॥॥ द्वितीयेऽपि पक्षे किम् अभावः ? उत भावः एव ? 'नाद्यः विवादपर्यवसानात्'इति बहिरेव आद्ये पक्षे दूषणम् अभिप्रेत्य; द्वितीयेऽपि पक्षे 'अतिरिक्तः भावः किम् अभावप्रतियोगी घटः ? उत भावान्तरम् ?' इति विकल्पं मनसि निधाय; आद्यं पक्षम् अपाकरोति **अतिरिक्तोऽपीति** । भावः इत्यर्थः; उक्तो दोषः = 'घटवत्यपि प्रसङ्गरूपदोषः स्यात्; इत्यर्थः ॥ द्वितीयं पक्षम् अपाकरोति **भावान्तरश्चेदिति** । प्रतियोगिघटव्यतिरिक्तभावः चेत्; इत्यर्थः ॥;

उक्तदोषपरिजिहीर्षया शङ्कते **नन्विति** ।;

अभाववति सिद्धान्ते, घटाभावविशिष्टे, भूतले, सम्बध्यते= वर्तते; इत्यर्थः । 'घटाभाव'पदेन घटप्रध्वंसरूपाभावः उच्यते ।, यद्वा घटस्य भावः सत्त्वम्, अभावः असत्त्वम्; असम्बन्धः इति यावत्; तथाच 'घटाभावः'इत्यनेन घटे एतद्भूतलसंसर्गाभावः उच्यते, न तु घटात्यन्ताभावः ।, 'सिद्धान्ते प्रामाणिकस्य घटादेः अत्यन्ताभावाप्रतियोगित्वात्, परोक्तानुवाद एव अयम्'इति केचित् आहुः ॥ उत 'भूतले सम्बध्यते'इति अनुवर्तते ।,

आद्यं पक्षम् अपाकरोति **नाद्य इति** ॥, तत्र हेतुजिज्ञासायाम् आह **आत्माश्रयादिप्रसङ्गादिति**[२] । अन्योन्याश्रयादिः 'आदि'पदार्थः । 'घटाभावः स्वविशिष्टे भूतले वर्तते'इत्यङ्गीकारे स्वस्यापि आश्रयकोटौ प्रवेशात् आत्माश्रयः स्यात्, 'स्वातिरिक्तघटाभावसम्बद्धे भूतले घटाभावः अस्ति'इति अङ्गीकारे अन्योन्याश्रयः स्यात्; परस्परसापेक्षघटाभावत्रयानङ्गीकारे चक्र-

२. 'आत्माश्रयादिदोषप्रसङ्गात्'इति टीका पाठः उपलभ्यते ।

काश्रयः स्यात्, निरवधिकघटाभावपरम्परानङ्गीकारे अनवस्था स्यात्; इति अवगन्तव्यम् ॥ **विरोधादिति ।** 'घटसम्बद्धभूतले घटाभावः सम्बध्यते' इत्यस्य व्याघातात्; इत्यर्थः ।,

**अत इति ।** पक्षद्वयेऽपि दोषसद्भावात् 'घटाभावाधिकरणम् भूतल-मात्रम्'इत्येव परेण वक्तव्यम्; इत्यर्थः ।,

तदेव= परेण घटाभावाधिकरणत्वेन अङ्गीकृतं भूतलमात्रम्, 'नास्ति'इतिप्रतीतिविषयः, भवतु; इत्यर्थः ॥,

उक्तशङ्कापरिहाराय प्रश्नार्थं पृच्छति **प्रश्न एवायमिति ।** अयं प्रश्न एव = 'घटाभावः कुत्र सम्बध्यते?'इतिप्रश्नार्थ एव, विविच्यताम् ।,

तद्विवरणप्रकारम् आह **यदीति** ॥,

यदि 'घटाभावसम्बन्धात् प्राक् कीदृशं भूतलम्?'इति प्रश्नार्थः; इत्यर्थः? ॥ **यदिवेति ।** 'घटाभावसम्बन्धकाले कीदृशं भूतलम्?'इति प्रश्नार्थः; इत्यर्थः? ॥ **यद्वेति ।** 'यदि, घटाभावात्, इदम्– भूतलम् विविच्येत= वियुज्येत; तदा= तर्हि, इदं भूतलम्, कीदृशं नाम स्यात्?', इति प्रश्नार्थः; इत्यर्थः? ।;

अस्तु एवं प्रश्नार्थविवरणम्; तथापि किं प्रकृते? इत्यत आह **आद्य इति ।;**

आद्ये पक्षे, सघटम्= घटसम्बद्धभूतलम्, इत्येव उत्तरम्, वाच्यम्; इत्यर्थः ॥ **द्वितीय इति ।** द्वितीये पक्षे 'घटाभावसम्बद्धं भूतलम्'इति उत्तरं वाच्यम्; इत्यर्थः । **तृतीय इति ।** तृतीयेऽपि पक्षे, यदि, विवेकः= नियोगः, वस्तुकृतः= अभावनाशरूपवस्तुकृतः; तदा= तर्हि, अभावस्य= घटसंसर्गप्रागभावस्य, नष्टत्वात्, 'घटसम्बद्धं भूतलम्'इति उत्तरं वाच्यम्; इत्यर्थः ।, घटसंसर्गाभावनाशस्य घटसंसर्गरूपत्वात्; इति भावः । यदि,

बुद्धिकृतः= बुद्ध्या एव, अङ्गीकृतः; तदा= तर्हि, बुद्ध्या एव, घटप्रसक्तिमत्, स्यात्, इति; उत्तरं वाच्यम्; इत्यर्थः ।;

''ननु 'अभावः कुत्र सम्बध्यते?' इतिप्रश्नार्थस्य अस्तु एवम् उत्तरम्; तथापि 'घटाभावः, घटाभाववति देशे काले नास्ति, आत्माश्रयादिप्रसङ्गात्; नापि घटवति देशे काले वा अस्ति, विरोधात्'इतिपक्षद्वयेऽपि दोषसद्भावात् अतिरिक्ताभाववादो न युक्तः''इत्याशङ्कमानं प्रति विपक्षे बाधकम् आह **अन्यथेति** । उक्तरीत्या अधिकरणातिरिक्ताभावानङ्गीकारे; इत्यर्थः ।, एवम् = येन प्रकारेण अभावप्रतिक्षेपो भवति तेन प्रकारेण; = 'घटः, न तावत् घटवति देशे काले वा अस्ति, आत्माश्रयादिप्रसङ्गात्; नापि घटाभाववति देशे काले वा अस्ति, विरोधात्'इत्यनेन प्रकारेण; इति यावत् ।, भावप्रतिक्षेपोऽपि स्यात् == भावस्य= घटादेः, प्रतिक्षेपोऽपि= निराकरणमपि, स्यात्= भवेत्; इत्यर्थः ।–

'यश्चोभयोः समो दोषः परिहारोऽपि वा समः'इति भावः ।

अभावापलापनिराकरणम् उपसंहरति **इतीति** । 'इति'शब्दो हेतौ वर्तते ।, इति= तस्मात्= घटादिभावाङ्गीकारे इव तदभावाङ्गीकारे अपि दोषपरिहारसम्भवात्, विस्तरः= अभावापलापवादनिराकरणप्रपञ्चः, आस्ताम्= तिष्ठतु; इत्यर्थः । ग्रन्थगौरवभयात् उपरम्यते; इति भावः ॥

[ १६ **मु.** विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थ-व्याख्याने– त[illegible]गपरीक्षायाम्– अभावनिषेधनिराकरणे–

अ) उक्तविभागस्य विप्रतिपत्त्युद्घाटनपूर्वकदूषणपरतया– 'अभाव... अपि स्यात्'इत्यस्य अवतरणम् ।,

आ) विप्रतिपत्तिदूषणपरतया– तदसत्....अपि स्यात्'इत्यस्य व्याख्याने– १) 'दुरपह्नवत्त्वात्'इत्यस्य भावः । २) 'भूतलमात्रम्'इत्यत्र 'मात्र'शब्दस्य अन्यार्थकत्वे-दूषणा[illegible]कम् अन्ततः अभावार्थकत्वसमर्थनार्थकतया 'मात्रेति... अपि स्यात्'इत्यस्य व्याख्याने– क) अवतरणम् । ख) अत्रोक्तसर्वविकल्पानां

युक्तत्वरूपो भावः । ग) 'भावान्तरं चेत्'इत्यस्य अर्थश्च । घ) 'ननु...अपि स्यात्'इत्यस्य व्याख्याने– १. 'आत्माश्रयादिप्रसङ्गात्'इत्यत्र'आदि'शब्दार्थः । २. 'यद्यभावसम्बन्धात्प्राक्...स्यादिति'इत्यस्य व्याख्याने– अत्रोक्तविकल्पत्रयाणाम् अनुपपत्तिः । ३. 'यदि विवेकः...अपि स्यात्'इत्यस्य व्याख्याने– 'विविच्येत, वस्तुकृतः, बुद्धिकृतः'इत्येषाम् अर्थः ।

ङ) आशयकथनपूर्वकम् 'आस्तां विस्तरः'इत्यस्य अवतरणम् । ]

विभागस्थापनाय विप्रतिपत्तिम् उद्घाट्य दूषयति **अभाव एव इत्यादिना** ॥

**दुरपह्नवत्वादिति** । 'घटनास्तितां जानामि'इत्यनुव्यवसायसिद्धत्वात्; इति भावः ॥

प्रतीतेः अपह्नोतुम् अशक्यत्वेऽपि न तया अभावः सिध्यति, भूतलमात्रविषयकत्वात् तस्याः'इतिशङ्कते **घट इति** ।

अन्ततः '' 'मात्र'शब्दार्थत्वेन अभावएव अङ्गीकर्तव्यः''इत्यभिप्रेत्य साम्भवितान् 'मात्र'शब्दार्थत्वेन विकल्प्य दूषयति **मात्रेति** ।;

तावदर्थकशब्दे प्रयोक्तव्ये अधिकशब्दप्रयोगस्य दृष्टत्वेन प्रथमः कल्पः ।, 'शब्दभेदात् अर्थभेदः'इतिसामान्यन्यायेन द्वितीयः कल्पः ।, अतिरिक्तत्वेन घटस्यापि प्रमेयत्वेन द्वितीयेऽपि आद्यः कल्पः; भावान्तरस्यापि अतिरिक्तत्वेन द्वितीयेऽपि द्वितीयः कल्पः; युज्यते; इति भावः ॥ **भावान्तरं चेदिति** । भावान्तरवति अधिकरणे अभावबुद्धिः चेत्, रूपलक्षणभावान्तरवति 'गन्धो नास्ति'इतिप्रतीतिप्रङ्गः, इत्यर्थः ।

**आत्माश्रयादीति** । घटाभावव्यक्तिभेदाङ्गीकारे अन्योन्याश्रयादिकम् 'आदि'शब्दार्थः ।;

**यद्यभावसम्बन्धात्प्रागिति** । घटाभावः 'घटाभाववति सम्बध्यते ? उत घटवति ?'इत्यनया वाचोभङ्ग्या घटाभावसम्बन्धनिरूप्यं भूतलं कीदृशम् ?

इति सम्पन्नं स्यात्; तेन एषां त्रयाणां विकल्पानाम् अनुपपत्तिः ॥ ॥ **विविच्येतेति** । वियुक्तं भवति; इत्यर्थः ॥ **विवेको वस्तुकृत इति** । अभावस्य अमूर्तत्वेन, अन्यत्र अगत्या भूतलाद्वियोगासम्भवात्, 'अभावनाशजन्यः' इत्यर्थः; तदेतत् अभिप्रेत्य उक्तम् 'तदा अभावस्य नष्टत्वात् घटवत्'इति ॥ **बुद्धिकृत इति** । अभावे सत्यपि तद्वियोगो बुद्ध्या विषयीक्रियते; इत्यर्थः ॥

'ननु प्रतियोगिमदधिकरणभिन्नम् अधिकरणम् अभावप्रतीत्यालम्बनम्, भेदश्च पदार्थ स्वरूपम् एव; इति न अधिकरणभिन्न-अभावः सिद्धः ।, अवस्थाविशेषविशिष्टमदधिकरणं वा अभावबुद्धेः विषयः'इति चेत्; हन्त ! एवं गुणादिपदार्थापलापोऽपि स्यात्; इत्याशयेन आह **आस्तां विस्तर इति** ॥

[ १६ **का.** विषयः— अस्वतन्त्रतत्त्वनिरूपकटीकाग्रन्थव्याख्याने— तद्विभागपरीक्षायाम्— अभावनिषेधनिराकरणे—

अ) पूर्वोक्तविप्रतिपत्तिप्रदर्शनपूर्वकतन्निरासकतया 'अभावः...विस्तरः' इत्यस्य व्याख्याने— अवतरणम् ।

आ) विप्रतिपत्तिप्रदर्शकतया 'अभावः...केचित्'इत्यस्य अर्थः ।

इ) तन्निरासकतया 'तदसत्...अपि स्यात्'इत्यस्य व्याख्याने— अभावानङ्गीकरणे कारणद्वयं विकल्प्य

१) प्रथमकारणनिरासकतया 'नास्तीतिप्रतीतेः......प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने— क) 'नास्तीतिप्रतीतेर्दुरपह्नवत्वात्'इत्यस्य अवतरणम् । ख) नास्तीतिप्रतीतेः अभावान्यथोपपत्तिशङ्कानिवारकतया 'घटो...प्रतीतिप्रसङ्गः' इत्यस्य व्याख्याने— १. शङ्कात्वेन 'घटो....चेत्'इत्यस्य व्याख्याने— क. अवतरणम्, ख. सप्रयोजनम्, 'आधाराधेयभावेन'इतिपदनिवेशनम्, ग. भावश्च; २. एतच्छङ्कानिवारकत्वेन तत्पक्षे-'मात्र'शब्दार्थनिर्वचनानुपपत्तिपरतया 'मात्रेति...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने— क. 'मात्र'पदार्थे-विकल्पप्रश्नत्वेन 'मात्रेति...किञ्चित्'इत्यस्य मतद्वयेन व्याख्याने— १— स्वमतानुसारेण— क— 'भूतलमेव उच्यते'इतिप्रथमविकल्पस्य शेषः, भावश्च, ख—

'उतातिरिक्तं किञ्चित्'इतिद्वितीयविकल्पस्य भावः, २– मतान्तरानुसारेण उभयविकल्पार्थवर्णनञ्च; ख. एतदुभयविकल्पानुपपत्तिपरतया 'आद्ये... प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने– १– प्रथमविकल्पनिरासपरतया 'आद्ये घटवत्यपि प्रसङ्गः'इत्यस्य व्याख्याने– अर्थः, भावः, उपपादनञ्च, २– द्वितीयविकल्पनिरासकतया 'अतिरिक्तोऽपि...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने– एतद्विकल्पस्यापि पक्षद्वयं विकल्प्य– क– प्रथमपक्षनिवारकतया 'भावा... प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने– १- 'भावान्तरम्'इत्यस्य अर्थः, २- 'रूप- ...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने– भावः, अभिप्रायः, 'गन्धाभाव'ग्रहणप्रयोजनञ्च ।

२) द्वितीयकारणनिरासकतया 'ननु...अपि स्यात्'इत्यस्य व्याख्याने– क) एतत्कारणस्पष्टीकरणे– 'ननु...चेत्'इत्यस्य व्याख्याने– १. अवतरणम्, २. 'आत्माश्रयादि'इत्यस्य व्याख्याने– क. अर्थः, ख. विशिष्टसम्बन्धस्य विशेषणविशेष्यसम्बन्धाधीनत्वाभिप्रायेण एतदात्माश्रयोपपादनम्, ग. आशयश्च । ख) एतत्कारणस्य प्रकारद्वयेन निरसने– 'प्रश्न...अपि स्यात्'इत्यस्य व्याख्याने– १. प्रथमप्रकारकतया 'प्रश्न...प्रसक्तिमदिति'इत्यस्य व्याख्याने– क- एतत्कारणसाधकपूर्वपक्षोक्तप्रश्नस्य षोढा व्याख्यानं प्रदर्श्य तेषां फलतः त्रिविधत्वाशयपूर्वकं तदुत्तरत्वेन अवतणरम्; ख. पूर्वपक्षोक्तप्रश्नार्थविकल्पक- 'यदि...स्यादिति'इतिग्रन्थव्याख्याने– 'कीदृशम्'इत्यस्य अर्थः; ग. प्रश्नानाम् उत्तरत्वेन 'आद्ये...प्रसक्तिमदिति'इत्यस्य व्याख्याने– १– 'आद्ये सघटमित्येवोत्तरम्'इत्यस्य भावः २- 'द्वितीये घटाभाववदिति'इत्यस्य भाव.; ३– 'तृतीते ...प्रसक्तिमदिति'इत्यस्य व्याख्याने– पदार्थश्च; २. द्वितीयप्रकारकतया 'अन्यथा...अपि स्यात्'इत्यस्य व्याख्याने– क. अवतरणम्, ख. अर्थः, अभिप्रायश्च ।

ई) तन्निरासोपसंहारे च 'कारणान्तरेणापि अनिरिक्ताभावसिद्धिः'- इत्याशयकतया इत्यास्तां विस्तरः'इत्यस्य अवतरणम् ॥ ]

तामेव विप्रतिपत्तिं प्रदर्श्य निरस्यति **अभाव एवेति** ॥

निषेधत्वेन-प्रथमप्रतीतिविषयपदार्थः, एव, नास्ति; दूरे तत्र परतन्त्रप्रभेदत्वम्; इत्यर्थः ॥

अत्र किं १) साधकाभावात् नोपेयते ? उत २) बाधकसद्भावात् ?

१) 'नाद्यः'इत्याह **नास्तीति** ॥ 'भूतले घटो नास्ति'इत्यादि-प्रतीतेः; इत्यर्थः ।

प्रतीतेः भावविषयत्वात् न अभावसाधकत्वम् इत्याशङ्कते **घटो नास्तीति** ॥ 'भूतलमात्रविषया'इत्यस्य 'आधाराधेयभावेन'इति आदिः; तेन प्रतियोगितया घटविषयत्वेऽपि न क्षतिः । तथाच भूतलादेः प्रथमम् -अस्ति'इत्युपलभ्यमानत्वात् न उक्त-अभावत्वम्; इति भावः ॥,

**भूतलमेवेति** । 'उक्तप्रतीतिविषयत्वेन'इतिशेषः । 'मात्र'पदेन भूतलातिरिक्तसामान्यव्यवच्छेदात्; इति भावः ॥ **उतातिरिक्तमिति** । 'मात्र'शब्दस्य अभावमात्रव्यवच्छेदकत्वे तदतिरिक्तभावान्तरलाभात्; इति भावः ॥ ॥ केचित्तु 'भूतलमात्र'इत्यस्य ''भूतल'पदपर्यायत्वं वा ? किञ्चिद्विशिष्टभूतलपरत्वं वा ?'इति विकल्पार्थं वर्णयन्ति ।;

**घटवत्यपीति** । घटविशिष्टभूतलेऽपि 'घटो नास्ति'इतिप्रतीति-प्रसङ्गः; इत्यर्थः । तत्र घटसत्तादशायाम् अपि भूतलस्वरूपाभावसत्त्वात्; इति भावः ॥ ''ननु घटवति घटप्रतीतिरूपविरोधिसत्त्वात् न घटाभाव-प्रतीतिप्रसङ्गः; न च 'घटभूतलयोः वस्तुनोः विरोधाभावात् न तत्प्रतीत्योः अपि विरोधः'इति वाच्यम्, 'अस्ति, नास्ति'इतिप्रतीत्योः विरोधस्य अपह्नोतुम् अशक्यत्वात्''इति चेत्; सत्यम्, तथापि विरोधप्रतीत्यसत्त्वदशायाम् उक्त-प्रसङ्गो दुर्वारः ।, न च 'तदानीं घटसन्निकर्ष एव विरोधी'इति वाच्यम्, घटाभावस्यापि सन्निकृष्टत्वेन घटप्रतीतेरपि अनुपपत्तेः; घटवति दोषाधीनघटा-भावप्रतीतेः प्रमात्वापत्तेश्च ।,

द्वितीयपक्षे किं प्रतियोगी एव अभावत्वेन प्रतीयते ? उत तदतिरिक्तभावान्तरम् ?

'नाद्यः'इत्याह **अतिरिक्तोपीति** । उक्तो दोषः = 'घटवति घटाभाव-प्रतीतिप्रसङ्गरूपः ।,

द्वितीयं निराचष्टे **भावान्तरमिति** । धर्मिप्रतियोग्यतिरिक्तभावः; इत्यर्थः ॥ **रूपवतीति** । रूपस्य धर्मिप्रतियोग्यतिरिक्तत्वेन गन्धाभावत्वात्; इति भावः । घटे गन्धस्य अवश्यंभावात् न इष्टापत्तिः; इति ध्येयम् ॥ अत्र **यद्यपि** घटवति घटातिरिक्तरूपादिसत्त्वेन 'घटो नास्ति'इतिप्रतीतिप्रसङ्ग एव सम्भवति; न च 'प्रतियोगिजातीयभावान्तरस्य अभावधीविषयत्वोपगमात् नायं प्रसङ्गः, रूपादेः अद्रव्यस्य घटविजातीयत्वात्'इति वाच्यम्, घटवति तदवयवकपालादेः एव सत्त्वात्, द्रव्यान्तरशून्ये घटाभावप्रतीत्यनुपपत्तेश्च; **तथापि** भावान्तरस्य अभावरूपत्वे गन्धाभावस्य रूपादिस्वरूपत्वात् चक्षुर्ग्राह्यत्वरूपदूषणान्तरसूचनाय गन्धाभावानुधावनम् । न च 'गन्धवति भूतले घटाभावप्रतीत्यापादनेऽपि, घटाभावस्य घ्राणग्राह्यत्वप्रसङ्गसूचनं सम्भवति'इति वाच्यम्, तत्र चक्षुर्ग्राह्यरूपादेः एव घटाभावत्वोपगमेन निर्वाहात्; इत्यवधेयम् ।

२) 'बाधकसद्भावात् न अभावसिद्धिः'इतिद्वितीयपक्षम् आशङ्कते **नन्विति ।;**

**आत्माश्रयादीति** । स्वस्यैव स्वधर्मिघटकत्वम् आत्माश्रयः, यदि धर्तभूतअभावात् धर्मिघटक-अभावः भिन्नः तदा तस्य धर्मभूत-अभाववति एव-सम्बन्धो वाच्यः इति अन्योन्याश्रयः, तद्धर्मिघटक-अभावस्य ततोऽपि अतिरिक्तत्वे तत्सम्बन्धस्यैव प्रथमाभाववति वाच्यत्वात् चक्रकम्, तद्धर्मिघटक-अभावपरम्परा-भावे च अनवस्था; इत्यर्थः ।,

**ननु** कथम् अयम् आत्माश्रयः, स्वोत्पत्तेः स्वोत्पत्त्यनपेक्षणत्वात्?।, न च " 'यत्र यद्विशिष्टवृत्तित्वम् तत्र तद्विशेषणवृत्तित्वम्'इति व्याप्तेः स्वस्य स्ववृत्तित्वापत्तिरूपः अयम् आत्माश्रयः"इति वाच्यम्, दण्डविशिष्टवृत्तिकुण्डले दण्डवृत्तित्वाभावेन व्यभिचारात् ।, न च 'यत्र यद्विशिष्टमात्रवृत्तित्वं तत्र तद्विशेषणवृत्तित्वम्'इति व्याप्तिः, वह्निविशिष्टमात्रवृत्ति-धूमादौ पृथिवी-

अत्र किं १) साधकाभावात् नोपेयते ? उत २) बाधकसद्भावात् ?

१) 'नाद्यः' इत्याह **नास्तीति** ॥ 'भूतले घटो नास्ति' इत्यादि-प्रतीतेः; इत्यर्थः ।

प्रतीतेः भावविषयत्वात् न अभावसाधकत्वम् इत्याशङ्कते **घटो नास्तीति** ॥ 'भूतलमात्रविषया' इत्यस्य 'आधाराधेयभावेन' इति आदिः; तेन प्रतियोगितया घटविषयत्वेऽपि न क्षतिः । तथाच भूतलादेः प्रथमम् -अस्ति' इत्युपलभ्यमानत्वात् न उक्त-अभावत्वम्; इति भावः ॥,

**भूतलमेवेति** । 'उक्तप्रतीतिविषयत्वेन' इतिशेषः । 'मात्र' पदेन भूतलातिरिक्तसामान्यव्यवच्छेदात्; इति भावः ॥ **उतातिरिक्तमिति** । 'मात्र' शब्दस्य अभावमात्रव्यवच्छेदकत्वे तदतिरिक्तभावान्तरलाभात्; इति भावः ॥ ॥ केचित्तु 'भूतलमात्र' इत्यस्य ''भूतल' पदपर्यायत्वं वा ? किञ्चि-द्विशिष्टभूतलपरत्वं वा ?' इति विकल्पार्थं वर्णयन्ति ।;

**घटवत्यपीति** । घटविशिष्टभूतलेऽपि 'घटो नास्ति' इतिप्रतीति-प्रसङ्गः; इत्यर्थः । तत्र घटसत्त्वादशायाम् अपि भूतलस्वरूपाभावसत्त्वात्; इति भावः ॥ ''ननु घटवति घटप्रतीतिरूपविरोधिसत्त्वात् न घटाभाव-प्रतीतिप्रसङ्गः; न च 'घटभूतलयोः वस्तुनोः विरोधाभावात् न तत्प्रतीत्योः अपि विरोधः' इति वाच्यम्, 'अस्ति, नास्ति' इतिप्रतीत्योः विरोधस्य अपह्नोतुम् अशक्यत्वात्'' इति चेत्; सत्यम्, तथापि विरोधप्रतीत्यसत्त्वदशायाम् उक्त-प्रसङ्गो दुर्वारः ।, न च 'तदानीं घटसन्निकर्ष एव विरोधी' इति वाच्यम्, घटाभावस्यापि सन्निकृष्टत्वेन घटप्रतीतेरपि अनुपपत्तेः; घटवति दोषाधीनघटा-भावप्रतीतेः प्रमात्वापत्तेश्च ।,

द्वितीयपक्षे किं प्रतियोगी एव अभावत्वेन प्रतीयते ? उत तदतिरिक्तभावान्तरम् ?

'नाद्यः' इत्याह **अतिरिक्तोपीति** । उक्तो दोषः = 'घटवति घटाभाव-प्रतीतिप्रसङ्गरूपः ।,

द्वितीयं निराचष्टे **भावान्तरमिति** । धर्मिप्रतियोग्यतिरिक्तभावः; इत्यर्थः ॥ **रूपवतीति** । रूपस्य धर्मिप्रतियोग्यतिरिक्तत्वेन गन्धाभावत्वात्; इति भावः । घटे गन्धस्य अवश्यंभावात् न इष्टापत्तिः; इति ध्येयम् ॥ अत्र **यद्यपि** घटवति घटातिरिक्तरूपादिसत्त्वेन 'घटो नास्ति'इतिप्रतीतिप्रसङ्ग एव सम्भवति; न च 'प्रतियोगिजातीयभावान्तरस्य अभावधीविषयत्वोपगमात् नायं प्रसङ्गः, रूपादेः अद्रव्यस्य घटविजातीयत्वात्'इति वाच्यम्, घटवति तदवयवकपालादेः एव सत्त्वात्, द्रव्यान्तरशून्ये घटाभावप्रतीत्यनुपपत्तेश्च; **तथापि** भावान्तरस्य अभावरूपत्वे गन्धाभावस्य रूपादिस्वरूपत्वात् चक्षुर्ग्राह्यत्वरूपदूषणान्तरसूचनाय गन्धाभावानुधावनम् । न च 'गन्धवति भूतले घटाभावप्रतीत्यापादनेऽपि, घटाभावस्य घ्राणग्राह्यत्वप्रसङ्गसूचनं सम्भवति'इति वाच्यम्, तत्र चक्षुर्ग्राह्यरूपादेः एव घटाभावत्वोपगमेन निर्वाहात्; इत्यवधेयम् ।

२) 'बाधकसद्भावात् न अभावसिद्धिः'इतिद्वितीयपक्षम् आशङ्कते **नन्विति** ।;

**आत्माश्रयादीति** । स्वस्यैव स्वधर्मिघटकत्वम् आत्माश्रयः, यदि धर्तभूतअभावात् धर्मिघटक-अभावः भिन्नः तदा तस्य धर्मभूत-अभाववति एवसम्बन्धो वाच्यः इति अन्योन्याश्रयः, तद्धर्मिघटक-अभावस्य ततोऽपि अतिरिक्तत्वे तत्सम्बन्धस्यैव प्रथमाभाववति वाच्यत्वात् चक्रकम्, तद्धर्मिघटक-अभावपरम्परा-भावे च अनवस्था; इत्यर्थः ।,

**ननु** कथम् अयम् आत्माश्रयः, स्वोत्पत्तेः स्वोत्पत्त्यनपेक्षणत्वात् ? ।, न च " 'यत्र यद्विशिष्टवृत्तित्वम् तत्र तद्विशेषणवृत्तित्वम्'इति व्याप्तेः स्वस्य स्ववृत्तित्वापत्तिरूपः अयम् आत्माश्रयः"इति वाच्यम्, दण्डविशिष्टवृत्तिकुण्डले दण्डवृत्तित्वाभावेन व्यभिचारात् ।, न च 'यत्र यद्विशिष्टमात्रवृत्तित्वं तत्र तद्विशेषणवृत्तित्वम्'इति व्याप्तिः, वह्निविशिष्टमात्रवृत्ति-धूमादौ पृथिवी-

त्वविशिष्टमात्रवृत्तिगन्धादौ च वह्निपृथिवीत्वादिवृत्तित्वाभावेन व्यभिचारात्; प्रमेयत्वादेः इव घटात्यन्ताभावादेः अपि स्ववृत्तित्वस्य प्रामाणिकत्वेन अदोषत्वाच्च ।, यत्तु 'अभावज्ञानस्य धर्मिज्ञानाधीनज्ञानत्वेन ज्ञप्तौ आत्माश्रयः'इति; तन्न, घटाभाववति 'घटो नास्ति'इत्यादिज्ञानस्य घटाभावज्ञानाधीनतायाः प्रामाणिकत्वात्, 'भूतले घटो नास्ति'इत्यादिज्ञानस्य च घटाभावज्ञानानपेक्षत्वात् ।, यत्तु 'अतद्गुणसंविज्ञानबहुव्रीहिणा 'आत्माश्रयादि'-शब्देन अन्योन्याश्रयादिः एव विवक्षितः'इति, तदसत्; द्वयोः परस्परापेक्षाभावेन तदभावात् । उच्यते ।– विशिष्टसम्बन्धस्य हि विशेषणविशेष्यसम्बन्धाधीनत्वात्, घटाभावस्य घटाभावविशिष्टभूतलसम्बन्धः घटाभावभूतलसम्बन्धाधीनः । तथाच स्वनिष्ठतत्कालसम्बन्धस्य स्वनिष्ठतत्कालसम्बन्धाधीनत्वे इव स्वनिष्ठतद्देशसम्बन्धस्य स्वनिष्ठतद्देशसम्बन्धाधीनत्वेऽपि, आत्माश्रयः दुर्वारः एव; घटाभावस्य भूतलसम्बन्धात्पूर्वं भूतलसम्बन्धासत्त्वेन इष्टापत्त्ययोगात् ।, न च विशिष्टसम्बन्धस्य विशिष्टसम्बन्धात्पूर्वम् असम्भवेऽपि केवलविशेष्यसम्बन्धसम्भवः; केवलभूतलादौ घटाभावस्य सम्बन्धानभ्युपगमेन विशिष्टसम्बन्धस्यैव वाच्यत्वात् ॥ इति पूर्वपक्षाभिप्रायः ।,

'तत्'इत्यस्य 'तर्हि'इति आदिः; भूतलमात्रम्'इत्यर्थः । घटवति घटाभावधीप्रसङ्गस्य नियामकान्तराभावेन तद्वारणस्य च, पक्षद्वयेऽपि साम्यात्; अतिरिक्ताभावकल्पने गौरवम् एव बाधकम्; इत्याशयः ॥;

'ननु'इत्यादिप्रश्नस्य षोढा व्याख्यानं सम्भवति– 'घटाभावः स्वसम्बन्धात्पूर्वं स्वसम्बन्धसमये स्वसम्बन्धानन्तरं वा यत् घटाभाववत् तत्र सम्बध्यते, किंवा स्वसम्बन्धात्पूर्वं स्वसम्बन्धसमये स्वसम्बन्धानन्तरं वा यत् घटवत् तत्र सम्बध्यते'इति; एतेषां च फलतः त्रिधैव प्रश्नपर्यवसानम्; इत्याशयेन यथाश्रुतं प्रश्नार्थं तावत् विकल्प्य उत्तरम् आह **प्रश्न एवायमिति** ॥,

**कीदृशम्**= घटवत् घटाभाववत् वा ? इत्यर्थः ।;

**सघटमिति** । घटतदभावयोः कालभेदेन विरोधाभावात्; इतिभावः ।,

**घटाभाववदित्येवोत्तरमिति** । तावता स्वसम्बन्धाधीनत्वाप्रसिद्ध्या आत्माश्रयाद्यनवकाशः; इति भावः ।;

विवेकः= विभागः । वस्तुकृतः= वास्तवः ॥।॥ बुद्धिकृतः= आरोपितः; सत्यपि घटाभावे तद्रूपत्वभ्रमः; इति यावत् । **बुद्ध्येति** । घटारोपविषयः; इत्यर्थः । अत्र अभावपदेन घटसंसर्गाभावो यथासम्भवं ग्राह्यः ॥;

"ननु न वयम् उक्तरीत्या वस्तुस्वरूपं पृच्छामः येन उक्तबाधकपरिहारः स्यात्, अपि तु 'घटाभाववत्त्वे किं नियामकम्?' इति; घटाभाव एव चेत् कथम् आत्माश्रयादिः न स्यात्? अतः तत्कालविशिष्टतद्देशस्यैव नियामकत्वं वाच्यम्; तथाच तस्यैव अभावत्वसम्भवात् अतिरिक्ताभावकल्पने गौरवं दुर्वारमेव"इत्यत आह **अन्यथेति** ।;

एवम्= अभावप्रतिक्षेपे तथैव; भावस्य=घटादेः, प्रतिक्षेपः; स्यात्; इत्यर्थः ।,

तथाहि– घटवत्त्वे घटवत्त्वस्यैव प्रयोजकतायाम् आत्माश्रयात्, देशविशेषादेरेव नियामकता वाच्या । तथाच तस्यैव घटबुद्धिविषयत्वसम्भवात् अतिरिक्तघटकल्पने गौरवम् ॥। यदि च 'देशविशेषादेः अननुगतत्वात् अनुगत-ईश्वरेच्छाविषयस्यैव नियामकत्वं वाच्यम्; तस्य च अतीन्द्रियस्य घटादिबुद्धिविषयत्वायोगात् पृथक्प्रतीत्या च घटादिसिद्धिः'इति उच्यते; तदा तुल्यम् अभावेऽपि, तस्यापि प्राक्प्रध्वंससद्भावेन पृथक्प्रतीतेः ॥

असति सत्त्वाभावस्य असद्रूपत्वात् अनन्ताधिकरणानाम् अभावत्वकल्पनापेक्षया लाघवाच्च अतिरिक्ताभावसिद्धिः; इत्याशयेन उक्तम् **इत्यास्तां विस्तर इति** ॥

[ १६ भ. विषयः– अस्वतन्त्रतत्त्वविभागनिरूपकटीकाग्रन्थव्याख्याने– तद्विभागपरीक्षायाम्– अभावनिषेधनिराकरणे–

अ) पूर्वोक्तविप्रतिपत्तिप्रदर्शकतया 'अभावः...केचित्'इत्यस्य अवतरणम्, पदार्थश्च ।

आ) तन्निरासकतया 'तदसत् ..अपि स्यात्'इत्यस्य व्याख्याने– १) 'दुरपह्नवत्वात्'इत्यस्य अर्थः । २) 'मात्रेति...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने – क) 'मात्र'पदस्य साकल्यार्थकत्वमभ्युपेत्य उक्तविकल्पयोजना । ख) 'आद्ये घटवत्यपि प्रसङ्गः'इत्यस्य अर्थः । ग) 'अति...दोषः'इत्यस्य अर्थः । घ) 'भावान्तरं...प्रतीतिप्रसङ्गः'इत्यस्य व्याख्याने– १. 'भावान्तर'पदार्थः; २. 'रूप...प्रतीतिप्रसङ्गः'इत्यस्य अभिप्रायः । ३) अभावाधिकरणस्यैव नास्तीतिप्रतीतिविषयत्वशङ्कानिरासकतया 'ननु...प्रसक्तिमदिति'इत्यस्य व्याख्याने– क) शङ्कात्वेन 'ननु...चेन्'इत्यस्य व्याख्याने– १. अवतरणम्; २. 'आत्माश्रयादिप्रसङ्गादिति'इत्यस्य भावः; ३. 'भूतलमात्रे'इत्यस्य अर्थः । ख) शङ्कासमाधायकतया 'न प्रश्न...प्रसक्तिमदिति'इत्यस्य व्याख्याने– १. अवतरणम्, २. अर्थः, प्रश्नस्य पञ्चधाव्याख्यानानुसारेणैव त्रिविधव्याख्यानानुसरणम्; ३. प्रश्नस्योत्तरत्वेन– क. 'द्वितीये घटाभाववदिति'इत्यस्य व्याख्यानम्; ख. 'यदि बुद्धिकृतः'इत्यस्य अर्थः । ४) विपक्षे बाधकत्वेन 'अन्यथा...अपि स्यात्'इत्यस्य व्याख्याने– क) 'अन्यथा'इतिपदस्य अर्थः । ख) 'भावप्रतिक्षेप'स्पष्टीकरणम् ।

इ) तन्निरासोपसंहारकतया 'इत्यास्तां विस्तरः'इत्यस्य अवतरणम् ॥ ]

ताम् एव विप्रतिपत्तिम् दर्शयति **अभाव एवेति** । केचित्– प्राभाकराः ॥

**दुरपह्नवत्वादिति** । अपह्नोतुं= निराकर्तुम्, अशक्यत्वात्; इत्यर्थः ॥

**मात्रेति** । ननु 'मात्र'शब्दस्य कैवल्यं वा साकल्यं वा अर्थः ।, तत्र कैवल्यार्थकत्वम् प्रत्ययस्य स्वार्थिकत्वं वा अभिप्रेत्य 'किं भूतलम् एव उच्यते ?' इति स्यादपि विकल्पः;; 'उतातिरिक्तं किञ्चित् ?'इति तु कथम् ? आद्ये विरोधात्, द्वितीयेऽपि यावद्भूतलस्यैव लाभेन तदतिरिक्तालाभात् । **उच्यते**— साकल्यार्थकत्वमभिप्रेत्यैव अयं विकल्पः ।; न च तथात्वे तदतिरिक्तालाभः, भूतलस्य साकल्यकथने लक्षणाविवक्षायां भूतलातिरिक्तस्यापि अप्रधानतया लाभात् ।, तद्यथा– 'अन्नमात्रं भुक्तम्'इत्युक्ते भुजिक्रियायाम् अन्नेतरस्य घटादेः अप्राधान्यं लक्षणया लभ्यते; तथाच सूत्रे 'प्रतिशेधमात्रत्वात्'

इत्युक्ते विधेः अप्राधान्यं लक्षणया विवक्ष्यते ।, अत एव 'किञ्चित्'इति 'किञ्चित्'शब्दप्रयोगः; इति बोध्यम् ॥,

**घटवत्यपीति** । घटसम्बन्धदशायाम् अपि भूतलमात्रस्य सत्त्वेन 'एतादृशभूतले घटो नास्ति'इतिप्रतीतिप्रसङ्गः; इत्यर्थः ।,

**घटश्चेदिति**[1] । 'घटो नास्ति'इतिप्रतीतेः भूतलम् इव घटः अपि विषयः चेत्, ''घटवति अपि भूतले 'घटो नास्ति'इतिप्रतीतिप्रसङ्गः''इति उक्त एव दोषः; इत्यर्थः ॥ ॥ **भावान्तरं चेदिति** । घटभिन्नं पटादिभावान्तरं चेत्; इत्यर्थः ॥ **रूपवतीति**[2] । यद्यपि पटादि-सप्रतिघ-भाव-पदार्थ-[3]विशिष्टे भूतले 'घटो नास्ति'इतिप्रतीतिः सम्भवति, घटपटयोः सप्रतिघपदार्थ-[4]त्वेन एकस्य स्थाने अन्यस्य अनवकाशात्; तथापि रूपगन्धयोः अप्रतिघपदार्थत्वेन, प्रतियोगिभिन्नपदार्थविशिष्टत्वेन तत्र गन्धो नास्ति'इति प्रतीतिः प्रसज्ज्येत ।, न च 'अस्तु'इतिवक्तुं शक्यम्, घटस्य पृथिवीत्वेन गन्धवत्तया सिद्धत्वात्; इत्यर्थः ।

'ननु अभाववादिभिः यदेव अभावाधिकरणतया अङ्गीक्रियते तदेव 'नास्ति'इतिप्रतीतिविषयो भविष्यति''इतिभावेन शङ्कते **नन्विति** ॥;

**आत्माश्रयादिप्रसङ्गादिति** । भूतले घटाभावसम्बन्धस्य घटाभावसम्बन्धसापेक्षतापत्त्या आत्माश्रयः; घटाभावव्यक्तिभेदाङ्गीकारे अन्योन्याश्रयादिकम्; इति भावः ।,

**भूतलमात्र इति** । घटतदभावाभ्याम् अविशेषिते; इत्यर्थः ॥,

परोक्त-आत्माश्रयादिदूषणानवकाशाय प्रश्नवाक्यार्थम् एव विकल्प्य समाधत्ते **प्रश्न एवेति** ।;

---

१. एकस्मिन्ग्रन्थे **'घटश्चेति** । प्रतियोगी चेत्; इत्यर्थः ॥ ॥ **भावान्तरमिति** । प्रतियोगिभिन्नम्; इत्यर्थः ॥ **रूपवतीति** । यद्यपि'इति पाठान्तरम् ।
२. अस्मिन्पाठे इदं प्रतीकं नोपलब्धम् । ३. 'पटादिमूर्तभाव'इत्येकत्र ।
४. 'मूर्तपदार्थ'इत्येकत्र ।

प्रश्नवाक्यार्थः एव; इत्यर्थः ॥ अत्र 'घटाभाववति भूतले'इत्यस्य 'घटाभावसम्बन्धात्प्राक् घटाभाववति भूतले'इति वा सम्बन्धसमये घटाभाववति'इति वा तात्पर्यद्वयम्, 'घटवति'इत्यस्यापि 'प्राक् घटवति'इति वा 'सम्बन्धसमये घटवति'इति वा सम्बन्धानन्तरं घटवति'इति वा तात्पर्यत्रयं विकल्प्य; 'यद्यभावसम्बन्धात्प्राक् कीदृशं भूतलम्?'इत्यादिविकल्पत्रयोत्थानम्; इति बोध्यम् ।,

**द्वितीये घटाभाववदिति** । न च अत्र आत्माश्रयप्रसङ्गः; पूर्वम् अभाववति भूतले पश्चात् यदि अभावसम्बन्धः स्यात् तदा भवेत् आत्माश्रयः; न च एवम्, अभावतत्सम्बन्धयोः भूतले यौगपद्याङ्गीकारात् । यद्यपि अत्र अभावसम्बन्धाधिकरणताऽवच्छेदकम् अभाववद्भूतलत्वम् एव, तथापि अभावस्य तटस्थतया एव व्यावर्तकतया आश्रयकोटौ अप्रवेशात्; यथा घटप्रागभावत्वादीनां कारणतावच्छेदकत्वेऽपि घटस्य तटस्थतया व्यावर्तकत्वेन कारणकोटौ अप्रवेशः, तथा; इति ।,

**यदि बुद्धिकृत इति** । भूतले घटाभावे विद्यमानेऽपि, यदि भ्रान्त्या घटाभावो नास्ति'इति प्रतीयात्; तदा घटभ्रान्तिं विना तदयोगात्, भूतलं, भ्रान्त्या एव घटसंसर्गवत्; इत्यर्थः ।

**अन्यथेति** । अधिकरणातिरिक्तअभावानङ्गीकारे; इत्यर्थः ॥ **भावप्रतिक्षेप इति** । "घटोऽपि किं घटवति भूतले सम्बध्यते? उत घटाभाववति? नाद्यः आत्माश्रयादिप्रसङ्गात्, न द्वितीयः विरोधात्; अतो वक्तव्यं 'भूतलमात्रे'इति; तदेव अस्तु 'घटोऽस्ति'इतिप्रतीतिविषयः, किं भूतलअतिरिक्तघटाङ्गीकारेण?"इति भावक्षेपोऽपि स्यात्; इत्यर्थः ॥

किञ्च "अभावस्य भूतलस्वरूपत्वे 'भूतले घटाभावः'इतिप्रतीत्यनुपपत्तिः, 'प्रतियोगिप्रतीतिं विना भूतलप्रतीत्यनुपपत्तिः'इत्यादिदोषप्रसक्तिश्च" इत्याशयेन उपसंहरति **इत्यास्तां विस्तर इति** ॥

॥ इति तत्त्वसङ्ख्यानस्य प्रथमपद्यात्मकः **प्रथमो भागः** ॥

